# अष्टांगसंग्रहे

# शारीरस्थानम्

# आयुर्वेदकल्पतरुः

## प्रथमः प्ररोहः ।

आविष्कर्ता

वैद्य पण्डित रामचन्द्रशास्त्री किंजवडेकर

रामचन्द्र-औषधीभवनाध्यक्षः । पुण्यपत्तनम् ।

आयुर्वेदकल्पतरुः - १

पुण्यपत्तनस्थायुर्वेदविद्यालयमान्याध्यापक-पण्डितरामचन्द्रशास्त्रिकिंजवडेकरेण प्रतिसंस्कृतः

टिप्पण्या च परिष्कृतः

महामहोपाध्यायेन्दुविरचितशशिलेखाख्यव्याख्यया समेतश्च

श्रीमद्वाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः।

तस्य

# शारीरस्थानम्

मूलसूत्राणि, शशिलेखाटीका, टिप्पणी, शारीरपरिशिष्टम्,
अष्टाङ्गहृदयशारीरम्, शारीरकोष्ठकानि, शारीरचित्राणि,
मूल शब्द-विषयसूच्यौ, विषयप्रवेशः, निवेदनम्,
इत्यादिभिः सवलितम्।

०

संपादकः

वैद्य पण्डित रामचन्द्रशास्त्री किंजवडेकर

१९३८

चित्रशाला मुद्रणालयः - पुण्यपत्तनम्

## संपादकाः तत्सहायकाश्च ।



वैद्य हरिशास्त्री पराजपे, आयुर्विद्याविशारद — वैद्य पण्डित रामचन्द्रशास्त्री किंजवडेकर, (संपादकः) — वैद्य गणेशशास्त्री मुळ्ये, आयुर्विद्याविशारद



वैद्य ए स काशीकर शास्त्री,
आयुर्वेदतीर्थ (नगर)

श्री

# संपादकीयं निवेदनम् ।

शरीरं सर्वथा सर्वं सर्वदा वेद यो भिषक् ।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम् ॥

—चरक शा ६–१९

अयि ! वाचकमहाशयाः ! करबदरीकृतायुर्वेदसर्वस्वान् पण्डितप्रकाण्डान् तत्रभवतः किञ्चिदिदं सादरमावेदयामि । विदितमेवेदं समेषामायुर्वेदपण्डिततल्लजानां, यत् सूत्रादिषट्स्थानपरिकमितं श्रीमद्वाग्भटाचार्यप्रणीतं, सुप्रसिद्धं च निखिलेऽस्मिन् भारतभूविभागे, अष्टाङ्गसङ्ग्रहाख्यग्रन्थरत्नममूल्यमत्यन्तमुपकारि चायुर्वेदाध्येतृयापकसमुदायस्येति । अमूल्यस्यास्य ग्रन्थरत्नस्य बहोः कालात् पूर्वं मुद्रितस्यापि समयेऽस्मिन् सुदुर्लभतया अध्येत्रादयो नितरां क्लिश्नन्तीत्यतस्तेषां क्लेशपरिमार्जनेनोपकारसंविधानाय सङ्ग्रहमेनं किञ्चिदिव संस्कृत्य पुनर्मुद्रापयितुं मां त्वरयति चेतः इति महानेष प्रमोदः ।

सङ्ग्रहोऽयं क्रमशः सूत्रादिस्थानपरिक्रमितोऽपि विषयशो विभज्यमानः प्रथमं सूत्रस्थानमेवोपस्थापयेदप्यायुर्वेदाध्येतॄणां प्रथमं शारीरस्थानमेवाध्ययनयोग्यं मन्वानः प्रथमं शारीरस्थानमेव मुद्रापयितुमुत्सुकोऽस्मि ।

स्थानेऽस्मिन्—

( १ ) संपूर्णं सङ्ग्रहीयशारीरस्थानं समयोजयम् ।

( २ ) इन्दुविरचितशशिलेखाख्यटीका संयोजिता ।

( ३ ) अष्टाङ्गहृदयं सटिप्पणमायोजितम् ।

( ४ ) शारीरस्थानान्तर्भूतानां विषयाणां यथावद्वगमाय सूत्रमुखेन तदर्थाविष्करणं, शरीरावयवानां शवविशसनादिलभ्यानां पार्थक्येन साक्षादवलोकनं, चित्रकोष्ठकनिरीक्षणं, चेति व्यवहारप्रसिद्धसाधनत्रयमध्ये प्रथमतृतीययोः सप्रमाणं सुविशदं च निरूपणं कृतम् ।

( ५ ) सर्वथा चरकसुश्रुतमूलकस्यास्य सङ्ग्रहस्य प्रतिसूत्रं चरकसुश्रुतवचनसाक्षात्कारमर्मज्ञानाय चरकसुश्रुतवचनानि प्रयत्नेन समासाद्य प्रसूतिशरीरविकृतिविज्ञानात्मकस्यास्य ग्रन्थस्य अन्ते सङ्ग्रहसूत्रनिर्देशपूर्वकं समयोज्यन्त । यतो ह्यध्यापकाः मूलभूतचरकसुश्रुतवचनानां सञ्जातस्मृतयो विनैवायासमध्येतॄणां चित्तं ग्रन्थार्थान् सुस्पष्टमानयेयुः ।

( ६ ) सङ्ग्रहग्रन्थस्यास्य प्रकरणत्वात् चरकसुश्रुतयोस्सर्वेषां वचनानामत्रानन्तर्भावेऽपि विद्वासश्चुलुकीकृतचरकसुश्रुताद्याकरग्रन्था ज्ञानवृद्धा अध्यापकमहाभागा अनन्तर्भूतान्यपि तानि तानि वचनानि समुचिते पुनस्तत्स्थानेषु संयोजयेयुरेव । तथाऽप्यद्यतनाध्यापनपद्धतिपर्यालोचनया तांस्तानंशान् सङ्ग्रहशारीराद्बहिर्भूतानपि विषयसौन्दर्यान्वितान्तमुपादेयानवबुध्य पृथगेवाध्याय सूत्रस्थानादिनिर्देशपूर्वकं ग्रन्थादौ प्रादर्शयम् ।

( ७ ) अधीतसङ्ग्रहशारीराणां विद्यार्थिनां कौतुकायाष्टाङ्गहृदयशारीरं तस्य सङ्ग्रहस्यमूलवचनप्रदर्शिनी टिप्पणी चात्र संयोजिता ।

( ८ ) कालेऽस्मिन् अस्य सङ्ग्रहग्रन्थस्य पठनपाठनादिपरिपाटी प्रायेण व्यलुप्यतेति परम्पराविशुद्धं तत्पुस्तकमपि सुदुर्लभतामेवायासीत् । यत क्लिश्नन्ति नितरां जिज्ञासवोऽपि बहवः ।

( ९ ) सङ्ग्रहेऽस्मिन् सौलभ्येन विषयप्रतिपत्त्यै शारीरपरिशिष्टम्, विस्तृता विषयसूची, सूत्रसूची, पारिभाषिकशब्दसङ्ग्रह इति प्रकरणचतुष्टयमारचय्यायोजयम् ।

( १० ) ग्रन्थादौ च समग्रग्रन्थसारबोधकं ग्रन्थप्रवेशयोग्यतापादकं विषयप्रवेशाभिधं नूतनमेव प्रकरण पाठकाना झटित्यवबोधाय न्ययोजयम् ।

इत्थं दशभिः काण्डैःसमलङ्कृतोऽयं सङ्ग्रहशारीरस्थानाख्यो ग्रन्थ पाठकानां छात्राणा चोपयोगाय भूयादिति सर्वेषामेव भवतां महदिदं प्रमोदस्थानमिति चरितार्थ भवायं मे प्रयत्न ।

एतत्पुस्तकस्य परिशोधनाय विभिन्नदेशीयानि त्रिचतुराण्यादर्शपुस्तकानि सङ्गृह्य तदनुसारेण पाठान्तराण्यपि प्रतिपुटं सङ्ग्रहेऽस्मिन् प्रादर्श्यन्त ।

परिशोधनाय सङ्गृहीतेषु पुस्तकेषु

[ १ ] करवीरपुरनिवासिना राजवैद्यजगतापवैद्यानामायुर्वेदपुस्तकभाण्डारालब्धं मूल मात्रं हस्तलिखितमेकम् ।

[ २ ] मोहमयीनिवासिना वैद्यवर गोपालशास्त्रिणा गोडबोले इत्युपाख्यानां मूलमात्रमतिव प्राचीनं हस्तलिखितं पुस्तकमपरम् ।

[ ३ ] आकाशचन्द्रवसुभूमिते (१८१०) शकसंवत्सरे नासिकक्षेत्रात् तर्टे इत्युपनामक-सखारामतनुजगणेशशास्त्रिभिर्देवधरकुलोत्पन्नभिषक्कृष्णशास्त्रिण. सहायेन परिशोध्य ( प्रकाशितं ) मुद्रितं मूलमात्रमपरं पुस्तकम् ।

[ ४ ] बहोः कालात्प्राक् त्रिचुरपुरात् सम्मुद्य प्रकाशितामिन्दुविरचितशशिलेखाव्याख्या-येपेतमितरत्पुस्तकम् । इत्थमादर्शकोशचतुष्टयप्रदानेन सङ्ग्रहस्य पुनस्संस्करणे सहायभूतानां तेषा तेषा महाशयानामनन्तान् धन्यवादान् सादरमर्पयामि ।

किञ्चिदिदं तत्रभवतो विपश्चिदपश्चिमान् विशेषेणावेदयामि ग्रन्थेऽस्मिन् पुरुषसाधा-रणा दोषाः बहुलमुपलभ्येरन्नपि वाचकमहाशयैर्भवद्भिस्तांस्तान् दोषानेकत्र सङ्कलय्य निवेदितस्य मे तेषां संशोधनं सुकरमिति नास्मिन् पुस्तके तेषां निर्हरणे यत्नो मया विहितः । परं ग्रन्थस्यास्यागामिभागे एतद्भागस्थान् वाचकमहाशयैः प्रदर्श्यमानान् सकलानपि दोषान् संशोध्य शारीरस्थानत्रुटिपूरणीति नाम्ना काञ्चिच्छुद्धाशुद्धपत्रिकां संयोज्य वाचक-महाशयानां मनोरथपूरणेनात्मकृतेः पौष्कल्यमापादयिष्ये ।

किञ्चास्मन्निवेदनमूरीकृत्य ग्रन्थस्यास्यामुखं ( Introduction ) विरचितवता डॉक्टर-G. D. आपटेमहाशयानां ब्रीफ्–फोर्वर्ड्–लेखक रा. वि. पटवर्धनमहाभागानामायुर्वेदसेव-काना च, तथा विषयप्रवेशलेखकानां वैद्यवरगणेशशास्त्रिमुळ्येमहाभागाना, कोष्ठकादिविनिर्माणे सहायभूताना वैद्यवर ह. बा. पराञ्जपेमहाभागाना च, तथा एतद्ग्रन्थसंशोधने प्रारम्भा-दामुद्रणात्सम्भावनया स्वकीयश्रमापरिगणनेनोपकृतवता वैद्यवर--ए. स. काशीकर ( बाबूशास्त्री ) महोदयाना च सर्वदा सर्वथा अयं जनः कृतज्ञ इति क्रियासमभिहारेण तान् निवेदयति ।

सूत्रसूची--पारिभाषिकशब्दसङ्ग्रहकर्तृणामायुर्वेदाभिषक्पदवीभाजां 'विष्णु दत्तात्रेय रानडे,' 'दत्तात्रेय महादेव मुळ्ये' इत्येतेषामस्मत्प्रियच्छात्राणामस्मत्कृताः परस्सहस्रमाशिषस्समुल्लसन्तुतराम् ।

सर्वथा आयुर्वेदमहामण्डलेन स्वकीयप्रतिज्ञानुसारेण ग्रन्थोऽयमायुर्वेदविशारद-परीक्षायाः पाठ्यतया स्थापनीय इति तत्रभवद्भिस्सर्वैरपि महामण्डलस्य नोदनेन सफलयितव्यो मेऽयं प्रयत्न इति समेषां तत्रभवतां विदुषां वशंवदः

ता. ३०-१२-३८ **किंजवडेकरोपाह्वो रामचंद्रशास्त्री**

# An Introduction

*to*

# Ashtang Sangraha.

( Its merit and valuation )

To the historians the Aryan civilisation is as yet on the limits of horizon and as such a riddle as well. Various tracts available from it to this day prompt them to say that the Aryan civilisation if not superior was equal to the present one that is achieved in western countries throughout the last 2000 years. There are, however, several missing links and those make the superficial students declare with impunity that the Aryan culture was but a mere stepping stone to the present edifice. Germans who in their great zeal studied the Aryan Civilisation are left in suspense. The chief reason is that the present workers have a great faith in the efficacy of instrumental aid in solving every problem whether physical or psychical. They refuse to admit that there is something as Metaphysics and do not think on this basis.

It is almost beyond doubt that the oldest Aryans probably lacked in the present day instrumental aids but this is no proof to say that they did lack in straightforward thinking on the basis of clinical findings and arriving at certain propositions which have stood the testimony of time. The works of Charaka and Susruta are the main fountain-heads of the present day Ayurvedic teachings. Both of them record with great respect that the Atharvaveda is the chief source of their teachings. Going into the details one can easily say that either Charaka or Sushruta, according to the current thoughts of their days found it necessary to re-arrange Ayurvedic principles from the manner as laid down in Atharvaveda. Coming to later times we find that Vagbhatta ( A. S. ) gave still another turn to the arrangement. Deleting a good deal of the psychiatry and Metaphysics from Charaka and Sushruta, Vagbhatta ( A. S. ) described Ayurvedic principles in a more gross form and arranged his chapters in a consise but comprehensive manner. Thus the book could be used as a text both for the beginners and those that could not or did not wish to soar high in the mysticism of the Art of Healing. It can be used even to this day as a text book for the budding practitioner, who has to be grounded in the basic tenets of both Medicine and Surgery. After a preliminary study of this book the student can specialize in

one of the branches,-medicine or surgery-by having recourse to Charaka or Sushruta. From this point of view-the present need of teaching separate subjects of the Healing Art Ashtang sangraha is preeminently suited to achieve the end. The Old Samhita as it stands, however explicit, is rather concise from the point of present needs.

The present need of changing the time honoured method of teaching Aryan Medicine is certainly a pressing one. It is a decisive outcome of the rapid inventions of instrumental aids and a consequent increasing materialistic point of view in every walk of life The inventive genius of the western people have made them discard their own time-honoured Hippocratic or Galenic points of view in the domain of Medical Science It is no wonder that the East closely associated with West for the last few centuries is looking to its own old lore with a similar eye. But unfortunately the East is neither inventing something new, nor re-searching the old treasures and keeping apace with the West. Researching is easier but then sentiment should not be allowed to run high in the domain of physical sciences It would be a great credit to us if we can darn the old but very useful garment with the new thread.

I have been striving for the last several years to make the Vaidyas realise the intensive utility of this book in present times Its conciseness can be extended by a number of additions, but before that, it was quite necessary to show by references from other Ayurvedic books, that the conciseness of the Astangasangraha is comprehensive as well. It is a labourious but highly useful task and my friend Pt Ramchandra Shastri Kinjawadekar grasped the idea in time and has carried it out pretty early and with some distinction as well.

Not only that he has analysed Ashtang-sangraha thoroughly, but he has also given profuse cross references from Charak, Sushruta and Ashtang-Hridaya This would help the teacher enormously As yet there has never been published such a neat, nice, profusely illustrated edition of Ashtang-Sangraha and I doubt if there would be one for many years to come. Not only teachers but research workers would be very grateful to the editor for the spade work that he has done With such an edition by the side and a peculier line of thought in the head, a reasearch worker would be able to unravel the tenets of Aryan medicine which have been a riddle even to the indefatigueable workers either in the East or West The editor has spared no pains to dig out and properly allign all the relevent references in the form of tables, pictures etc. The peculiar line of thought mentioned above could not be possibly encompassed in this short note. However, if this work appeals to the

public thirst of 'understanding' Aryan medicine, later on a work elucidating that line of thought could be laid before the public

This understanding of Aryan Medicine or as a matter of fact any medical system extant anywhere in the world is chiefly based on the pharmacology of the Materia Medica' utilised No Medical System differs so far as the manipulation or hand-work is concerned as for instance in surgery, mid-wifery or such other branches The angle of vision varies greatly in explaining how the life-process retaliates when brought into association with any substance Owing to the quality of the resultant action the substance is termed as food medicine or poison It is this angle of vision that has given birth in almost all countries and ages to different 'pathis which can be termed into three main groups viz Allopathy Antipathy and Homeopathy The present routine royally protected system is not now real allopathy as designated by Hahnemann the founder or rather the greatest propagator of Homeopathy It is the bounden duty of every follower of Aryan Medical system to accept all the current manipulative work and find out which of the above pathis and to what extent it inculcates Ashtang Sangraha with its clear-cut passages offers help to the unbiased student to find this line of thought' Thus the utility of this unique work can never be set aside

Whether Ashtanga sangraha is a recent or remote work one need not waste time over that question so long as one admits that it is a work pre eminently suited to satisfy even the present day need of teaching Aryan medicine piecemeal-by subjects I hope that my own idea of bringing to the forefront this old nucleus, materialised by my friend, Pt Ramchandra Shastri will be sufficiently and fully followed up by the ardent students of Aryan Medicine The medical upto-date literature of West shows that sooner or later they would have to inculcate phychiatry in the medical curriculum and lessen their intense reliance on instrumental aids Signs are already evident in Western Medicine that the followers of that system would have to seriously consider in the interests of Humanity some peculiar premises as ' Suppression of Disease ' and some others which are a part of the backbone of Aryan Medicine It is high time that the would-be followers of Aryan Medicine without being irrational about the new instrumental aids keep themselves alive to the fact that the old medical literature is pregnant with something highly valuable Even now a spec of most valuable radium has to be obtained out of tons of seemingly worthless earth It is labour and not idleness that enlivens life

786 Sadashiv Poona 2<br>25th December 1938

**G D Apte,**<br>M B B S

# A brief foreword.

( **Ramchandra V Patwardhan,** B A , LL B , Ayurved Sevak )

At the persistent request of my friend Pandit Ramchandra Shastri Kinjawadekar I have prevailed upon myself to write a brief foreword to the present portion of the **Magnum Opus** which he is endeavouring to accomplish with all the means at his disposal The part which he has now presented to the public and particularly to the students of Ayurvedic medicine relates to Sarira ( or human embryology and anatomy ) which forms an indispensable introduction to Ayurvedic Physiology. The work is written by **Vagbhat** one of the most eminent of ancient physicians, who calls himself son of Sinhagupta The author is popularly known as **Vriddha Vagbhata** or **Vagbhata I** whose work the Auyrvedists honour as being one of the three enduring pillars which the ancient Ayurvedic lore is known to rest upon The two remaining pillars are the work of Atreya Punarvasu which is better known under the name of its redactor **Charaka**, and the work of **Susruta** The former is a veritable cyclopædia of the science, practice and philosophy of Ayurveda, while the latter or the work of Susruta is a compendium of Ayurvedic Surgery and mid-wifery The treatment of the subject by Charaka is not suited to beginners It is discursive and at the first sight appears so disconnected that the beginner finds himself at sea Vagbhata has introduced a distinct method and clearly perceivable system in his work. Though Vagbhata has adopted the teachings and doctrines of both Charaka and Susrut-as his basis, he has given such a clear-cut treatment to his subject that the student comprehends it readily and is always able to rely upon the knowledge thus acquired without suspicion and fear It may safely be said that Vagbhata has cleared the way where formerly there were mazes and pitfalls which only a close study could remove This is one of the reasons why Vaghbhat **I** was studied with so much confidence that by common consent he has been granted a place of honour as a great master along with the imperishable names of Charaka and Susruta It would be a disaster if modern students neglected to follow in the footsteps of Vagbhat **I.**

Vagbhata has no doubt ushered a good many improvements in the technique as well as the theory of Ayurved. He has also formulated a

number of recipes of his own so that his addition to the Ayurvedic lore has been both original and useful In that part which is styled Sarira he unlike Susruta has placed embryology in the beginning which to a modern reader would appear more appropriate But in his osteology he has followed the more ancient school which differs from Susruta by including the teeth, the sockets the nails etc in their counting of bones so as to make them conform to the number laid down by the commentators on the Vedas The School which Susruta represented was the school of surgeons who had given the subject a more scientific turn so they had to discard not less than 60 of the so called bones The most difficult portion of the anatomy of Susruta is his distinction of the Snayus from Peshis, and his division of the Siras with four classes and Vagbhata it may be said to his credit ha followed the eminent surgeon with so much accuracy and intelligence which hardly any subsequent author has shown I have therefore, no hesitation in saying that if this invaluable work is not studied in the first instance the works of Charka and Susruta would cease to be properly understood

The style of Vriddha Vagbhata is not rough and rambling, or archaic like that of Charaka It is polished but not so terse and poetic as that of Ashtang Hridaya Vriddha Vagbhata is not a compiler merely he has in a number of places put forth his own views or differed from his predecessors

It cannot be stated with certainty the date or the period when Vagbhata I flourished His reference to the S'aka Kings and to the kingdom of Sind which at the time was not overrun by the Moslems points to a period when the Baudhas and Vedic Hindus had evolved a tolerant sprit, and we may therefore place him in the 4th or 5th century A C at the latest, and we should be prepared to accept a date which is even prior to the period suggested

Now a few words about the present edition of this eminent work which Pandit Ramchandra Shastri has by a stroke of good fortune felt the need of publishing The strenuous labours of the editor are too prominent to be exaggerated He has spared no pains to make it entirely useful as a book of reference Each passage in the work is printed as a separate clause and numbered to facilitate reference and comparative study Notes have been added in Sanskrit where the text or the commentary appeared difficult to be understood by the modern student Indu the celebrated commentator has left nothing to

be desired, but we are now separated from the time of Indu by a vast difference of time and social conditions which have created new difficulties which did not then exist.

But the most laudable but none the less laborious part of the edition is the work of finding cross references to the parallel passage in Charaka and Susruta It is not possible to realize the vast amount of pains, patience and perseverence which this tortuous task must have exacted from the editor He had to trace every passage in Vagbhata to its source in the scattered discoursss of Charaka and Susrata, and such a hunting compaign for each reference must really have been very trying and exhausting. But the success thus achieved has elevated the edition to such a position as can scarcely be rivalled at least for some generations to come. Thus the three prime pillars of Ayurveda have been co-ordinated for the Ayurvedic students whose best regards the editor so rightly deserves

### संग्रहस्य शशिलेखा व्याख्या ।

तस्यास्य सर्वजनोपयोगिनः प्रकरणग्रंथस्य सारगर्भितस्य भावाववोधक्षमाऽद्यत्वे केवलमेकैव शशिलेखाभिधाना महामहोपाध्यायेन इन्दुना विरचिता व्याख्या वरीवर्ति। इदो. प्राक्तना. संग्रहव्याख्या अनेका अवर्तन्त, परं ताभिर्वाहटस्योक्त्यो विपसमूर्च्छिता इव सजातमालिन्यो मूलादपि दुरवगाहार्था सपन्ना । इति हेतोर्महामनीषिणा इन्दुना तदोपानिरासाय शशिलेखा व्याख्या प्रणीतेति-

**दुर्व्याख्याविषसुप्तस्य वाहटस्यास्मदुक्तयः ।**
**सन्तु संवित्तिदायिन्यः सदागमपरिष्कृताः ।**
अ सं. सू १ । १

इति संग्रहप्रथमपद्यशशिलेखोक्तपद्याज्ज्ञायते । यथा हि श्रीमद्भगवद्गीताभाष्ये भगवच्छ्रीशंकराचार्यचरणैरभ्यधायि ‘ तदिद गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूत दुर्ज्ञेयार्थं तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमपि अत्यतविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याह विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरण करिष्यामि ’- गी शा भा १-१ इत्यादिप्रबंधेन स्वात्मन. प्राक्कालिनाना भगवद्गीतासु विरचितानां दुर्व्याख्याना समुल्लेख. कृतो दृश्यते । तथैव ‘दुर्व्याख्येत्यादि ’ पद्येन इन्दुनाऽऽत्मन प्राक्कालीनाना संग्रहोपरि रचिताना दुर्व्याख्याना सद्भाव. सुस्पष्टतया समुल्लिख्यते । एतेन इंदु. संग्रहकर्तुर्वाग्भटस्य साक्षाच्छिष्यैवासीदित्येतत्केषाचिन्मतमपि कटाक्षितं भवति ।

### अष्टाङ्गसंग्रहस्य रचना ।

श्रीमता वाग्भटाचार्येण निर्मितोऽयमष्टागसंग्रह. सूत्र-शारीर-निदान-चिकित्सा-कल्पोत्तरस्थानैर्विभक्तस्तथापि निखिलायुर्वेदशास्त्रस्य प्रवेशद्वारतया प्रथम पडित रामचद्रशास्त्री किंजवडेकरमहोदयैः शारीरस्थानमेव प्रकटी क्रियते इत्येतत्समुचितमेव ।

### शारीरस्थानम् ।

अस्मिन् शारीरस्थाने सन्ति द्वादशाध्याया. प्रसूति-शारीर-विकृतिविज्ञानात्मकैस्त्रिभि. स्कंधैर्विभक्ता. । तत्रादिऽमेऽध्यायचतुष्टये प्रसूतितन्त्रम्, द्वितीयेऽध्यायचतुष्टयेऽङ्गविभागादिप्रकृतिविभागान्तं शारीरम्, तृतीयेऽध्यायचतुष्टये रिष्टरूप विकृतिविज्ञान च समुपवर्णितम् । यद्यपि शारीरस्थाने शरीरवर्णनात्मके प्रसूतितत्रस्य रिष्टरूपविकृतिविज्ञानस्य च प्रयोजन नातीव सदृश्यते, तथापि शरीरस्य विवेचन तदुत्पत्तित एव क्रियमाण सत्साकल्येन परिज्ञातं भवेत् । तथा च तस्य मरणकालवर्तिन्यवस्था किदृशी भवतीत्येतस्मिन्नपि परिज्ञाते सर्वावस्थोपेतस्य शरीरस्य यथार्थतो ज्ञान भवेदिति निश्चित्य ग्रंथकर्त्रा प्रसूतितंत्रं, रिष्टरूपविकृतिविज्ञानमित्येतद्द्वयमपि शारीरस्थान एव समुपवर्णितम् । स्पष्टं चैतत्—

इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।
शरीरस्य ततः स्थानं शारीरमिदमुच्यते ।

इति शारीरशब्दविवृतिप्रसङ्गेनोदाहृतेन, शारीरस्थानान्तिमपद्येन । एवमुपोद्घातत्वेन सामान्यत एतद्ग्रंथबहिर्भूताशान्विलिख्य -स्कंधत्रयोपेतस्य शारीरस्थानस्य संक्षेपतो विवेचन कुर्म.-

### ( १ ) प्रसूतितन्त्रम् ।

चतुरध्यायात्मकमिद प्रकरणम् । अत्र प्रथमेऽध्याये उद्वाह्ययोर्यो स्त्रीपुंसौ, दपत्योः सगमकाल., शुक्रार्तवयो. प्रकृतविकृतस्वरूप, तच्चिकित्सा, ऋतुमतीनियमा., पुंसवनविधिः, गर्भिणीपरिचर्या, गर्भस्वरूपमित्यादयो विषया वर्णिता. ।

### आर्तवविचारः ।

अत्रार्तवविचारे क्रियमाणे रक्तमेवार्तवमिति स्पष्टतया कथयित्वा तस्य पुराणनवीनमिति भेदद्वयेन वर्णन कृतम् । मासेनोपचितमार्तवं पुराणमित्यभिधीयते । तद्धि मासात्मकेन कालेन गर्भाशये धमनीभ्या संचयं प्राप्नोति । मासान्ते च दिनत्रय यावद्गर्भाशयत. गर्भकोष्ठ प्राप्य योनिमुखेन बहिस्स्रवतीति च स्पष्टतया वर्णितम् । एतत्पुराणार्तव गर्भोत्पादनासमर्थम् । नवीनार्तवमेव गर्भोपयोगि ।

### गर्भसंभवकालः ।

प्रातिमासिकार्तवस्रावात्पर सामान्यत. पुनरार्तवस्रावावधि गर्भसभवकाल । तथापि ऋतुमत्याश्चतुर्थदिनात्प्रभृति षोडशदिनं यावदवशिष्टा द्वादश निशा एव गर्भोत्पत्तेरभ्यर्हिताः, तथापि आदिमरात्रित्रयापेक्षया उत्तरा नव रात्रय एव यथोत्तरं प्रशस्ततरा इति संग्रहकारस्य मतम् । षोडशरात्रात्परं सायकालीनपद्मसंकोचवद्गर्भाशय. संकोचमायाति । तेन तत.प्रभृति गर्भस्यासभवो भवितुमर्हति इति आचार्याणा मतम् ।

### जननेन्द्रियचिकित्सायामुत्तरवस्तेःप्राधान्यम्

विकृतशुक्रार्तवयो स्त्रीपुंसयोरुचिते काले संगमेऽपि शुक्रार्तवदोषादपत्यमार्गगर्भाशयादिविकृतेर्वा गर्भासंभवोऽन्ये वेदनाजका विकारा वा भवन्ति। तत्र उत्तरबस्तिप्रधाना चिकित्सा कर्तव्या । तद्विषयका योन्यादिषु घृततैलपिचुधारणधूपनादयश्चिकित्साप्रकारास्तत्संबंधीनीतराणि द्रव्याण्युत्तरबस्तियंत्रादिचिकित्सासाधनानि चायुर्वेदे सप्रपञ्चं प्रोक्तानि ।

### गर्भनिदाने दाक्ष्यम् ।

गर्भनिदानप्रसगे वैद्येन तल्लक्षणसदृशलक्षणाना रक्तगुल्मोदरादिविकाराणा भेदास्तत्तल्लक्षणैस्तयोरुपशयानुपशयाभ्यां वा परीक्षणीया । नो चेत् गर्भगर्भिण्योर्महती हानि.संपद्यते इत्यय विषयोऽपि विशदीकृतः ।

एवमादिभिर्भूयोभिर्विषयै. प्रथमोऽयमध्यायः परिसमापित. ।

## द्वितीयाध्याये प्रतिपाद्यांशा

द्वितीयाध्याये गर्भावक्रान्तिर्निरूपिता । तत्र गर्भोत्पत्तिप्रकारः, अनेकापत्योत्पत्तिकारणं, सद्यो गृहीतगर्भाया लक्षणं, गर्भप्रकारः, गर्भपोषणो पयोगिनः शारीरावयवा, गर्भिण्या द्विहृदयत्वं, गर्भपोषणक्रम, विकृतगर्भोत्पत्तिकारणानि, गर्भो पघातकरा भावा, गर्भिणीविकारे चिकित्सा इत्यादयो विषया प्रतिपादिता ।

तत्राऽऽदौ गर्भोत्पत्तिप्रकारं संवर्ण्य तस्य प्राति मासिकीं वृद्धिं जरायूत्पत्तिं च समवदद् ग्रन्थकार । गर्भस्य प्रतिमासिकवृद्धिवर्णनप्रसङ्गेन इत्थावस्थोपेतस्य गर्भस्य निषेकात्प्रभृति उपस्नेहस्वेदाभ्यां पोषणं भवति ततो ऽवयवता प्राप्तस्य तस्य मातुराहाररसात् नाभिनाड्या सम्प्राप्त पोषणम् । एतत्पोषणकथन प्रसङ्गेन मातृहृदयं, धमन्य, गर्भाशय, अपरा, गर्भ नाडी गर्भहृदयम्, इत्याद्यवयवानामपि प्रसङ्गाद्वर्णना वर्तते ।

## तृतीयेऽध्याये

गर्भधारणात्प्रसूताभिधानत्वं यावत् क्रिया नियमा उक्ता । तत्र प्राय प्राकृतावस्थाया एव नियमाना समुद्दिष्टा । प्रकृतगर्भिणीपरिचर्या, प्रकृतप्रसव प्रकृतप्रसवावस्थोपेतावस्थाविषयान् सप्रपञ्चस्वरूपम्, प्रसवोपाय सूतिकागारस्वरूपं, प्रवाहणनियमा, प्रकृतप्रसवक्रम, अपरापात, मक्कल्लशूल योनिभ्रंश एषां चिकित्सा वर्णिता ।

## चतुर्थेऽध्याये ।

परिहार्या यासेवमानाया गर्भिण्या पुंस्त्वदश नादिविकारे चिकित्सा गर्भस्राव, गर्भपात, उपविष्ट कम्, नागोदरम्, लीनगर्भो मृतगर्भो मूढगर्भश्चैत्य तान् हेतुलक्षणचिकित्सापूर्वकं वर्णयित्वा तत्प्रयुक्ता शूलादारतादीन् गर्भिणीपद्रवान् चिकित्सासहिता नवाब्रवीत् । तथैव मृतगर्भिण्या उदरपाटनपूर्वकं जीवद्गर्भाहरणमपि कथितम् ।

## प्रसूतितन्त्रोपसंहार ।

एवं चतुर्भिरध्यायैः समग्रं प्रसूतितन्त्रं वर्णयाञ्च कार महामनीषी वाग्भटाचार्य । विंशत्युत्तरद्विशतात्मक सूत्रसमष्टौ अपि विषय समग्रता ग्रन्थकारस्य पर कौशलं सूच्यते । यद्यपि साम्प्रतिकपाश्चात्यप्रसूतितन्त्रमतापेक्षया पावरशारीरं दृश्यते । तथापि भारतीयसंस्कृतभाषाया कलाप्यपूर्वं वर्णनसुचारु कृतं अल्प । वर्णनात्मकेन सूत्रविरचनप्रधानेन सर्वोऽपि विषया यथास्थानमेव विशादम प्रति निवद्ध् सुस्पष्टतया सुसग्रहीता दृश्यते इति महत्कौशलम् भारतीयसंस्कृतभाषाग्रथनपटूनाम् । किंचास्मिन् प्रसूतितन्त्रे ज्वरादयोपार्णं तद्धिकृतिनिर्वर्तनादि कौमारभृत्यपरनामधेयं बालतन्त्रं नाम्नानम्

एवमत । तस्यादौ चिकित्सादाम्न एव परिगणनात् प्रसूतितन्त्रापेक्षया विस्तरपाठेपर्ण वर्तते । अत एव श्रीमता वाग्भटेन उत्तरस्थाने तत्स्वरूपमेव प्रतिपाद्य प्रसूतितन्त्रे कवल तन्निर्देश एव कृतो दृश्यते । अत कौमारभृत्याजिज्ञासुभिस्तत्रैव ( उत्तरे स्थाने ) द्रष्टव्यम् । तथा च मूढगर्भवर्णनप्रसङ्गप्राप्ता शस्त्रचिकित्सा मुक्त्वा तत् शल्यनिर्हरणप्रकारोपयोगीनि शस्त्रयन्त्रादीनि विस्तारेणोक्तानि । नैवात्र समुद्दिष्टं नत् । सूत्रस्थाने शल्यतन्त्र विभागे एव वर्णितत्वात् । तथा च प्रसूतितन्त्रात् पातिनी पञ्चकर्मादिचिकित्साऽपि पृथगत्र तन्त्र प्राप्ता,सा तत एवावगन्तव्या, इत्यादिभि कारणं प्रसूतितन्त्रमिदं समासेन संगृहीतमिति भाति । शारीरस्थानं यद्यपि शारीरवर्णनपरमेव, तथापि " सगृहीत विज्ञान यत्र कायचिकित्सार्थ " इति सूत्रस्थानोक्तनिदर्शनास्मिन् स्थाने पि चिकित्सा स्थाने स्थाने समुपवर्णिता दृश्यते । नागोदरोपविष्टकयो नकरणं निदर्शनायात्रालं स्यात् । पुराकाले आयुर्वेदशास्त्रे नवयवमहन्ता चार्षोक्ता इति नामासीत् । सामान्यत परिचारिकाव सम्बन्धस्य इमा सूत्रो विभिन्ना एवाम सिति भाति ।

## (२) शारीरम्

अथास्य स्थानस्य पञ्चमप्रभृत्यष्टमाध्याय यावत् चतुर्ष्वध्यायेषु समग्र शारीरं सुनिरूपितप्रायम् । तत्रैतस्य पुनरयं प्रविभागः-

एवं त्रिंशत्संख्याकैरवयवैः शारीरं वर्ण्यते । तत्र दोषधातुमलानां सूत्रस्थाने सविशेषं साङ्गोपाङ्गविवेचनं कृत्वा इतरेषां शारीरावयवानां व्याकरणमस्मिन्भागे क्रियते । शारीरविभागेऽस्मिन् पञ्चमषष्ठसप्तमाध्याया अङ्गसिरामर्मव्याकृतिपरा वाग्भटेन सौश्रुतधोरण्या एव विरचिताः । अतः ' शारीरे सुश्रुतः श्रेष्ठः । ' इत्याभाणकोक्तिरस्मिन्ग्रन्थेऽपि यथायथं परिपालिता दृश्यते । यत्र वाग्भटस्तत्र चरकसुश्रुतहारीतकृष्णात्रेयाणां सर्वेषामपि मतेषु समैत्राभिरुचिस्तत्र तत्र तत्तन्नामोल्लेखपूर्वकं तत्तन्मतोपन्यासमेष करोति । त्वचः, धातुपोषणक्रमः , द्विविधरिष्टलक्षणमित्यादिस्थलानि निदर्शनार्थमवलोकनीयानि ।

## शारीरा अवयवाः

शरीरमिदं त्रिंशदवयवोपेतं षड्भिरवयवैर्विभज्यते । तत्र शरीरमध्यः (अन्तराधिः) सर्वाङ्गेषु प्रधानम् । पञ्चदशकोष्ठाङ्गानामाश्रयत्वात् । बाहू, सक्थिनीति चतस्रः शाखाः, षष्ठं पुनः शिरः सर्वगात्रेषु मूलम् । अत्रान्तराधौ-१ उदरम् २ उरः ३ द्वे पार्श्वे ४ जघनम् ५ पृष्ठमेकम् ६ श्रोणिश्चेति षड्भागाः । तत्रापि पश्चात्पृष्ठवंशेन पुरतश्च रोमराज्या वामदक्षिणभेदेन द्वादश विभागा भवन्ति । यथा दक्षिणपार्श्वं वामपार्श्वं, वामस्तनं, दक्षिणस्तनं, वामवृक्कः, दक्षिणवृक्कः इत्यादयः । एवमादीन् प्रत्यङ्गभेदान् स्वीकृत्यैव सिरामर्मणां विभागास्तत्र क्रियन्ते ।

## कोष्ठाङ्गानि तदुपाङ्गानि च

अस्मिन्नन्तराधावेव सप्त आशया वर्णिताः । यथा-रक्ताशयः, पित्ताशयः, कफाशयः, आमाशयः, पक्वाशय (मलाशयः), वाताशयः, मूत्राशयः, स्त्रीणामष्टमो गर्भाशयः इति । एष्वाशयेषु हृदय, नाभि , क्लोम, यकृत, प्लीहा, वृक्कौ, उण्डुकम्, उत्तरगुदम्, अधरगुदम्, क्षुद्रान्त्रम्, स्थूलान्त्रम्, वपावहनं चेमानि कोष्ठांगान्युपबद्धानि सन्ति । तत्र उण्डुकं नाम पक्वाशयाश्रिता पुरीषधरा कला । अत्र पुरीषशब्दः किट्टमूत्रयोस्साधारणः । पुरीषधरया कलया उण्डुकस्थमलविभागात्परं मूत्र (द्रवावस्थो मलः) किट्टं (घनो मलः) पृथग्भवति । ततः किट्टं बृहदन्त्रमार्गेण उत्तरगुदं याति, उत्तरगुदं नाम यत्र पुरीषमवतिष्ठते । स स्थूलान्त्रस्य चरमो भागः । मलाशय इति यावत् । अधरगुदं नाम वलित्रयात्मकं गुदम् । वपावहनं नाम-' मेदःस्थानं तैलवर्तिकेति ख्यातम् ' इति चक्रपाणिः (च. शा. अ. ७-१० ) । मेदोवर्तेस्स्थानम्-' स्थानं तु तस्याः पठन्ति यत्पक्वं कोष्ठगतं नराणाम् ' इतीन्दुटीकायाम् ( सं. उ अ ३१ ) । षट्पञ्चाशत्प्रत्यंगानि षट्स्वङ्गेषूपनिबद्धानि चरके गदितानि ( च. शा ७-११ ) तत्र द्वे उत्ते ( कक्षशिरोपार्श्वयोर्निम्नभागौ ) । द्वे सृक्कण्यौ ( वदनान्ते ओष्ठप्रान्तौ ) इत्यादीनि, तानि तत्रैवावगन्तव्यानि ।

## सिरा धमन्यः स्रोतांसि च ।

अष्टांगसंग्रहशारीरे षष्ठाध्याये सिराः, धमन्यः, स्रोतांसि, अस्थ्यः, धातुपोषणक्रमश्चेत्येतेषां विषयाणां प्रपञ्चो वाग्भटेनाकारि । तत्र शिराधमनीस्रोतश्शब्दैः के अवयवा निर्दिश्यन्ते तदवलोकयाम.-

अष्टांगसंग्रहशारीरस्थानेऽध प्रदर्शितरीत्या शिराधमनीविषये वचनानि समुपलभ्यन्ते ।

१ दश मूलसिरा हृदयप्रतिबद्धास्सर्वांगप्रत्यंगेष्वोजो नयन्ति । तत्प्रतिबद्धा हि शरीरचेष्टाः सू ३५५

२ सिराधमनीमुखानां त्वणुशो विभज्यमानानां .. ... . . . . .... ....

इदं शरीरं गवाक्षितमाततं च सू ३३४

३ तासां हि मुखानि केशश्मश्रुलोमानि । तत्प्रतिबद्धान्यतस्तानि ताभिराप्यायन्ते । सू ३३७

४ ताभिः ( धमनीभिः ) कायोऽयमाराम इव जलहारिणीभिः केदार इव कुल्याभिरुपस्निह्यति । सू. ३८४

५ तत ( सिरा ) प्रतिबद्धा हि शरीरे चेष्टाः सू ३३५

६ तासामूर्ध्वगा हृदयमभिप्रपन्ना .

अष्टाभिः (धमनीभिः) शब्दरूपरसगंधा गृह्यन्ते सू ३८८

७ द्वे सिरे रसवेदिन्यौ, द्वे गंधवेदिन्यौ सू ३७२-३७३

८ ताः सिराः स्पर्शंच गृह्णन्ति ... ..

लेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति सू ३३७

१० द्वे द्वे धमन्यौ वातपित्तकफरक्तरसान् वहतः सू ३८८

एभिर्वचनैः सिराधमन्यश्च वातपित्तकफरक्तरसान्वहन्ति ज्ञानं च गृह्णन्ति इति आपाततोऽवलोकनेऽपि दृश्यते । अत्र इन्दुः एवमाह-

१ सिराः नातिस्थूलाः रज्ज्वाकारा अन्तस्सुषिराः वातादि [ वातपित्तकफरक्तरस-

वहा ] वहा धमन्यस्तु तद्विशेषा एव ।
[ सू ३३५ टीका ]

२ सिराधमनीना मुखानि सर्वत्र प्रसृतानि [ सू ३३७ टीका ]

३ धमन्यो विशिष्टा सिरा एव [ सू ३८३ टीका ]

एभिर्वचन धमन्य सिराश्च रसरक्तादि वहन्ति, ज्ञान च गृह्णन्ति इति सूच्यते । अन्यच्च-

तत्र स्रोतसामेव विशेषा सिराधमन्य
[सू १८४१७]

इत्यनेन सिराधमन्यो स्रोतोविशेषत्वमपि श्रूयते । तेन सिराधमनीस्रोतांसि एकत्रैव सहोषा[?] रितानि भवन्ति तदा तेषा को भेद ? इति प्रश्न पुरत तिष्ठति । तत्र सर्वेषा सामीप्यात् वहनधर्मेण एकरूपत्वेऽपि तस्य भेदोऽपि स्पष्टं प्रकाशते यथा- सिरासु सरणम् ( सरणात् सिरा ), धमनीषु ध्मानम् ( ध्मानाद्धमन्य )' स्रोतस्सु स्रवणम् ( स्रवणात् स्रोतांसि ) इति । तत्र सरणं नाम जलनलिकाया यथा जलस्य निर्विष्पन्द सरणं भवति तथैव सिरासु वातादे सरणम् । धमनं नाम सस्पन्दं वातादे गमनम् । स्रव नाम अपक्वघटात् सलिलस्येव वातादीना स्यंद । एव सामीप्यवहनाभ्या सामान्येऽपि सिराधमन्यादौ सरणादिभिःप्रातिस्विक व्युत्पत्त्या मिथो भेद स्पष्टो भवति । तथा च सिराव्यधप्रकरणे शाखासिराव्यधे सिराव्यधात्प्राक् वेधस्थानोपरि बन्ध कर्तव्य इत्युक्त सुश्रुतेन (सु शा ८) । तथा च सर्पदष्टचिकित्सायामपि नाडीषु दष्टे दंशस्योपरि बध्नीयात् इत्युक्तम् । तत्रोभयत्रापि दूषितरक्तस्य सिराद्वारा हृदयमभिप्रपन्नस्य निरोधनमेव हेतु । एतेन सिराभि वातादि कोष्ठे नीयत इति सिध्यति । हृदयस्था सिराया स्पन्दनस्याप्यनुपलभ्यमानत्वात् इयं सिरैव इति निश्चयेन वक्तुं शक्यते । तद्भिन्ना हृदयाच्छाखासु वातादिवहा या स्पन्दमाना सिरास्ता धमन्य इति निर्विवादम् । एव स्रोतसामपि सिराधमन्यपेक्षया सूक्ष्मत्वात् स्रवणकर्मत्वाच्च भेद ऊह्य ।

### अरुणा नीला गौरी रोहिणीत्यादिशब्दानामर्था ।

अष्टाङ्गसङ्ग्रहोऽयं सर्वात्मना चरकसुश्रुतानुकारप्रन्थानुपजीव्य समथितोऽपि क्वचित्क्वचित् मूलेऽप्रापतत[?] प्रतीयमानान् सन्देहभ्रमादिदोषानपि दूरीकरोति । उक्तं च तद्वा भटेन—

विनिगूढार्थतत्त्वानां प्रदेशानां प्रकाशकः
स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्तकः ।
अ स सू १६

एतादृशानि भूयांस्युदाहरणानि चरकसुश्रुतयोर्वर्तन्ते । तेष्वन्यतममेवोदाहरणं प्रदर्श्यते- सुश्रुतशारीरे सप्तमाध्याये ' वातवाहिन्य सिरा एकस्मिन् सक्थ्नि पञ्चविंशति , एतेनेतरसक्थिबाहू च व्याख्यातौ' एष एव विभाग शेषाणामपि । विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश कर्णयोर्द्वे एव रक्तवहा कफवहाश्च, (सु शा ७ ७)। एव वातपित्तकफवाहिनी सिरा उक्त्वाऽनुपदमेव—

न हि वात सिरा काश्चिन्न पित्तं केवलं तथा ।
श्लेष्माणं वा वहन्त्येता अत सर्ववहा स्मृता ॥
(सु शा ७ १६)

आपाततो विलोक्यमान साश्रुतग्रन्थोऽयं परस्परविरुद्ध इव आभाति । परं वस्तुतो विचार्यमाणे सिराभि वहन्तो दोषा रक्ताश्रया एव वहन्ति । न केवला । इदमाकूतं भगवान् सुश्रुत - नहि वात सिरा काश्चित् इत्यादिना प्रबन्धेन वर्णयाञ्चकार। आपाततः प्रेक्षकाणां भासमानस्वतन्त्रविरोधं परिजिहीर्षया येन वाग्भटेन शारीरस्थाने-' तासां यथास्वं तुर्यांशेन [illegible] भागेन पञ्चसप्तत्यधिकं शतमनिलवहं वहति । एष विभाग पित्तश्लेष्मरुधिरवाहिष्वपि " (अ सं शा ३७७) इति वदता सोऽयं स्वतन्त्रविरोध [illegible] खण्डित । अर्थात्-अस्मिन्नापाततो भासमाने विरोधे परिहृत 'तत्र वातवहा ' इत्यादिना साश्रुतग्रन्थेन प्रदुष्टदोषवहाना सिराणामेव [illegible] नीला,गौरी, रोहिणी इत्यादीना विशेषणवाचकाना शब्दाना सङ्गतिरपि सुस्पष्टं प्रकाशते।सुश्रुतोक्तधमन्यध्याये वर्णिता धमन्य सिरावदेव ज्ञानं गृह्णन्ति, कर्मसु प्रेरयन्ति, वातपित्तकफशोणितरसान् वहन्तीति बोद्धव्यमिति दिक् ।

### सप्तमेऽध्याये

सुश्रुतघोरण्या मर्मणा विचार कृत । तत्र मर्मणः स्थानं, प्रमाणं, मर्मप्रकार , मांसादिभिर्मर्मविद्धस्य लक्षणानि चिकित्सा च सद्य प्राणहराणि इत्यादिना मर्मणा पुनरपि वर्गीकरणमित्यादयो विषया वर्णिता । शस्त्रचिकित्सकस्य नितान्तं मर्मविषयकज्ञानमपरिहार्यमेव । एतेन प्रतिमर्मज्ञानेन शरीरस्य सम्यक् सारगर्भितं ज्ञानं भवति च मर्मशास्त्रज्ञः शल्यतन्त्रे यशस्वी भवति । अनया दृष्ट्या विचारे कृते सति एतदर्थसम्पादक परिकल्पितानि मर्मचित्राणि तत्कोष्ठकानि च मर्मविद्याध्येतृ सुबहूपकुर्युरिति न सन्देहो विश्वास ।

### अष्टमेऽध्याये

वातादिप्रकृतिभेदाना विवेचनमभिनवया शैल्या ग्रन्थकारेण कृतमस्ति । आयुर्वेदशारीरप्रकृतिभेदीयोऽयं महामूल्यो विषय । आतवकालिकदोषविकृतिनिमित्तेन अष्टाना प्रकृतीना समुत्पत्तिर्भवति । एवं च गुणदेशजात्यादिभिरपि

विशिष्टाः प्रकृतयो जायन्ते इत्यादयोऽतीवसाधारणजनोपयोगिनो व्यावहारिका विषया. ग्रन्थकारेण विवेचिताः।

### ( ३ ) विकृतिविज्ञानम् ।

शारीरस्थानस्य तृतीयो विभागो विकृतिविज्ञानम्। तत्र चत्वार अध्याया. सन्ति । शारीरस्थानेऽस्य प्रयोजन प्रागेव वर्णितम्। अस्मिन्भागेष्टाना वर्णप्रभा मल-मूत्र-त्वक्केश-सिरावलादीनामुपचयापचयरूपाणां विवेचनं कृतम्। अत्र विकृताङ्गविज्ञानीयः प्रथमोऽध्याय, विकृतेहाविज्ञानीयो द्वितीयोऽध्याय., विकृतव्याधिविज्ञानीयस्तृतीयोऽध्यायः, विकृतदूतादिविज्ञानीयश्चतुर्थोऽध्याय इति प्रत्यध्यायं रिष्टरूपविकृतेर्वैविध्येनापुनरुक्त्या च रिष्टवर्णन कृतम्। अन्तिमेऽध्याये प्रसङ्गात् स्वभाश्रयाणि रिष्टान्यपि कथितानि।

एव शारीरस्थानस्य प्रथमाध्यायप्रभृति द्वादशाध्यायान्तं विषयसमालोचनं संक्षेपतोऽस्माभिरकारि।

### ( ४ ) शारीरस्थानपरिशिष्टविभागः

एतावता वाग्भटीयशारीरस्थानान्त पातिविषयाणां विमर्शं विधाय सम्प्रति सम्पादकमहाभागैः विषयपरिपूर्तये सयोजितं परिशिष्टविभागमवलोकयामः

अस्मिन्विभागे सर्वभूतचिन्ताशारीरम्, गर्भोत्पत्तिः, शारीरे केचन विशिष्टा अवयवा. अष्टाङ्गशारीरम्, अष्टाङ्गसङ्ग्रहसारभूतमष्टाङ्गहृदयशारीरं सटिप्पणम्, धातुपोषणक्रमपरिशिष्टम्, शारीरकोष्ठकानि, विषयसूची, चित्राणि, सूत्रसूची, पारिभाषिकशब्दसङ्ग्रहश्चेति एकादश प्रकरणानि वर्तन्ते। तत्रादौ प्राथमिके प्रकरणचतुष्टये सङ्ग्रहशारीरे प्रायोऽनन्तर्भूता विषया सङ्गृहीता.। विशेषतस्तु-नेत्रम्, गुदम्, बस्ति., हृदयम्, फुप्फुस, क्लोम, इत्यादीनां सङ्ग्रह सुव्यक्ततया कृतो दृश्यते।

आयुर्वेदस्य प्रकरणग्रन्थरचनायामष्टाङ्गसङ्ग्रहशारीरस्थानाङ्गभूतं शारीरपरिशिष्टमिद विषयदृष्ट्याऽऽयुर्वेदाध्ययन—पद्धति चिन्तकानामतीव उपकारकं भवेत्। सङ्ग्रहशारीरस्थानमेतच्छारीरपरिशिष्ट चेत्युभयमत्रापि सम्मेत्याभ्यस्ते सकलमप्यायुर्वेदीयशारीरमध्येतॄणां करबदरसमान भवेदित्यत्र नो न संशय। सुखेन विषयविशदीकरणदृष्ट्याऽन्यदेक नवीन साधनमत्र परिदृश्यते यन्महता परिश्रमेण विनिर्मितानि शारीरकोष्ठकानि नाम। इमानि सर्वमपि शारीरगत विषयजातमनायासेनैव साङ्गोपाङ्ग लीलया पुरत स्थापयन्ति। तानि, यथा—
( १ ) पंचविंशतितत्त्वानि, ( २ ) त्वचः ( ३ ) कला. ४ ) अस्थिसङ्ख्याविवरणम्, ( ५ ) अस्थिसन्धय ( ६ ) (स्नायव., ( ७ ) पेश्यः, ( ८ ) सिरा., ( ९ ) धमन्यः, ( १० ) स्रोतांसि, ( ११ ) मर्माणि ( १२ ) इष्टशरीरप्रमाणम् ( १३ ) इष्टशरीरलक्षणम् इति। तत्तद्विषयगतोपादेयविषयसदृशैरभिनवरेखाविन्यासादिसमलंकृतरतः कोष्ठकैर्न केवलं विद्यार्थिनोऽपि तु तदध्यापका अपि संपादकस्याधर्मणा एवेति मन्ये।

अस्थिविवरणकोष्ठकेऽस्थिगणनाप्रसङ्गेन चरकसुश्रुतमतोपन्यासेन सह विषयपरिपूर्तिदृष्ट्या प्रत्यक्षशारीरगता तत्तदस्थिसङ्ख्या सुस्पष्ट प्रदर्शिता। तेनायुर्वेदीयशारीरस्य शवविच्छेदनादिमार्वनैरवगते प्रत्यक्षशारीरे क. सम्बधः, किं साम्य, किंच वैषम्यमित्येते विषया. सममेव स्फुटीभवन्ति। एतत्कोष्ठकावलोकनेनैव सपद्यस्थ्ना साकल्येन सख्या शारीर विज्ञात भवते।

प्राचीनायुर्वेदीयाना गणनया षष्ठ्यधिकशतत्रयपरिमितान्यस्थीनि दृश्न्ते। तान्येव सुश्रुतः शतत्रयमितानि ब्रूते। परं प्रत्यक्षशारीरात् केवलं षडुत्तरद्विशतपरिमितान्यस्थन्येव उपलभामहे। आपाततो विचार्यमाणे सुश्रुत-प्रत्यक्षशारीरयोर्महदिदं वैषम्यमवभासेत। तथापि सूक्ष्मेक्षिकया विचारिते नातीवभेदो द्वयोरपि ग्रन्थयोः। प्रत्यक्षशारीरदृशा समुपलब्धसङ्ख्यया सुश्रुतप्रदर्शितास्थिसंख्याया. सादृश्यं मनागिव भज्यते। नैतत्र विदित तद्विद्वानाम्। सुश्रुतेन यद्यपि शतत्रयपरिमितान्यस्थीनि कथितानि, तथापि तत्र प्रत्यक्षशारीरास्थिगणनायामगणितातान्यनेकान्यस्थीनि समुपलभ्यन्ते तरुणरुचकास्थिसदृशानि। प्रत्यक्षशारीरे अपरिगणितानामेतेषामस्थनामन्तर्भाव. कृतश्चेदाहत्यास्थिसङ्ख्या, सौश्रुतास्थिसङ्ख्यासमकक्षता यायात्। किंच प्रत्यक्षशारीरदृष्टाऽस्थिसङ्ख्या दशोत्तरद्विशतपरिमितान्यस्थिसंधीन्वदत। सुश्रुतस्याप्यभिप्रेत। चरक. पुनर्द्विशतमितानस्थिसंधीनाह। एतेन प्रत्यक्षदृष्टशारीरसमकक्षतामेव चरकसुश्रुतादीना शारीर गच्छेदिति परिज्ञायते। प्रत्यक्षशारीरे याऽस्थिसंख्या प्रदर्शिता सा काठिनास्थ्नामेव न तरुणास्थ्यादीनाम्। अस्थिसंधिविवरणे चरकसुश्रुताभ्यामपि सैव गणना समादृतेति दृश्यते। अनयैव दिशा चरकसंग्रहप्रोक्ता षष्ठ्यधिकशतत्रयमितास्थिसङ्ख्याय नखदन्तोलूखलाद्यभिवर्धिता। सुश्रुते तु तेषा परिगणनाभावादेव चरकोक्तास्थिसंख्यातोऽल्पत्व दृश्यते। नखदन्तोलूखलादीनामस्थ्ना संग्रहे कृते सौश्रुत्यस्थिसंख्याऽपि चरकसमकक्षता गच्छेत्। एवमन्यदप्यूहनीयम्। एतादृशि अभ्यसितॄणामतिशयलाभजनकानि कोष्ठकानि कोष्ठकसग्रहे बहूनि दृश्येरन्।

एतादृशपरमोपादेयबोधकराणि मर्म स्रोतआमादीनि कोष्ठकानि संति। अष्टागसग्रहे इष्टशरीरावयवाना यामपरिणाहादयः प्रदर्शिता.। तद्विषयक सुविस्तृत कोष्ठकमप्यत्र विनिर्मित दृश्यते। साम्प्रतिकमहा-

कल्याणादिषु विद्यामंदिरेषु च या विद्यार्थिनां शारीरपरीक्षा काले काले भिद्यते तत्र कोष्टकप्रदर्शितायुर्वेदपद्धतेरत्यन्ताभावः परीक्षकैरवश्यमेव विधेय इति नो मतम्।

अनयैव सरण्या अन्यैरपि कोष्टकैरायुर्वेदजगति महाविचारसंरम्भ उत्पन्नो भवेत्। अत संपादकाना प्रशस्ततरय कृति सर्वैरपि समादृतव्येति मन्महे।

अन्य कश्चिदायुर्वेदीयपुस्तकेषु प्राय कदापि दृष्टिगोचर विशेषोऽस्मि पुस्तके दृश्यते यत् अन्यून चत्वारिंशत्स्थानानां तत्तच्छारीराकृतिस्वरूपस्थानादिनिश्चायकानां चित्राणां नूतन प्राविष्कार। संस्कृतभाषाविदुरा अल्पसंस्कृतज्ञा वा एतद्ग्रंथस्थविविधचित्रसमुच्चयं कोष्टकसाहित्येनाभ्यस्यायुर्वेदीयशारीराभिज्ञतामनायासेनैव संपादयेयुरिति मन्यामहे।

संपादकस्य सर्वांगपूर्णं संपादनम्

अयि पाठकमहाभागा! एतावता विषयप्रवेशेन एतद्ग्रंथसंपादनस्य महती सर्वांग-परिपूर्णता अपूर्वता च स्पष्टं प्रकाशयेत। तथा शास्त्रस्य संपादनप्रकरण काममपूर्णमेव भवदिति तदधिगमाय एतद्ग्रंथपरिशीलनमेव श्रेयस्कर भवादिति साग्रहं निवेदयाम।

तथा च शारीरपरिशिष्टाङ्गभूता ग्रंथपरिपूत नितान्तमुपयोगिन्य सूत्रसूची पारिभाषिकशब्दसूची, विस्तृता विषयसूची मर्मविभाग, सूत्रार्थबोधकानि सूत्रदीपकाणीत्यादयो नैकविधा सुविधा संपादकमहाभागै परिकल्पितास्ताभिश्च सत्यमस्य ग्रंथस्य महामूल्यता शतगुणिता सजातेति द्रढीयानस्माक विश्वास। इत्थमवावशिष्टान् संग्रहभागान संपादयितुं श्रीधन्वंतरि पंडित रामचंद्रशास्त्री किंजवडेकरमहाभागस्य सामर्थ्यं प्रदद्यादित्याशास्य विरमाम

५०१ रास्तापेठ पुणें २ । गणेश श्रीधर मुळ्ये आयुर्विद्या-विशारद ।

# वैद्यवराणामभिप्रायाः ।



## वैद्यभूषणेत्यादिविरुदाङ्कितानामार्यवैद्यसम्पादकानामखिलमहाराष्ट्रललामानां राष्ट्रकार्यधुरीणानां नैकविधायुर्वेदीयग्रन्थप्रणेतॄणां गणेशशास्त्री जोशी इत्याख्यानाम्

### अभिप्राय ।

सजातं चैतदतीव प्रमोदास्पदमायुर्वेदविदां यच्छ्रीमद्वाग्भटाचार्यप्रणीत आयुर्वेदज्ञाननिधिरष्टांगसंग्रह नाम्ना भारतेषु प्रसिद्धो ग्रंथराजोऽयं मुद्रापितो विदुषां नयनपथगोचरो भवति। अयं हि ग्रंथराज पंडितप्रवरै रायुर्वेदविद्भिः पुण्यपत्तनस्थाष्टांगायुर्वेदविद्यालयप्राध्यापकैर्व्याकरणादिशास्त्रपारगतै पं **रामचंद्रशास्त्री किंजवडेकर**महाशयैर्महता प्रयत्नेन दीर्घकालाध्ययनेन च **ननु नवीन एवारचित इति प्रतिभाति।** प्रथमं तावदष्टांगसंग्रहग्रंथराज एव **विषयप्रधानपद्धत्या** विरचितो वाग्भटाचार्य। तस्मिन्नपि प्रकरणश तत्तदर्थजात मेकीकृत्य पुन प्रकरणविभजनेनायुर्वेदस्य पार जिगमिषूणां सुदृढा नौरिव सहायता गत। ग्रंथस्यास्य शारीरस्थानात्मको भागोऽयं प्रसिद्धिमागत। प्रथममेव शारीरस्थानगताना सर्वेषां विषयाणां विस्तृता सूची दृष्टिपथमायाति। केवलं सूचीपठनेनापि सर्वेषां विषयाणामनुक्रमेणैव स्मरणं भवति। ततश्च चतुर्णामध्यायानामेकीकृतितत्र नामप्रकरणं कृत्वा प्रथमं संग्रहकारेण कृतानि सूत्राणि श्रीमन्महामहोपाध्यायैर्दुर्विरचितशशिलेखाटीकासहितानि यथाक्रमं लिखितानि। सर्वेषामपि सूत्राणां शिरसि क्रमाकनिर्देशपुरस्सरं तात्पर्यनिदर्शकं वाक्यमास्ते। येन सूत्रगतोऽर्थो विज्ञायते सम्यक्। संग्रहगताना कठिनवाक्यानामर्थविज्ञानाय टिप्पण्यपि प्रदत्ता शास्त्रिमहाशय। यस्या चान्यग्रंथस्थानि प्रमाणानि विषयस्पष्टीकरणाय स्थाने स्थाने तत्तद्ग्रंथेभ्य समुद्धृतानि। प्रथमनायासापरोऽपि विशेषो यदष्टांगसंग्रहकारेणोक्त न मात्रामात्रमप्यत्र किंचिदागमवर्जितम् इति [ अ स सू १ ] सूत्रमनमिकृत्य संग्रहकारेण प्रणीतस्य सूत्रवाक्यस्यागमो नाम चरकसुश्रुतप्रभृति यत्र यत्र प्रमाणमास्ते तस्य तस्य सूत्रस्य तत्स्थानमध्यायोऽङ्क क्रमेण तत्प्रकरणा ते निर्दिष्ट ।

पाठकमहाभागा ! **प्रतिसंस्कर्त्रा रामचंद्रेण** कियान् प्रयास कृतोऽस्मिन् विषये तदधिगम्यताम्। अष्टाङ्गसंग्रहकारेण ग्रंथविरचनाकाले यद्यन्मनसि कृत्वा ग्रंथलेखनं कृतं तदंतिकमेव गतेन संस्कर्त्रा संस्करणमिद कृतमिति मन्ये । शारीरस्थानस्य त्रीणि प्रकरणानि कृतानि । प्रसूतितंत्रमध्यायचतुष्टयात्मकम् । शारीरमध्याय-चतुष्टयात्मकम् । चतुरध्यायात्मकं, विकृतिविज्ञानशारीरमिति च । सनमेव शारीरस्थानगतानामष्टाग-हृदयस्थानामपि सूत्राणा सग्रहस्थमूलवचनप्रदर्शिन्या टिप्पण्या युतं परिशिष्टं निविष्टम्। पूर्वाचार्याणामद्ययावत् प्रसिद्धेषु ग्रंथेषु शारीरविज्ञापकानि चित्राणि प्रतिमा वा न केनापि मुद्रिता । अस्मिन् ग्रंथे शास्त्रिमहाशयै-र्महता प्रयत्नेन आयुर्वेदीयशारीरग्रंथस्थाना शारीरविषयाणा तास्ता सज्ञा परिगृह्य शरीरावयवविशेषाणा प्रतिमासु निर्दिष्टा । तेन आयुर्वेदाध्येतॄणामध्यापकाना च शारीरविषयज्ञानार्थं परं सहायो भवेत् । महता परिश्रमेण द्रव्यव्ययेन च संपादितोयं ग्रंथ पं० **रामचंद्रेण** इति धन्यवादान् दत्वा पाठशाला-ध्यापकैर्विद्यार्थिभिश्च केतव्योऽयमित्यभ्यर्थये ।

आर्यवैद्यकार्यालय २७ शुक्रवार पेठ<br>पुण्यपत्तनम्

विदुषामनुग्राह्य<br>गणेशशास्त्री जोशी

## पुण्यपत्तनालङ्काराणामायुर्वेदाचार्याणामस्मद्गुरुचरणानां श्रीमतां पाण्डुरङ्ग-शास्त्रिमहाभागानां देशपाण्डे इत्युपाह्वानामभिप्रायः ।

प्रमोदतेतरा मे चेतोऽद्य श्रीमद्भि किंजवडेकरोपाह्व रामचंद्रशास्त्रिभि स्वीयया टिप्पण्योपबृंहितस्य महामहोपाध्यायेंदुमहोदयाना टीकया सहितस्याष्टागसंग्रहाख्यस्य श्रीमद्वाग्भटकृतेरनन्यसाधारणस्य वैद्यकग्रंथस्य शारीरस्थानाख्यं प्रकरणमेकं संपादयित्वा प्राकाश्यता नीतमिति । केभ्यश्चिद्वर्षेभ्य प्राङ्मुद्रापित आसीदय ग्रंथश्चिरन्तरैशै । परन्तु वर्षद्वयादारभ्य दुर्लभप्रायोऽय समजनि । **निखिलभारतीयायुर्वेदविद्यापीठेन आयुर्वेदविशारदपरीक्षायै नियुक्तो**ऽप्ययं ग्रंथो दुर्लभत्वान्निष्कासितोऽभ्यासक्रमात् । यावच्च न प्रसिद्धिमियान्न तावन्नियुज्येतेत्यपि तेनोद्घोषितमस्ति । अतो भवत्यावश्यकता ग्रंथस्यास्य प्रसिद्धीकरणस्य ।

न तु केवलमायुर्वेदविद्यापीठपरीक्षादिदिक्षूणा छात्राणा कृत एव भवत्यावश्यकताऽस्य ग्रंथस्य । अपि तु स्वीयेनैव ग्रंथमहिम्ना प्रकाशनार्थं प्रचोदिता पण्डितवरेण्या किंजवडेकरशास्त्रिण । कोऽसावस्य महिमेति चेदवलोक्यताम् । चरकसुश्रुतयोर्मतानि संगृह्यैव प्रायश सर्वतन्त्राणि सहत्यक्रियतेऽष्टागसग्रह इति [अ.सं सू. सू ८] ग्रंथकर्तुर्वाग्भटोक्तेर्ज्ञायते । कोऽसावस्य हेतुरिति चेच्चरकादिनिर्दिष्टानामविस्तारिताना वा विषयाणा सुश्रुतादिभिः वर्णितत्वात्, तैर्वाऽवर्णिताना विषयाणा चरकादिभि वर्णितत्वादुभयादिभि कथिताना विषयाणा चाधिजिगीषूणामावश्यकत्वाच्चरकसुश्रुतग्रन्थयोश्चास्थानविस्तराक्षेपपुनरुक्त्यादिदोषबाहुल्येन छात्राणा संभ्रांतिसंभवाच्च ।

ननु वाग्भटनाम्ना बहुभ्य शतकेभ्य आरभ्यैव प्रचलितस्याष्टागहृदयस्याध्ययनं प्रचलत्येव । तस्य च पुनरतिसंक्षिप्तत्वादध्ययनसौकर्यमपि । चरकसुश्रुतयो पुनरप्यावश्यकता संग्रह पठितेऽपि भवेत् तात्त्विकवर्णन-परत्वात्, का तर्हि भवत्यावश्यकता विस्तृततरस्य, हृदय एव वर्णितविषयैर्निबद्धस्य पुनरप्यष्टागसंग्रहाध्ययनस्य । तदर्थं तस्य प्रकाशनस्य चेति चेन्न । अष्टागहृदयस्य चरकसुश्रुतासम्मतमतप्रतिपादकत्वात्संग्रहेऽपि च प्रायशो निखिलमपि चरकीयं सौश्रुत विषयं संगृह्यापि तन्त्रातरायविषयाधिक्यस्य संगृहीतत्वाच्च चरकसुश्रुतयोरपि परस्परविरोधस्य स्वोक्तिविरोधस्य च परिहृतत्वाच्च । तथा हि । स्त्रीपुरुषयोर्विवाहयोग्यवयोवर्णने हृदय पठति । " पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगतेति । " (अ हृ सू १० ) सुश्रुतविरुद्धमेतत्प्रतिपादनम् । " अथास्मै पचविंशतिवर्षाय द्वादशवर्षा पत्नीमावहेत् . । " ( सु. शा १०-५४ ) इति सुश्रुतोक्ते । चरके यद्यपि स्पष्टतया न वर्णितोऽयं दृश्यते विषयस्तथापि पुरुषस्य विंशतिर्विवाह्यवय कुतो हृदयकर्त्रा संगृहीतमिति न कथयितु शक्यते । संग्रहेणात्र स्पष्टतया सौश्रुतं मतमनूदितम् । यथा-" तस्या षोडशवर्षाया पंचविंश-तिवर्ष पुरुष पुत्रार्थं प्रयतेतेति " ( अ. स. शा. सू ३ ) चरके तृतीये मासि दौर्हृदं वर्णितं, सुश्रुते

चतुर्थे च। (च शा ४।१५) (सु शा ३।१८)। संग्रहकारैरप्येतन्मतं संगृह्यापि " अन्ये तु पञ्चमात्प्रभृत्यापञ्चमान्मासाद्दौहृदकालमाहुः।" (अ सं शा सू ९१) इत्यन्यतन्त्रीयं वर्णनमधिकं प्रदत्तम्। एवमादीनां बहूनां विशेषाणां कृते भवत्यावश्यकताऽष्टाङ्गसंग्रहस्य।

संग्रहहृदययोर्वैमत्येन उभयोः ग्रन्थयोर्द्वौ पृथक्प्रणेतारौ भवितुमर्हत इति तु विचारकक्षां समधिरोहति विषयविशेषः। परन्तु अत्र विस्तारभीत्या करिष्यते तस्य विवेचनमन्यस्मिन् प्रसङ्गे।

पण्डितप्रवरैः किंजवडेकरशास्त्रिभिः प्रस्तुतग्रन्थप्रकाशनेनानेकप्रकारकं वैशिष्ट्यं संसाधितम्। स्थाने स्थाने दत्ता इन्दुटीकोपबृंहिका विस्तृता टिप्पणीत्येको विशेषः। संस्थानशारीरे कृतं कोष्ठकैः स्पष्टीकरणमिति द्वितीयो विशेषः। आकृतिविज्ञानार्थं चित्रितानि चित्राणीति तृतीयो विशेषः। शारीरस्थानं तावत् प्रसूतिशारीरं विकृतिविज्ञानमित्यनेन त्रिधा विभज्य प्रतिप्रकरणान्ते सूत्राणां संदर्भक्रमे। चरकसुश्रुतोक्तसंदर्भसूत्राङ्का निर्दिष्टा इति चतुर्थो विशेषः। अनेन संदर्भसूत्रसूचकक्रमाङ्कैर्विषयमेकं विषयांशं वा गृहीत्वा साकल्येन त्रयाणां तन्त्रकाराणां मतं साधर्म्यं तन्त्रकाराणां मतान्यपि युगपदुपलभ्यन्ते। शारीरमधिकृत्य ग्रन्थं लिखितुकामस्य वाङ्मयं सहायो भवेत्। न केवलमित्थम्। अपि तु हृदयस्यापि मूलतया सूत्राणि विभज्य तुलनासौकर्यार्थं स्वतन्त्रतया स्थानान्ते तानि सटिप्पणानि मुद्रापितानीति पञ्चमो विशेषः। निखिलस्य स्थानस्य विस्तृता विषयसूची स्थानारम्भे सूत्रसूची पारिभाषिकशब्दसूची च स्थानान्त इत्यपरे त्रयो विशेषाः। एवं विशेषाष्टकविशिष्टोऽयमष्टाङ्गसंग्रहग्रन्थो विद्वच्छ्रेष्ठानां दृष्टिं हृष्टिं नयेदिति प्रत्येमि।

व्याकरणकाव्यमीमांसादिशास्त्रेषु कृताभ्यासाः उत्तीर्णपरीक्षाः संशोधितग्रन्थाश्च भवन्ति रामचन्द्रशास्त्रिणः। पञ्चषवर्षेभ्यः प्राक्प्रान्तिके वैद्यकाध्ययनार्थमपि ते कानिचिद्दिनानि प्रत्यहमागतवन्तः। तदाप्रभृति मन्ये तेषां मनसि वैद्यकविषयेऽपि संशोधनपुरःसरान् प्रयत्नान् कुर्यामित्यायातम्। मनसि बीजारोपणे संजाते सत्याफलप्राप्तेः प्रयत्नाः परां काष्ठां नेतव्या इति वृत्त्या समाधितोऽयं प्रयत्नस्तैरिति सुतरां मोमुदते मदीयं स्वान्तम्।

अवशिष्टमिदानीं विज्ञापनं विद्यापीठस्यैव भिषङ्मण्डलीमण्डलायमानस्य विद्वत्समूहस्य, यदाश्रयार्होऽयं नूत्नो ग्रन्थोऽष्टाङ्गसंग्रहाख्यः अतः शारीरस्थानं तावद् भवन्तः कृपया सत्वरं क्रीणीयुः इति। किंजवडेकरमहोदया अप्यवशिष्टं ग्रन्थमचिरादनयैव वैशिष्ट्याष्टकयुक्तया पद्धत्या च प्रसिद्धिमानयेयुरिति शम्।

६३७ शुक्रवारभाग पुण्यपत्तनम् २
पौषशुक्ल तृतीयया सहिता
१८६० शकाब्दा

पांडुरंग हरि देशपांडे,
आयुर्वेदाचार्य

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक-पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृत

टिप्पण्या च परिष्कृत:

महामहोपाध्यायेन्दुविरचितशशिलेखाख्यव्याख्यया समेतश्च

श्रीमद्वाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः।

## शारीरस्थानस्य विस्तृता विषयसूची

### (१) प्रसूतितन्त्रम्।

## प्रकृतिभेदीय अष्टमोऽध्याय

## ( ३ ) विकृतिविज्ञानम्

विकृताङ्गविज्ञानीयो नवमोऽध्याय

# शारीरपरिशिष्टसूची।



# चित्रकदम्बाना सूची।





# आगमप्रमाणानि ।

( अङ्गनमध्यायानाम् )

| चरके | सुश्रुतः |
|---|---|
| **प्रथमोऽध्यायः ।** | |
| च. चि. २ पा. १; ४; ३०; १३ | सु. शा. १०, ४, २ ,३ |
| च. नि. ३ | सु. सू. ३५, १४ |
| च. वि. ५ | सु. नि. ७ |
| च. शा. ८, २, ३, ४ | सु. चि. १४ |
| | सु. उ. ४२ |
| **द्वितीयोऽध्यायः ।** | |
| च. शा. ४, २, ३, ६, ८ | सु. शा. १, २, ३, ४ |
| च. चि. १५, ३० | सु. सू. १४ |
| च. नि. ३ | |
| **तृतीयोऽध्यायः ।** | |
| च. शा. ८ | सु. शा. १० |
| | सु. नि. ९ |
| **चतुर्थोऽध्यायः ।** | |
| च. शा. ८, २ | सु. शा. १०, ८ |
| च. चि. २८ | सु. नि. ८ |
| | सु. चि. १५ |
| **पञ्चमोऽध्यायः ।** | |
| च. शा. ७, १, ४, ३, ६, ८ | सु. शा. ५, १, ३, ४, ९ |
| च. सू. १, ८, ३०, ७, २९ | सु. सू. ३५ १५ |
| च. चि. १५ | सु. उ. १ |
| च. वि. ५ | सु. नि. १० |
| **षष्ठोऽध्यायः ।** | |
| च. सू. ३०, २८, १७, २७, १५ | सु. शा. ७, ९, १० |
| च. शा. ७ | सु.सू.२१,१४,१५,४६,३५ |
| च. वि. ५, ६ | सु. नि. १ |
| च. चि. १५, ८, ३ | |

## સપ્તમોઽધ્યાયઃ ।

| | |
|---|---|
| च शा ७ | सु. शा ६ |
| च चि. २६ | सु. सू २५, २६ |
| च सि ९ | |
| च सू २९ | |

## અષ્ટમોઽધ્યાયઃ ।

| | |
|---|---|
| च वि. ८, ३ | सु शा ४ |
| च चि २६, १ | सु सू ३५ |
| च शा ६, ४ | |
| च. सू १७,७,१,६,७,११,२१,८ | |
| च इ १ | |

## નવમોઽધ્યાય ।

| | |
|---|---|
| च इ १,७,३,८,२,११,९,१२,६ | सु सू ३२,३१,३०,२९,२८ |
| च चि ४ | |

## દશમોઽધ્યાય ।

| | |
|---|---|
| च इ ४,११,५,१२,७,८,३,२ | सु सू ३०, ३१, ३२, २८ |

## એકાદશોઽધ્યાયઃ ।

| | |
|---|---|
| च इ ५,१,३,९,११,१०,६,७, ८, १२ | सु सू ३१, २८, ३३ |
| | सु उ ४० |
| च नि २, ४ | सु नि ६, १ |
| च चि ४,२०,२२,१४,१९,५, १८, २१, २९ | |
| च सू १७ | |

## દ્વાદશોઽધ્યાય ।

| | |
|---|---|
| च इ १२, ५, ४ | सु सू. २९, १०, ३२ |
| च शा. ८ | |

सम्सूचनम्—एतदध्यायगताना सूत्राणा निर्देशो ग्रन्थे एव यथास्थान कृतो वर्तते। तत्र एवावलोकनीय ।

## अष्टांगसंग्रहशारीरस्थाने

# अनन्तर्भूताश्चरकसुश्रुतग्रन्थांशाः

### चरके शारीरस्थानम्
(१)

प्रथमोऽध्याय. १–१५, २४, ३१–६२, ७०–१५६
द्वितीयोऽध्यायः १–७, ११, १३, १६, १७, २२, २४–२७, ३०–४८
तृतीयोऽध्याय. १–११, १५, १६, २०, २२, २४–३३
चतुर्थोऽध्याय. १–५, ८, १३, २६–२९, ३३, ३५, ५७–६१.
पंचमोऽध्यायः १–३, ५–२६
षष्ठोऽध्यायः १–३. ५–६–२१, २६–३४
सप्तमोऽध्याय. १–३, ११, १६, २०.
अष्टमोऽध्यायः १–३ १८,४५

### चरके इन्द्रियस्थानम्
(२)

प्रथमोऽध्यायः १–४, १५–१७,१९, २०, २३, २७–३०
द्वितीयोऽध्याय. १–४,६–९, ११, १४, १५, १७–२०, २३.
चतुर्थोऽध्यायः १–६,१२,१५,१६,१८,१९,२५,२६,२७
पञ्चमोऽध्यायः ३, ६, ७, १२, १८, १९, २४, २६, २७, २९–३४, ४७.
षष्ठोऽध्यायः १–५, १२, १६, १७, २०–२३,२५
सप्तमोऽध्यायः १–२, ८–११, २०, २४, २७, २८, ३१, ३२.
नवमोऽध्यायः १–४, १६,१७, २०, २३, २४.
दशमोऽध्यायः १–३,६, १४–१५, १८–२०
एकादशोऽध्याय. १–२, ८, ११, १६–१८, २१, २३ २६, २७, २९
द्वादशोऽध्याय. १–२, २२–२५, २८, ३४; ३५, ४०–६१, ६५–६७, ८९, ९०.

### सुश्रुते शारीरस्थानम्
(३)

प्रथमोऽध्यायः १–३, ६; ७, १२–१५, १७, १८. २१, २२.
द्वितीयोऽध्यायः १–२, १६, १९; २४, ३३, ३७, ४०–४९, ५५–५८.
तृतीयोऽध्यायः १–४, २२–२९, ३२, ३५
चतुर्थोऽध्यायः १–२, २५–३०, ३३–६१, ८०,९८-९९
पञ्चमोऽध्याय १–२, २१, २३, ४१–४२, ४५–५१,
षष्ठोऽध्यायः १८, २२, ३०, ३४, ३६–४०, ४३
सप्तमोऽध्यायः ७–१७, १९, २३
अष्टमोऽध्याय १–११, १३–२६
नवमोऽध्याय ११, १३,
दशमोऽध्याय ६६–७०

### सुश्रुते सूत्रस्थानान्तर्भूतमिन्द्रियस्थानम्
(४)

अष्टाविंशतितमोऽध्याय १–४, ७, ९–१०, २०, २१,
एकोनत्रिंशत्तमोऽध्याय ७–८, १४, १५, २३, २६, ३८–४१, ४६, ४९–५१, ५३–६६
त्रिंशत्तमोऽध्याय ११–१७, २१–२३
एकत्रिंशत्तमोऽध्याय ४, १८, २१, २७, २९, ३०
द्वात्रिंशत्तमोऽध्याय ५–७
त्रयस्त्रिंशत्तमोऽध्याय ३, ८, १३–१५, १७–१९, २२. २५, २६,



मीषण नामाकोमलमस्थ्यावल्यादि बिभर्ति तामपि। अनिन्द्यामन्येनापि केनचिल्लोकदृष्टेन प्रकारेणागर्हणीयाम् २

३ दम्पत्योः सङ्गमकालः।

**३-तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं प्रयतेत ॥ ३**

३-तस्यामनन्तरोक्तायामङ्गनायां कालेन षोडशवर्षायां सत्यां पुमान् पञ्चविंशतिवर्षो वक्ष्यमाणेन विधिना पुत्रार्थं प्रयतेत ३

४ वीर्यवत्सुतोत्पत्तौ निदानम्।

**४ तदा हि तौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः ॥ ४**

४-यतस्तौ दम्पती तदेति षोडशे पञ्चविंशे च वर्षे लब्धात्मवीर्यातिशयौ सन्तौ वीर्यवन्तं बलारोग्यादिसंपन्नं पुत्रं जनयतः ४

५ गर्भस्य रोगाद्याक्रान्तत्वे कारणम्।

**५-ऊनपञ्चविंशतिवर्षेणोनषोडशवर्षायामाहितो गर्भः कुक्षिस्थ एव विनाशमाप्नुयादल्पायुर्बलारोग्यविभवो वा स्याद्विकलेन्द्रियो वा। ऋतावाद्ये च रात्रित्रये तथा दुष्टे शुक्रार्तवे इति ॥ ५**

५-ऊनषोडशवर्षायां वा आहितो गर्भ ऊनपञ्चविंशतिवर्षेण वाप्याहितः कारणसामग्र्यनपेक्षया कदाचिन्मातृकुक्षावेव नश्यति कदाचिद्विकलेन्द्रियो वा भवति। इन्द्रियेणैकेन द्वाभ्यां वा हीनो भवतीत्यर्थः। न केवलं दम्पत्योरूनवर्षतया गर्भस्यैवंविधता, यावत् पूर्णयोरपि मातापित्रोर्मातुराद्ये पुष्पदर्शनादारभ्य ऋतौ रात्रित्रये आहारविहारादिना वातादिदुष्टे शुक्रार्तवे चैवंविधतैव ५

६ शुक्रोत्पत्तिः।

**६-तत्राऽऽहारस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते ॥ ६**

६-शुक्रार्तवं किमुच्यते कथं च तद् गर्भजन्माद्युपकरोति उपघातश्च तस्य कथं भवतीत्याह—**तत्राहारस्येत्यादि**—आहारस्य चतुर्विधस्य सम्यग्यथावत् परिणतस्य जठराग्निना धात्वग्निपरिपाकपरम्परावशाच्च क्रमान्मज्जानं मज्जस्वभावं प्राप्तस्य यः सारः स शुक्रसंज्ञां लभते ६

७ शुक्रस्य स्थानानि।

**७-तत्तु क्षीरे इव सर्पिरिक्षुरसे इव गुडः शरीरे शुक्रधरां कलामाश्रित्यास्तुतं सर्वाङ्गव्यापितया स्थितम्। विशेषतश्च मज्जमुष्कस्तनेषु ॥ ७**

७-तच्च शुक्रं व्यापकमपि मज्जप्रभृतिषु विशेषतः स्थितं शरीरे या शुक्रधरा नाम कला वक्ष्यमाणलक्षणा तामाश्रित्यास्तुतं सत् सर्वाङ्गव्यापित्वेन स्थितं भवति। दृष्टान्तो यथा-क्षीरे सर्पिर्घृतम्। यथा चेक्षुरसे गुडः। व्याप्य स्थितमपि तदवस्थायां न दृश्यते क्रियासंस्कारादिवशाच्च पश्चादभिव्यज्यते, तथैव शरीरे शुक्रमिति दृष्टान्तः। क्षीरादौ च सर्पिरादेरस्तित्वमनुमानलब्धं यदिह समुत्पद्यते। तत्र चेत् कथं सिकताभ्यो लोकस्तैलं न गृह्णीयात्। अथवा कार्यकारणमात्रं वा दृष्टान्तः ७

**टिप्पणी** वक्ष्यमाणेति-अ स शा. ५

८ शुक्रप्रवृत्तिः।

**८-हर्षोदीरितं तु संघट्टनेन हृदयावेगात् पिण्डीभूतमङ्गादङ्गात् प्रवर्तते ॥ ८**

८-तच्च शुक्रं सर्वाङ्गव्यापि सदङ्गनासंयोगे हर्षेणोदीरितं प्रेरितमङ्गादङ्गाद् बहिः प्रवर्तते ८

९ गर्भाधानयोग्यं शुक्रम्।

**९-तत् सौम्यं स्निग्धं गुरु शुक्लं मधुगन्धि मधुरं पिच्छिलं बहु बहलं घृततैलक्षौद्रान्यतमवर्णं च शुक्रं गर्भाधानयोग्यं भवति ॥ ९**

९-किंभूतं? संघट्टनेन वेगावेशेन हृदयावेगात् पिण्डीभूतमेकत्वं यातं वातादिभिरनुपहतं सौम्यस्निग्धादिगुणयुक्तं सद् गर्भाधानयोग्यं भवति। सौम्यं सोमगुणभूयिष्ठं मधुगन्धि माक्षिकगन्धि। बहलं नातिघनम्। तथा घृतवर्णं तैलवर्णं वा। क्षौद्रवर्णं वा क्षौद्रं च कपिलं विद्यात्। एतद्विपरीतं गर्भाधानायोग्यम्। इति शुक्रस्य स्वरूपमुक्तम्, आर्तवस्यात्रोच्यते ९

१० आर्तवलक्षणम्।

**१०-तथा रक्तमेव च स्त्रीणां मासे मासे गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमित्याहुः ॥ १०**

१०-**तथा रक्तमित्यादि**-रक्तमेव सर्वस्य धातुत्वेन जायते। तदेव विशिष्टं सदार्तवमित्याचार्या आहुः। किंभूतं? मासे-मासे त्र्यहं बहिः प्रवर्तमानम्। किं कृत्वा? गर्भकोष्ठं योषितो गर्भस्थानं सर्वतः शरीरात् प्राप्य। बहिः प्रवर्तमानत्वं तस्योपलक्षणम्। न तु तदेवार्तवं यत् प्रवर्तत एव केवलम्। ऋतौ भवतीत्यार्तवम्। ऋतुश्च निषिक्तस्य बीजस्य फलप्रसवानुगुणः कालः। तस्मिंश्चर्तौ प्रथमं त्र्यहं बहिर्दृष्टमवश्यं प्रवर्तते १०

११ दुष्टार्तवसंज्ञा।

**११-अतिप्रसङ्गेनानृतावृतौ वा तदेवासृग्दरं प्रदरं व्यापदं च रक्तयोनिसंज्ञां लभते ॥ ११**

११-तदेवातिप्रसङ्गेनर्तुकाल एव प्रवर्तमानमनृतौ वातिप्रसङ्गेन प्रवर्तमानमसृग्दरादिसंज्ञां लभते। एतल्लक्षणं चोत्तरत्र वक्ष्यते ऋतोस्तु लक्षणं क्षामप्रसन्नवदनामित्यत्रैव वक्ष्यते (शा १ ४२) ११

१२ दुष्टार्तवचिकित्सा।

**१२-तत्साधने रक्तपित्तचिकित्सितं गुह्यरोगप्रतिषेधं चेक्षेत ॥ १२**

१२-**तत्साधनेति**-तत्साधनेऽतिप्रसक्तरक्तचिकित्सिताय रक्तपित्तचिकित्सितं गुह्यरोगप्रतिषेधं चेक्षेत। तेनैतदुक्तं भवति-तथाविधस्य निदानादिवशात् कदाचिद्रक्तपित्तता

७ °ष्टे च श°-क. ८ °श्रित्य सर्वा°-क. ख. ९ °नानृतौ वा त°-क

पुरुष, तैलेन नारीं पित्तलैश्च मांसैः । एवं हि समानगुणतया शुक्रार्तवमाप्यायते ॥ २२

२२ अथेत्यादि सुबोधम् । प्रशस्तेषु तिथिमुहूर्तनक्षत्रेषु सदपत्यलाभाय मिथुनमुपस्नेहयार्तवाभ्यर्णे काले शुद्धशुक्रार्तवत्वादियुक्त मिथुन जायापती आस्थापनानुवासनाभ्यामुपाचरेदिति सबन्ध । किं कृत्वा? आह-पूर्वमुपस्नेह्य पश्चात्तन्त्रोक्तेन विधानेन सशोध्येति । पुरुष तु विशेषाद् घृतादिभिरुपाचरेत् । मधुरस्कन्धनिर्दिष्टैरौषधानमस्कारैश्चोपचरेत् । उपचर्यमाणस्य बहुदिवसोपयोगिनायु शरीरेऽतिशय स मधुरौषधसस्कार । नारीं तु विशेषेण तैलादिभि । पित्तलानि मासान्यानूपमत्स्यजानि तानि कफपित्तलानि भवन्त्येव । एव हि घृताद्युपचारेण पुस शुक्रमाप्यायते सदृशगुणत्वात् । तथा तैलाद्युपयोगेन रक्तमाप्यायते २२

२३ गर्भासभवकरस्य दुष्टशुक्रस्य लक्षणम् ।

**२३ वातपित्तश्लेष्मकुणपगन्धिग्रन्थिपूयक्षीणमूत्रपुरीषरेतासि त्वबीजानि भवन्ति ॥ २३**

२३—तत्र यान्यशुद्धान्याहारादिहेतुकवातादिदोषाक्रान्तानि रेतासि तान्यबीजानि भवन्ति गर्भाय न भवन्तीत्यर्थ २३

२४ प्रातिस्विक वातादिभिर्दुष्टस्य शुक्रस्य लक्षणानि ।

**२४—तत्र तनु रूक्ष फेनिलमरुणमल्पं विच्छिन्नसरुजं चिराच्च निषिच्यते वातेन । किञ्चित्पीतमपिच्छिलमानील वा दहदिव प्रवर्तते पित्तेन । मज्जोपसंसृष्ट प्रभूतं विबद्धं चाम्भसि च किञ्चिन्मज्जति श्लेष्मणा । कुणपगन्ध्यनल्पं रक्तेन । ग्रन्थिभूत वातश्लेष्मभ्याम् । पूतिपूयनिभ पित्तश्लेष्मभ्याम् । क्षीण वातपित्ताभ्याम् । तदुक्त ससाधन प्राक् । मूत्रपुरीषगन्धि सन्निपातेन ॥ २४**

२४—तत्र तस्मिन् इत्यादिना वातादिदुष्टस्य शुक्रस्य लक्षण चिकित्सित च दोषक्रमेणोच्यते । सुबोधमन्यत् । वातपित्ताभ्या शुक्रक्षय क्रियते, तच्च क्षीण शुक्र प्राग्दोषादिविज्ञानीये सचिकित्सितमुक्तम् २४

टिप्पणी—प्रागिति–अ स सू १९

२५ वन्ध्यार्तवलक्षण साध्यासाध्यविचारश्च ।

**२५ आर्तवमपि शुक्रवद्दोषैरुपसृष्टमबीजमेव । तस्य लिङ्ग नाम च पूर्ववत् । तेषु कुणपग्रन्थिपूयक्षीणरेतांसि कृच्छ्रसाध्यानि । मूत्रपुरीषशुक्रार्तवं त्वसाध्य कुणपग्रन्थिपूयार्तवं च ॥ २५**

२५—न केवल वातादिदुष्ट शुक्रमबीज भवति यावत्तेनैव क्रमेण तैरेव दुष्टमार्तवमप्यबीज भवति । तस्य चार्तवस्य दुष्टस्य शुक्रवदेव क्रमेण लक्षण नाम च विजानीयात् । तेषु दुष्टेषु शुक्रार्तवेषु मध्ये कुणपादिरेतासि कृच्छ्रसाध्यानि । मूत्रपुरीषशुक्रार्तवान्यसाध्यानि । तानि प्रजोत्पादने न समर्थान्येव भवन्ति । कुणपग्रन्थ्यादि दुष्टमार्तव च शेष सर्व साध्यम् २५

२६ दुष्टशुक्रार्तवयोश्चिकित्सा ।

**२६—तत्राद्यांस्त्रीञ्शुक्रार्तवदोषानन्यथास्व दोषेसाधनेन साधयेत । गुह्ययोनिरोगप्रतिषेधेन चोभयान ॥ २६**

२६ तत्र साध्येषु वातादिभिस्त्रिभिः शुक्रदोषास्तैरेव त्रीनार्तवदोषान् स्वहेतुदोषचिकित्सयोपक्रमेत् । गुह्यरोगप्रतिषेधोक्तविधानेन च २६

टिप्पणी गुह्ययोनिरोगप्रतिषेध इति । अ उ स. ३९

**२७ अपि च ॥ २७**

२७—अपि चेति विशेषसमुच्चयाय २७

२८ वातिकशुक्रदोषे चिकित्सा ।

**२८ वातिके शुक्रदोषे वसुकसैन्धवफलाम्लसिद्धयवक्षीरप्रतीवाप सर्पिष्पानम् । बिल्वविदारीसिद्ध क्षीरयुक्तमास्थापनम् । मधुकभद्रदारुसिद्ध तैलमनुवासनम् । क्षीरकुलीररससिद्ध तैलमुत्तरबस्ति. ॥ २८**

२८—वसुकादिभि सिद्ध सर्पिर्यवक्षारप्रतीवाप वातिके शुक्रदोषे प्रतीवापो य सिद्धे चूर्णत्वेन दीयते । मात्रा चास्य दोषाद्यपेक्षया । वसुक रोमकम् । सैन्धव माणिमन्थम् । फलाम्लमम्लदाडिमादिफलम् । सक्षीर क्वाथकल्पनया सिद्ध बिल्वादिक्वाथमास्थापनम् । तत्रैवानुवासनयोग्यतायां मधुकादिसिद्ध तैलम् । तत्रैव क्षीरकुलीररसाभ्या सिद्ध तैलमुत्तरबस्ति । कुलीरो जलजप्राणिविशेष कर्कटाख्य । तेषा समभागत्वम् २८

२९ पैत्तिकशुक्रदोषे चिकित्सा ।

**२९—पैत्तिके काण्डेक्षुश्वदंष्ट्रागुडूचीसिद्ध मूर्वामधूकप्रतीवापं सर्पिष्पानम् । त्रिवृच्चूर्ण सघृतो विरेक । पयस्याश्रीपर्णीसिद्ध क्षीरयुक्तमास्थापनम् । मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च ॥ २९**

२९—पैत्तिके सुबोधम् । पयस्यया श्रीपर्ण्या च सिद्धेन क्षीरेणास्थापनम् । मधुकमुद्गपर्णीसिद्ध तैलमनुवासनमुत्तरबस्तिश्च २९

३० श्लैष्मिकशुक्रदोषे चिकित्सा ।

**३०—श्लैष्मिके पाषाणभेदाश्मन्तकामलककाथसिद्ध पिप्पलीमधुकचूर्णप्रतीवापं सर्पिष्पानम् । मदनफलकषायो वमनम् । दन्तीविडङ्गचूर्णस्तैललीढो विरेक राजवृक्षमदनफलकषायप्रगाढमास्थापनम् । मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च ॥ ३०**

३०—श्लैष्मिके पाषाणभेदादिभि सिद्ध सर्पिष्पानम् । मदनफलकषायेण वमनम् । दन्त्यादिचूर्णेन विरेक । राजवृक्षादिकषायप्रगाढमास्थापनम् । प्रगाढ भूयिष्ठं घनम् । मधुकादिसिद्ध तैलमनुवासनमुत्तरबस्तिश्च ३०

३१ वातजार्तवदोषे चिकित्सा ।

**३१—वातजे पुष्पदोषे भार्ङ्गीमधुकभद्रदारुसिद्ध सर्पिष्पानम् । काश्मर्यक्षुद्रसहासिद्ध वा क्षीरम् । मधुकसृगालविन्नाकल्कं पर्यस्तसर्पिस्सहित प्रियङ्गु-**

१५ °लैश्च माषै ए°-क. १६ °भ्या पूयपूतिनि°-क १७ °पसस°-ख १८ °च्छ्रसाधनानि। मू°-क ख १९ °र्तव-वा । त°-क ख. २० °ध्यप्रति°-ख २१ °पे शुक्रसं°-क ख, २२ °रीक्षिरय°-क ख २३ °भेदकाश्म°-क. ख २४ °जेष्यार्तवदो°-ख °भार्ङ्गीभद्र°-२५ क. ख २६ °य सर्पिर्भ्यां स°-क.

ऽयहादूर्ध्वमुपचीयते एव । अनेन च मासि मास्यभिनवं ऋतुर्भवतीति दर्शितम् ४३

४४ आर्तवसुते कालकारणं च ।

**४४ मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः । ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ॥**

४४-तत्र च पूर्वमुपचितरक्तसुतौ नियत. काल अतिस्रुतौ योनिदोषात्कम् ४४

४५-ऋतुमत्या नियमा ।

**४५-तत पुष्पदर्शने प्रथमदिवसात् प्रभृति ब्रह्मचारिणी, स्नानाद्यलङ्काररहिता, दर्भसंस्तरशायिनी, त्रिरात्रमासीत । पर्णशरावकरतलान्यतमेन यावक पयसा सिद्धमल्प कर्शनार्थमश्नीयात् । तीक्ष्णोष्णाम्ललवणानि[३१] च वर्जयेत् ॥ ४५**

४५-तत ऋतुप्राप्तौ पुष्पदर्शने प्रथमदिवसात् प्रभृति त्रिरात्रमासीतेति सबन्ध । किंभूता ब्रह्मचारिणी-पुसा असगता। स्नानादिकया शोभार्थया मृजया रहिता अलकाररहिता च दर्भशय्याशायिनी च । तस्मिश्च त्रिरात्रे पर्णादीनामन्यतमे स्थित यावकमन्न क्षीरेण सिद्ध कर्शनार्थमल्पमश्नीयात् । कर्शन रक्तशुद्धये मार्गशुद्धये च । यावक च यवमेव निस्तुषमिति तस्मिन्नेव क्रियते। तस्मिंश्च त्रिरात्रे तीक्ष्णादीनि वर्जयेद्रक्तशुद्धिमयात् ४५

४६ ऋतुमत्याश्चतुर्थादिनकृत्यम् ।

**४६-चतुर्थेऽहन्युद्वर्तिता शीतसलिलस्नातानुलिप्ताऽलकृता शुक्लमाल्याम्बरा कृतमङ्गलस्वस्त्ययनैवाविधमेव भर्तार पश्येदनन्यमना ॥ ४६**

४६-चतुर्थे त्वहन्युद्वर्तितत्वादियुक्ता तथाविधमेव उद्वर्तितत्वादियुक्त भर्तार परिजनदर्शनात् पूर्वमनन्यमना सती पश्येत् । शीतसलिलेन स्नाता पश्चाच्चानुलिप्ता सुकान्तिभिर्गन्धै । शुक्ल माल्यमम्बर च यस्या सा तथा ४६

४७ अभिलषितापत्योत्पत्ति ।

४७ तथाविधदर्शने स्वयप्रयोजनमाह-तदेति ।

**४७-तदा हि यादृशमेव पश्यति चिन्तयति वा तादृश प्रसूत इति ॥ ४७**

४८-स्नानानन्तर तिस्रो रात्रीर्वर्जयेत्सुपुत्रार्थी ।

**४८-तत स्नानात्पुनरपि गुणवत्पुत्रार्थी[३२] त्रिरात्रमुपेक्षेत । पुष्पदर्शनात्सप्तरात्रम् ॥ ४८**

४८ तत स्नानादनन्तर पुरुषो यथुत्कृष्टगुणयुक्त पुत्रमर्थयेत ततोऽन्यच्च त्रिरात्र तामुपेक्षेत न सगच्छेदित्यर्थ । स्नानदिनमुभयस्मिन्नपि त्रिरात्रे सबध्यते तेन सप्तरात्रग्रहणमष्टरात्रभ्रान्तिनिवृत्त्यर्थम् ४८

४९ पुष्पदर्शनादष्टम्यादियुग्मासु रात्रिषु सविशेत् ।

**४९-अथाष्टम्यां दशम्या द्वादश्यां वा रात्रौ पुत्रकाम. संविशेत् ॥ ४९**

४९-ततोऽनन्तर पुष्पदर्शनादष्टम्या रात्रौ पुत्रकामो नारीं संविशेद्दशम्या द्वादश्या वा ४९

५० पुष्पदर्शनात्पञ्चम्याद्ययुग्मासु दुहितृकाम. सविशेत् ।

**५०-पञ्चम्यां सप्तम्यां नवम्यां वा दुहितृकामः ॥ ५०**

५०-दुहितृकाम पञ्चम्या सप्तम्या नवम्याम् । अत्र स्नानदिनाच्च त्रिरात्रमनुपेक्षण दुहितुर्मात्रार्तवस्यैव समत्रहेतुत्वात् ५०

५१ अनन्तररात्रिपृत्तरोत्तरा रात्रय अनन्तरा ।

**५१-तासूत्तरोत्तरमायुरारोग्यैश्वर्यसौभाग्यबलवर्णेन्द्रियै[३३]सपदपत्यस्य भवति । अतः परं तत्तरोत्तरमेवायुरादीना ह्रास. ॥ ५१**

५१-एतासु यथोक्तासु पुत्रदुहितृरात्रिषु या रात्रिर्यन्य उत्तरा सा तत. पुत्रस्य दुहितुर्वा आयुरादीना हेतु । तनाष्टम्या रात्रेर्दशमी ज्येष्ठा ततोऽपि द्वादशी । एव पञ्चम्यास्ततोऽपि सप्तमी । अतोऽनन्तर त्रयोदश्यादिषु रात्रिषु यथोत्तरमेव पुत्रस्यायुरादीना ह्रास दशम्यादिषु च दुहितु ५१

५२ स्त्रीपुगर्भधारणोपपत्ति ।

**५२-तत्र युग्मासु रात्रिष्वल्पीभवत्यार्तवमयुग्मास्वाप्यायते । तस्मात्तासु क्रमात्पुत्रस्य दुहितुश्च जन्म । अत एव चानुपरतार्तवदर्शना पुत्रार्थी[३४] विप्रकृष्टेष्वप्यहस्सु नोपेयात् ॥ ५२**

५२-युग्मासु च समासु द्वितीयाचतुर्थ्यादिषु रात्रिषु समदोषबलादेर्यथोक्तवयसो मिथुनस्य गर्भारम्भकशुक्ररक्तापेक्षया। अत्राद्यरात्र्यपेक्षया वाल्पीभवति रक्तमनरतासु शुक्रस्य बाहुल्यात्पुमाञ्जायते कारणस्यानतिक्रमणात् कार्यस्य । एवमयुग्मासु प्रथमतृतीयादिषु दृष्टार्तवस्य स्वभावेन बहुत्वाच्छुक्रस्याल्पत्वाद् दुहितृजन्म। अत एव रक्तस्याल्पत्वाद्धेतोर्यत पुत्रस्य जन्म तत पुत्रार्थ पुरुषोऽनुपरतार्तवदर्शना परिदृश्यमानार्तवा विप्रकृष्टदर्शनाद्युग्मेष्वह सु स्त्रिय नोपेयात् । आर्तवे दृश्यमाने अष्टम्यादिरात्रिष्वपि पुत्रार्थी नोपेयादित्यर्थ ५२

५३ आहारवशाच्छुक्रस्य न्यूनाधिक्ये दुरपत्यता ।

**५३-यदि त्वाहारानुरोधादयुग्मासु शुक्रस्याधिकता युग्मासु च न्यूनता स्यात्तत. पुमान् स्याकृतिर्दुर्बलो हीनाङ्गो वा जायते । स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गी वा ॥ ५३**

५३-आहारादिविशेषवशाच्च यद्ययुग्मासु शुक्रबाहुल्य युग्मास्वार्तवबाहुल्य भवति तदा सयोगात्पुमान् स्त्र्याकृतित्वादियुक्त स्त्री च पुरुषाकृतित्वादियुक्ता जायते ५३

५४ क्लीबापत्यताया कारणम् ।

**५४-एकादशीत्रयोदश्योस्तु नपुंसक स्यात् ॥ ५४**

५४-एकादशीत्रयोदश्योर्नपुसक भवेत् ५४

५५ पुत्रीयो विधि ।

**५५-अथोपाध्याय. पुत्रीयं विधानमाचरेत् । शूद्रायास्तु मन्त्रवर्जितम् । यादृश च पुत्रमाशासीत तद्रूप-**

२९ °मे च याव°-क ख ३० °नार्थमाश्नी°-क ३१ °णानि वर्ज°-क ख ३२ °र्थी त्रिचतूरा°-क, °र्थी चतूरा°-ख ३३ °सपचापत्य°-क. ३४ °त्रार्थी अविषमेष्वप्य°-क., °त्रार्थी विषमेष्वप्य°-ख.

धर्णेचरिताजनपदानुचि तयति स्त्री वाच्या। तज्जन पदाहारविहारोपचारपरिच्छदाश्चानुविदधीत ॥ ५५

५५-अथेति मङ्गल। उपाध्याय पुत्रीय विधान विधिमा चरत्-कुर्वीत। शूद्रायास्तु मन्त्रवर्जित विधानमाचरेत्। स्त्री यादृश पुत्रमाशासीताभिलषेत्। तद्रूपादिमतो जनपदाननुचिन्तयति वाच्या न। सा न स्त्री त जनपद हारादीश्चानुविदधीत-कुर्वीत ५५

५६ पुत्रीयविधानात्परं दम्पत्योश्चर्या।

५६-कर्मा ते च पुमान् मासं ब्रह्मचारी सर्पि क्षीराभ्यां शाल्योदनमभिप्राश्य नात्याशितं सुखी स्नग्वी सुमना प्रीणिताङ्ग शुक्लनिवसना मौहूर्तिका नुमते रात्रिभागे कल्याणानि चिन्तयंस्तदभिकाम स्वास्तीर्णं शयनं दक्षिणेन पादेन प्रागारोहेत्। तद्विधैव च प्रमदा कर्शिताङ्गी, तैलमाषोत्तराहारा, पूर्वं वाम पादेन पुरुषस्य दक्षिणतः शय्यामधिरोहेत् ॥ ५६

५६-कर्मा ते-पुत्रीयविध्यनुष्ठानावसाने पुमान् मास ब्रह्मचारी आज्यक्षीराभ्यां शाल्यन्न भुक्त्वा नात्याशित इत्यादिक सन् मौहूर्तिकानुमते रात्रिभागे कल्याणानि चिन्तयंस्तस्यामभिकामो दक्षिणेन पादेन स्तीर्ण प्राक् स्वास्तीर्ण शयनमारोहेत्। प्रमदापि तद्विधैव पूर्वोक्तपुरुष विशेषविशिष्टैव पूर्वोक्तयवान्नभोजनेन कर्शिताङ्गी तैलमा-षोत्तराहारा पूर्वं वामेन पादेन तस्य पुरुषस्य दक्षिणतः शय्यामारोहेत् ५६

५७ शय्याधिरोहणे मन्त्रा ।

५७-तत्र मन्त्रं प्रयुञ्जीत-'आहिरसि आयुरसि, सर्वतः प्रतिष्ठासि, धाता त्वा दधातु विधाता त्वा दधातु, ब्रह्मवर्चसा भव' इति।

ब्रह्मा बृहस्पतिर्विष्णु सोम सूर्यस्तथाऽश्विनौ।
भगोऽथ मित्रावरुणौ वीरं दधतु मे सुतम् ' इति ॥

५७-तत्र मन्त्रमिति-मन्त्राथ ऊह्य ५७

५८ मन्त्रानन्तरं ततस्तत्कृत्य च।

५८-तत परस्पर साममभिरभिसान्त्व्य सहृदमनु कूल संविशेताम्। पयासे चैनां शीतोदकेन सहसा परिषिञ्चेत् ॥ ५८

५८-तत इति शय्यारोहणानन्तरं तौ परस्पर सामभि सान्त्वयित्वा सहृदमनुकूल च संविशेताम्। पयासेति— पयासे पयानेऽवमिते सरयेना स्त्रियं सहसा शीतोदकेन परिषिञ्चेत् ५८

५९ मैथुनेऽयोग्यौ स्त्रीपुमां।

५९-तत्राऽत्याशिता, क्षुधिता, पिपासिता, भीता, विमना, शोकार्ता, क्रुद्धाऽतिमेदुराऽन्यकामा, व्यवाय कामा, वा न गर्भं धत्ते विगुणं वा। तथा पुरुषोऽपि। न चासावधास्तिष्ठेत्। तथा हि स्त्रीचेद् पुमाञ्जायते पुंश्चद्या वा स्त्री ॥ ५९

५९—अथ स्त्रिया उक्तव्यवायवैपरीत्ये दोषमाह-तत्राति-तत्र व्यवाये स्त्री अत्यशितत्वादियुक्ता गर्भं न धत्ते, विगुणं वा गर्भं धत्ते तथा पुरुषोऽपीत्यनेनात्याशितत्वादिव पुरुषे णापि वर्जनीयमित्युक्तम्। पुंसो विशेषमाह-न चेति। असौ पुरुषो नाधस्तिष्ठेत्तत्र दोषमाह-तथाहीति। तथा सति स्त्रीचेद् पुमाञ्जायते ५९

६० कुब्जपार्श्वगतस्त्रीसेवननिषेध ।

६०—न च कुब्जा पार्श्वगता वा भवेत। न्युब्जायां वातो बलवान् स योनिं पीडयति। दक्षिणपार्श्वगायाः श्लेष्मा पीडितश्च्युत पिदधाति गर्भाशयम्। वाम पार्श्वगतायास्तद्वत्पित्तं विदहति तेन शुक्रं तस्मादुत्तानं बीजं गृह्णीयात्। तथा हि यथास्थानमव तिष्ठन्ति दोषा ॥ ६०

६०—तस्मिश्च काले न्युब्जा पार्श्वगता वा न भवेत उत्ता नामव भवतीति यावत्। न्युब्जा अधोमुखी। पुरुषस्याध-स्थितावपि दक्षिणपार्श्वगाया दक्षिणपार्श्वस्थ श्लेष्मा त्यक्त पित्तस्य वामपार्श्वाश्रयत्वाच्छ्लेष्मा पीडित स्वस्थाना च्च्युत पित्तेन सह गर्भाशयं तथैव पिदधाति वामपार्श्वगता यास्तावत् पित्त विदहति ६०

६१ पुंसवनविधि ।

६१—लब्धगर्भां चैनां विदित्वा नातिव्यक्तीभावाद् गर्भस्य पुष्ये पुंसवनानि प्रयुञ्जीत। द्वादशरात्रमित्य न्य। तत्रापि युग्मादिनेष्विति केचित्। प्रत्यहमित्य पर ॥ ६१

६१—अथ यथोक्तेन लक्षणेन लब्धगर्भां विदित्वा कुक्षि गौरवादिलक्षणाद्गर्भे व्यक्तीभावात्पूर्वमेव दिने पुष्य नक्षत्रवति पुत्रार्थि या भिषक् पुंसवनानि योगानि(?)प्रयुञ्जीत वक्ष्यमाणानि यै पुमांसं सूयेत। प्रथम इति पुंसवनानि इ ति। तत्राप्ययुग्मादिनं विभागयुग्मेषु दिनेष्विति कश्चित् प्रव ति। केचित्तु अपरा प्रत्यहं पुंसवनमिच्छन्ति। गर्भे लब्धमात्रपूर्वं प्रतिदिनमवेति केचित्। केचित्तु द्वादश रात्रस्यैव युग्मदिनेष्विति विशेष निक्षिपन्ति। युग्मदिनानि द्वितीयचतुर्थादीनि ६१

६२ पुंसवनविधि ।

६२—तद्यथा-लक्ष्मणा-वटशुङ्ग-सहदेवा-विश्वदेवा नामन्यतमां क्षीरेऽभिपुत्य त्रींश्चतुरो वा बिन्दून् दक्षिणे नासापुटे स्वयमासिञ्चेत्पिचुना वामे तु दुहितृकामा। न चतान् निष्ठीवेत् तथा पुष्योद्धृताया श्वेतबृहत्या मूलकल्कादस नावयेत्। तद्वच्चोत्पलपत्र कुमुदपत्र लक्ष्मणामूल वैटङ्कृ्णि चाष्टौ च नावयेत्। शुक्लमाल्याम्बरधरा च नारी पुष्योद्धृताया लक्ष्म ॥ या मूलकल्कमुदुम्बरमात्र पयसा पिबेत्पुंसवनोत्पाद

३५ तयानस्त-ग ३६ त आयुर-ग ३७ 'सोमसू-ग ३८ लभवसेताम्। प-क स ३९ श्वगताया ठ-ग ४ श्च्युतापिद-क स ४१ श्वगायास्त-क ख ४२ 'नादि प्र-स ४३ 'ट्गुङ्ग-ख ४४ विश्वदे'-क ख, ४५ तम क्षी -स ४६ ठ्ङ्गानि चा-स ४७ 'त्पादाय स्थि-क स

**नाय स्थितये च । तद्वद्गौरदण्डमपामार्गं जीवकर्षभकौ शङ्खपुष्पीमध्यदण्डां सहचरं नम्रजीवमग्निजिह्वा- मष्टौ वा वटशृङ्गाणि । शालिपिष्टस्य च पच्यमानस्योष्माणमाघ्राय तद्रसं देहल्यां स्थिता पूर्ववन्नावयेत् । यच्चान्यदपि ब्राह्मणा वृद्धास्त्रियो वा ब्रूयुस्तच्च कुर्यात् ६२**

६२—तद्वदेति पुसवनप्रदर्शनपरम् । लक्ष्मणादीनामन्यतम यथालाभ क्षीरेणाभिपुत्य वस्त्रान्तर्गतं गर्भवृद्ध्यर्थं च जपन्पवित्रान्मन्त्रान्, वामहस्तेन दक्षिणनासापुटे सिञ्चेत् । अनेनैव विधिना दुहितृकामा वामे नासापुटे सिञ्चेत् । ताश्च बिन्दून् न निष्ठीवेत् । मुखेन नोद्गिरेदेवेत्यर्थ । दुहितृकामेति प्रासाङ्गिकम् । तथैव वामदक्षिणभेदेन परिषेचनात्पुंस्त्रियौ भवत । वामे दुहिता दक्षिणे पुमान् । एवं पुष्योद्धृताया श्वेतबृहत्या कल्कात्सुश्लक्ष्णापिष्टाद्यो रसस्त नावयेत् । तद्वदेव वामदक्षिणभेदेन रसविधानेनोत्पलपत्रादीनामन्यतमं नावयेत् । तथैवाष्टौ वटशृङ्गादीनि (?) । शृङ्ग प्रथमोद्भिन्न पत्राङ्कुरम् । शुक्लमाल्यादिका नारी पुष्योद्धृताया लक्ष्मणाया मूलकल्कमुदुम्बरफलमात्र पयसा पिबेत्पुत्रस्योत्पादनाय स्थितये च नासया वा गर्भिण्या मुखेन वा पीतामिति केचित् । तत्कालमपि पीतो व्यक्तस्यापि पुत्रस्य परिस्थापन रक्षाभिधाना स्थितिं करोति । उदुम्बर नाम फलविशेष । क्षीर च पानायालोडनोपयोगि । सर्वाणि तद्वल्लक्ष्मणाविधानेन गौरदण्डादीन्यपि पिबेत् । सख्यायामनियम । तेन यथासम्भवमेक द्वे त्रीणि । शालिपिष्टस्य वा पिण्डीकृतस्याग्निना पच्यमानस्योष्माणमाघ्राय तत एव पीडित सा योषित् द्वारदेहल्या द्वारशाखाधारे स्थिता दक्षिणे नासापुटे स्वय सिञ्चेदिति पुसवनानि । तथान्यदपि यत्किञ्चिद् वृद्धास्त्रियो ब्राह्मणाश्च ब्रूयुस्तत्सर्वं योषित् कुर्यात् । वृद्धस्त्रीग्रहण गर्भिण्या हेयोपादेयतत्फलानामनुभवाभ्यासेन परिज्ञानविशेषप्रदर्शनार्थं न तु समान्येन वृद्धस्त्रीवचनस्यानुष्ठेयत्वम् । तथैव ब्राह्मणवचन श्रौतस्मार्तविधानोपलक्षणार्थम् ६२

**टिप्पणी**–'पुत्रकाकाररक्तारपविन्दुभिर्लाञ्छितच्छदा । **लक्ष्मणा** पुत्रजननी बस्तगन्धाकृतिर्भवेत् । इति लक्ष्मणालक्षणम् । कन्दलताविशेष । श्वेतकण्टकारीति केचित् । पिचु कार्पासतूलक । ६२

६३ गर्भस्थापनानि ।

**६३—ततः प्रजास्थापनाख्यौ[४९] * दशौषधी शिरसा दक्षिणेन च पाणिना धारयेत् । एताभिश्च सिद्ध पयो घृतं वा पिबेत् । एताभिरेव पुष्ये पुष्ये स्नायात् सदा च समालभेत । तथा सर्वासां जीवनीयानामौषधीनां सदोपयोगैस्तैस्तैर्विधानै[५०] इति । गर्भस्थापनानि ॥ ६३**

६३–ततोऽनन्तरमैन्द्रीब्राह्मीत्यादिना दशौषधी प्रजास्थापनाख्या गर्भिणी शिरसा धारयेत्तथा दक्षिणेन च पाणिना । तथा ताभि प्रजास्थापनाख्याभिर्यथास्वविधानेन सिद्ध पयो घृतं वा पिबेत् । सद्योधम् । तैस्तैर्विधानैर्विधारणस्नानादिभिरिति गर्भस्थापनानि यैर्गर्भो न स्रवति ६३

६४ गर्भिणीपरिचारकादीना लक्षणम् ।

**६४—सौम्याकृतिवचनोपचारचेष्टाश्च प्रियाहितानुवर्तिनः परिचारकास्तथा भर्तेति ॥ ६४**

६४—तथा सौम्याकृत्यादियुक्ता परिचारका भर्ता च गर्भस्थापनम् । सौम्या आकृत्यादयश्चेष्टान्ता येषा ते तथोक्ता प्रियाश्च ते क्रियाश्चेष्टास्तथा हिताश्चानुवर्तिनश्च तथोक्ता ६४

६५ पुनरुपगमनकाल ।

**६५—पुनश्चैनां मासादुपेयात् ॥ ६५**

६५ एना च लब्धगर्भा मासादुपेयादूर्ध्वमिति सबध्यते । **नेद मासादुपगमनविधानपरमुच्यते किं तर्हि मासमत्यन्तप्रतिषेधपरम् ॥ ६५**

६६ गर्भस्य वर्णविशेषहेतव ।

**६६ तत्र शुक्रे शुक्ले घृतमण्डाभे वा गर्भस्य गौरत्वं, तैलाभे कृष्णत्वं, मध्वाभे श्यामत्वम् । तथा क्षीरादिमधुराणामुपयोगान्मातुरुदकविहाराच्च गौरता तिलान्नविदाहिना कृष्णता । व्यामिश्राणां श्यामता । देशकुलानुवृत्तितश्च वर्णभेदः । तथा तेजोधातोरुदकाकाशधातुसंपर्काद्गौरता, भूवायुसंपर्कात्कृष्णता, सर्वधातुसाम्ये श्यामता ॥ ६६**

६६ अनन्तर गर्भस्य वर्णविशेषहेतुप्रदर्शन करोति **तत्र शुक्रेत्यादि**–शुक्र विशिनष्टि पुरुषाहारादिहेतुना शुक्रस्यानेकशो दृष्टेन वर्णेन भविष्यतस्तद्गर्भस्य वर्णविशेषनियम उच्यते । एतेन **वर्णविशेषस्य पितुरायत्तत्वं दर्शितम् । मातापि अन्तर्वत्नी सती यदा सौम्यान्यासेवते तदा गर्भस्य गौरता ।** उदकविहार –जलक्रीडा । आग्नेयैस्तिलादिभि कृष्णता । विदाहिन सर्वे द्रव्यतो गुणतः कर्मतश्च तेनोपदेशाधिवासोऽपि गृहीत । मिश्राणा सेवनात् श्यावत्वम् । एव स्थितिदेशकुलानुवृत्त्यापि वर्णभेदो भवति । यथा औत्तरापथकाना गौरता, दाक्षिणात्यानामान्ध्रद्रविडपाण्ड्यादीना कृष्णता । मध्यदेशे श्यावत्वमित्येवमादि । तथा कुलेऽपि जात्या शिल्प्यादिभेदभिन्ने क्वचिद्गौरत्व क्वचित् कृष्णत्व क्वचिच्छ्यावत्व चेति । न केवलमेतदेव वर्णविशेषकारण यावद्गर्भारम्भकमहाभूताधिक्यमपि । एतद्दर्शयति **तथेत्यादि** । तेजोधातोर्वर्णविशेषकर्तृत्वे सति प्राधान्याद्वर्णसग्रहेष्वाधिक्येनैवान्वयित्वम् । तेषा चाहारविहार-देशकुलादिभूताधिक्याना परस्परनानाविधभेदभिन्नाना मिश्रीभावेन वर्णाना मानम् । इति गर्भस्य वर्णविशेषताकरा भावा उक्ता ६६

६७ गर्भस्य सत्त्वविशेषकारणानि ।

**६७ सत्त्वविशेषकराणि पुनर्मातापितृसत्त्वोदयोऽन्त-**

४८ वा वटशृङ्गानि । पि°–ख ४९ °ख्या महौष°–५० °दा चेत्थमाल°–क ख ५१ °गस्तैस्तैर्विधिभि । इ°–क ख. ५२ °त्वान्यन्तर्वत्न्या श्रु°–क. ख. * प्रजास्थापनाख्या दशौषधय –ऐन्द्री, ब्राह्मी, शतवीर्या, सहस्रवीर्या, अमोघा, अव्यथा, शिवा, अरिष्टा, वाट्यपुष्पी, विष्वक्सेनकान्ता इति ( च सू. ४ ४९ )

वत्न्या श्रुतयश्चाभीक्ष्णं स्वोपचित च कर्म भवति।
पूर्वोभ्यासश्चेति ६७

६७–सत्त्वविशेष ।।प ।र ।त्वमुच्यतमातेत्यादि ।गभस्य हेतदेव प्रधान यत्सत्त्व चित्तम्।सत्व ।च्दन शुद्ध मन उच्यत। यच्च परमात्मन चेतनस्वरूपस्यापि मनसा सयुक्तस्य त नादिभिर्व्यक्त तेय त मनम उपचारादुच्यत । तस्य च मनसो रजस्तमो यामशुद्धि । ताभ्यामेवास नभदेन परस्पर नानासयो ।।विशेषेण तस्य सत्त्वस्य विशेषा उत्पद्यन्ते। गर्भस्य तु सत्त्वविशेषप्राप्तौ किं कार ।मित्युच्यते–मातापितृस त्वादय इति। आदिग्रहणेन मातापितृमर्वाधिना शील कुलाचारशौचादाना ग्रहणम्। अतर्वत्न्या गर्भिण्या । अभीक्ष्ण पुन पुनर्विहिता श्रुतया गर्भस्थ सत्त्वविशेषपरा । तेन सुसत्त्वादीना बुद्धादीना सर्वानि य श्रुतयो गर्भिण्या अभीक्ष्ण श्रुता सुन वमेव गभ जनयन्ति । अन्येषा दुस्सत्त्वम् गर्भेण चान्यस्मिज मनि यदुपार्जित कर्म धर्माध ।र्म ।तद्वशा दपि सत्त्वविशेष सपद्यते। तथा अ यज मक्षहस्राभ्यस्तवा सनावशा पि सत्त्वविशेषो भवति । केषाचित् सत्त्वकर ।। परस्परमयो ।विशेष । गभस्य सत्त्वविशेषाणामान त्यम् ६७

६८ भवन्ति चात्र—

६८–भवन्ति चात्रेति तत्रत्रीति महेतुरध्यायोपसहार श्लोकसमुच्चयप्रस्तनाय ६८

६९ दीर्घात्दीर्घकालिकानवस्थिते प्रया नम्।

६९–घृतक्षीरादिनित्यासु मुदितासु च फात्मसु ।
आतर्व तिष्ठति चिर विपरीतास्ततोऽन्यथा ॥

६९–घृतादिसौम्यमाहारम् या नित्य सेव त, याश्च नित्य मुदिता हर्षपरा, याश्च सौम्यप्रकृतयस्तासामा तव गभयोग्य शा।निमृतौ बहुकाल भवति। न तु क्षीयते। नापि विकृतिमायातीत्यर्थ । यथोक्तलक्षणविपरीतासु विप रीत चिर न तिष्ठतीत्यर्थ ६९

७ ।दुष्टसुमानवश्यो निपातादेव गभग्रह ।म्।

७०–निपातान्व गृह्णाति राग वासो यथाऽमल म् ।
ध्रुव गर्भं तथा बीजं क्षेत्र बीजमुपस्कृतम् ॥

७ –।दुष्ट।नातवमित्यादनिपातादेवत्यादिना हेतुमुपसहर ति–निपातादिति। अमल निमल, वासा निपातमात्रा व यथा ध्रुवमवश्य राग गृह्णाति, तथैवोपस्कृत शुध्यादिमस्तार वशेनोत्पत्तियोग्यत्व स्त्रीशरीराख्यं क्षेत्र ध्रुवमवश्य गभ गृह्णाति तथैव बीजमन तरोक्तेनाऽऽहारादिना ध्रुवमुपनि पातादेव गभ गृह्णाति ७०

७१ कालेऽनुष्ठितस्य पुसवनस्य साधकता।

७१–अविरुद्धे ध्रुव दैवे काल युत्तस्य कमण ।
सिद्धि पुंसवनाद्यस्मात्पूर्वं व्यक्ते प्रयोजयेत् ॥

७१–अ।त्तमिमावाद्गमस्येत्यत्र सहेतुरमुपसहरति– अविरुद्ध इत्यादि–अस्मोद्धतो व्यक्ते पूर्वं पुसवना।दि प्रयो जयेत्। यत फलासेर्योग्ये काले प्रयुक्तस्य कर्मण क्रियाया सिद्धिध्रुवमवश्यमाविनी दृष्टा। अन्यलिङ्गाभिमुखस्य बाजस्य ततो निवृत्तिं कृत्वा यथाभिमतलिङ्गयोजन प्रभावात् क्रियत। तच्च नि पन्ने कार्ये निष्प्रयोजनम्। न हि विशिष्ट वर्णकापासार्थी निष्पन्ने फले ।सुप याति। कालात् कालेऽपि युक्तस्य कमण सिद्धन दृश्यति। नोयपरिहारायाविरुद्ध इति विशेष ।म्। विरुद्ध हि दैवे बलवति पूवज मनि कृते कमणि कालेऽपि युक्ते पौरुषस्य न सिद्धिरित्यर्थ ७१

७२ पुसवनादिविधिना जाताना पुन ।। वर्णनम्।

७२–जाताश्चैव रूपवन्तो महासत्त्वाश्चिरायुष ।
ऋणान्मोचयितार स्यु सुपुत्रा पुत्रिणा मता ।

७२–एवंविधेन सत्स्कारेण सुपुत्र मपचत इत्यत्र जाता इत्या दिना प्रयोजनकथनम्। एव विधिना जाता सत्पुत्रा याम पूजिता रूपादिमन्त पुत्रिणा ऋणमोचयितार स्युरिति। पुत्रो हि देवर्षिपि ।।ऋ ।वान् भवतीति वेदवचनम् ७२

टिप्पणी–टीकाया वेदवचनमिति–' जायमानो वै ब्राह्म णस्त्रिभिर्ऋणवा जायते–ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्य प्रजया पितृभ्य । एष वा अनृणो य पुत्री, यज्वा, ब्रह्मचा रिवासी' (ब्रह्मचर्येण वेदाभ्यासेन ब्रह्मचारित्वेन गुरुकुले वस तीति ब्रह्मचारिवासी (तै स ६ ३ १०) इत्यादि वेदवचन मिति भाव ७२

७३–दैवताचारशौचादिरताना मह।।पुत्रोत्पत्ति ।

७३–दैवताचारशौचादिरता सूते महागु ।म् ।
धावत्येव धावचरित प्राग्जन्माभ्यासयोगत ॥

७३–तथा दैवतादिरता मह।।गुदारगुण पुत्रं सूते। एन च तथाविधमातृमभूत तथा स्वस्वर्मवशात् पूर्वानेकजन्माभ्यास योगेन तथाविधमेवाचरित धावत्याश्रयाति ७३

७४ विशिष्टपुरुषसमा ।मा।वे गर्भोत्पत्ति ।

७४–यापिताऽपि स्ववत्येव शुक्रं पुंस समागमे ।
गभस्य तत्र किञ्चित्तु करोतीति न चि त्यते ॥

इति वाचस्पतिसिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्ग संग्रहसहितायां शारीरस्थाने पुत्रकामीया नाम प्रथमोऽध्याय ।

७४–योषित इत्यादिना प्रतिनिराकारायाभ्यते–यापितोऽपि विशिष्टे पुम समागमे शुक्र स्रवत्येव, न केवल योषित समागमेषु पुम स्रवतीत्यपिशब्दस्यार्थ । तत्र स्त्रीपुरुषयो भावलाभे सर्वसमत्वम्। तथा च समालिङ्गयो समकाल योन्यानवरतसगमेन ग्लान्यादय समा दृष्टा एवेति । तच्च योषित स्रुतमपि गभस्य न किञ्चिदत करोति नोपकाराय भवत्यतो न विचिन्त्यते । न हि स्त्रीशरीरच्युतस्य बहि प्रवृत्तस्य पुन क्षेत्रलाभ इति ७४

इति श्रीम महामहोपाध्यायेन्दुविरचितायामष्टाङ्ग संग्रहव्याख्याया शशिलेखाया शारीरस्थाने प्रथमोऽध्याय ॥

~0~

५२ व्या श्रवणानि चाभीक्ष्णा स्वो –क स

# गर्भावक्रान्तिर्द्वितीयोऽध्यायः ।

( उपोद्घात. )

पूर्वस्मिन्नध्याये पुत्रकाममाविकृत्योक्त सम्प्रति तु तस्यैव पुत्रस्य निषेकात्प्रभृति योगक्षेमौ यथा सभवत, यथा च मातरि तिष्ठति यथा च न व्यापद्यते अव्यापन्न च यथा सुख सूत इति प्रदर्शनार्थमध्यायारम्भ ।

१ प्रतिज्ञा ।

**७५-अथातो गर्भावक्रान्ति शारीरं व्याख्यास्याम. । इतिह स्माहुरात्रेयादयो महर्षय: ॥ १**

**७५-अथात इत्यादि** । अत्र **गर्भ**शब्देन मनस्सयोगाच्चेतनेनात्मनाधिष्ठिताना महाभूताना विकारविशेष उच्यते । तस्यावक्रमण प्राप्ति स्वरूपलाभो यास्मिन्नध्याये निर्णीयते सोऽप्युपचारात्तच्छब्देनोच्यते ७५

२ गर्भोत्पत्तिप्रकार ।

**७६-गते पुराणे रजसि नवेऽवस्थिते शुद्धे गर्भस्याशये मार्गे च बीजात्मना शुक्रमविकृतमविकृतेन वायुना प्रेरितमन्यैश्च महाभूतैरनुगतमार्तवेनाभिमूर्च्छितमन्वक्षमेव रागादिक्लेशवशानुवर्तिना स्वकर्मचोदितेन मनोजवेन जीवेनाभिससृष्ट गर्भाशयमुपयाति ॥ २**

७६-सा च गर्भस्यावक्रान्तिर्गते **पुराण इत्यादिना** प्रस्तूयते। **पुराणे**ऽतीते कर्मत सञ्चिते रजसि दुष्टरक्ते गते वायुना स्त्रीदेहाद्बहि: प्रेरिते ऋतोराद्यदिनत्रय पश्चान्नवे साम्प्रतिकमासभवेऽवस्थिते आर्तवमशे लब्धप्रतिष्ठे सति शुद्धे च गर्भस्याशये दोषानुपहते मार्गे च शुद्धे येनानुपहत शुक्रं क्षेत्र प्राप्नोति । शुद्ध इति रजसा सबध्यते गर्भाशयमार्गाभ्या च । शुद्धिश्च स्वाभाविक्यौपाधिकी च । औपाधिकी द्रव्यसस्कारकृता । बीजात्मना गर्भकारणमहाभूतस्वभावेन शुक्रमविकृतमविकृतेन च हर्षोदीरितेन वायुना अङ्गादङ्गात् प्रेरितमन्यैश्च सूक्ष्मस्वरूपेर्मन सहचारिभिस्तन्मात्राख्यैर्महाभूतैरनुगत स्त्रीक्षेत्रप्राप्त्या कर्मवशादार्तवेन मिश्रीभूतमन्वक्ष मिश्रीभावाहीनकालमेव रागादीना वशे योऽनुवर्तते तथाविधेन मनोजवेन जीवेनाभिससृष्ट प्राप्तसयोग गर्भाशय शुक्रमुपयाति । रागद्वेषाविद्यास्मिताभिनिवेशा **क्लेशा:** । एते पञ्च मिथ्याज्ञानानि । न प्रमाण न चाप्रमाण विपर्ययमात्रमिति कृत्वा अविद्या मूल क्लेशाना शेषाणाम् । सुखानुशायी राग· तत्प्रभेद एव द्वेष **क्रोध.** । अस्मिताभिनिवेशौ मोहशब्देनोक्तौ । तत्र **अविद्या** या अनित्ये पृथिव्यादौ नित्यबुद्धि, बीजगर्भवासादिना अशुचौ स्त्रीशरीरादौ शुचिबुद्धि दु खे च परिणामतापादिभिरुपभोगसुखे सुखबुद्धिरनात्मनि च बाह्योपकरणभावेषु शरीरे चात्मबुद्धिरिति । आत्मनो बुद्धेश्चाभेदग्रह **अस्मिता** । अनुभूतसुखस्य तत्स्मृत्या तत्कारणप्राप्तौ तृष्णा राग । अनुभूतदु खस्य तत्प्रत्ययनेषु तात्कालिकी जिघासा द्वेष इति क्लेशा । अविद्या चानादि: । एषा क्लेशाना वशमनुवर्तते यो जीव आत्मा स तथोक्त । शुभाशुभानि कर्माणि तानि चात्मन । क्लेशमूलत्वात् कर्मणाम् । अमूनि च कर्माणि पच्यमानानि विपाकेन सुखासुखलक्षणेन पुनरविधामेव पुष्णन्त्यतोऽविच्छिन्नेन प्रवाहेण कर्मफलानुरूपेषु योन्यन्तरेष्वात्मनो मन प्रभृतिभि सयोगान्नित्यस्यापि जन्मशब्देनोच्यते । मनोजवेनेत्यात्मनो निष्क्रियत्वान्मनसा युक्तस्य क्रियावत्त्वामिव दर्शयति । एवभूत शुक्र गर्भाशयमुपयाति ७६

३ कार्याणा कारणानुविधायित्वम् ।

**७७-कार्याणा च कारणानुविधायित्वात्तत्स्वभावतां प्रतिपद्यते ३**

७७—तच्च शुक्र कार्याणा कारणानुविधायित्वाद्धेतोस्तत्स्वभावता कारणसादृश्य प्रतिपद्यते, **कार्य हि कारणस्य स्वरूपमनुगच्छति** । तथा च तिलेभ्यस्तिला एव जायन्ते न माषा । **कारणं** च यद्गर्भस्य मातृपितृमहाभूतदेशकालगर्भाशयमात्राहारविहारादिकम् । तस्य कारणस्य स्वरूपानुगमनाद्गर्भस्य तदाकृत्यादिमतश्च सभव । तत एव कारणवशादाकृत्यादिवैलक्षण्यम् ७७

४ विभिन्नलिङ्गापत्योत्पत्तिकारणम् ।

**७८-तत एव च शुक्रस्य बाहुल्यात्पुमानार्तवस्य बाहुल्यात्स्त्री, तयो: साम्ये[4] नपुंसकम् ४**

७८—अत एव च कारणानुविधायित्वादेव पुस्कारणस्य शुक्रस्य बाहुल्यात् पुमान् जायते रक्तस्य तु योषित् । कारणयो: साम्ये नपुसकमिति ७८

५ अनेकापत्योत्पत्तिकारणम् ।

**७९-शुक्रार्तवेऽनिलेन खण्डशो भिन्ने यथाविभागमपत्यानामुत्पत्ति· ५**

७९ मिश्रीभूत च शुक्रार्तव स्वविशिष्टहेतुकोऽनिलो यदा खण्डश करोति तदा बहूनामप्यपत्याना सभव ७९

६ वियोनिविकृताकाराणामपत्यानामुत्पत्तौ कारणम् ।

**८०-विकृते वियोन्याकृतीना च ६**

८० यदा त्वनिलो वाऽन्यो वा दोष शुक्रार्तव केनचित्प्रकारेण विकरोति तदा विकृतयोनीना विकृताकृतीना च गर्भाणा सभव । **विकृतयोनयो** ये योषित पुंसा संसृष्टाया. मृगमेषमार्जारादयो जायन्ते ते। **विकृताकृतय** काणपङ्ग्वादय ८०

१ °क्रान्तिश°. क. ख. २ स्याम । ग०-क. ख. ३ °त्वात्तत्समागता प्र°-ग. ४°म्येन न° पु°-ख. ग.

## यमौ गर्भौ ।



७ सद्योगृहीतगर्भाया लक्षणानि ।

८१—अथ नाया सद्यो गृहीतगर्भायाश्च लिङ्ग योन्या बीजग्रहण तृप्तिर्गरिमा स्फुरणं शुक्रार्तवयोरनुबन्धश्च । तथा प्रहर्षो दक्षिणस्तनाऽङ्गसाद प्रसेको हृदय-व्यथा ग्लानि पिपासा च ॥ ७

८१—अथेति प्रस्तावे । यो या बीजग्रहणादिव सद्यो गर्भाधारणात्प्राप्तगर्भाया नार्या लक्षणम् । योन्या बीजस्य शुक्रस्य ग्रहणं प्रस्रवाभाव । तृप्ति आहारविशेषाया रसानभिलाषिता शरीरप्रीणन, वा। गुरुत्वमङ्गस्य । तस्यैव स्फुरण चालनम्। शुक्रस्यार्तवस्य वा परस्परमवेनानुबन्धनम् । अननुबन्धनम्–गर्भविदारणादिना प्रति बन्ध । हृदुक्तेनायुक्त प्रसक्त एव हृल्लास ८१

८ व्यक्तगर्भाया लक्षणानि ।

८२—क्रमेण तु व्यक्तगर्भाया कुक्षिगात्रगौरव क्षाम नेत्रपरता योनिरोमसलुलन निद्रा जृम्भणं मूर्च्छा छर्दिरराचि पादशोफोऽश्लेऽभिलाषस्तेषु तेषु चाधा वचेषु भावेष्विति ८

८२—व्यालम्बने । व्यक्तगर्भाया क्रमणैव कुक्षिगात्रादि गौरवादिलक्षणम् । क्रमेणेति यथा यथा प्रवर्धते तथा तथा कुक्षिगौरवादयो भवन्ति । क्षामशब्दो नेत्रपरताभ्या च सम्बध्यते । योनिरोम्णा च सलुलन चलनम्। योनिरोमा वा सलुलन व्यालोलता । तेषु तेष्वनुक्तेष्वपि स्वकल्पितेषु नानाविधेषूच्चावचेष्वनियतेषु भावेष्वाहारविहारादिषूपयोगि ष्वभिलाष इति व्यक्तगर्भाया लिङ्गम् । व्यक्त स्फुटो नातिमपूर्णो गर्भो यस्या ८२

९ जरायोरुत्पत्ति ।

८३—तस्याश्च रजोवाहिना स्रोतसा वर्त्मा युपरुध्यन्त गर्भेण । तस्मात्तत परमार्तव न दृश्यते । ततस्तदधो प्रतिहतमपरमपर चोपचीयमानमपरे त्याहु, जरायुरित्यन्ये। स्थिते रक्ते रोमराजि प्रादुर्भवति ॥ ९

८३—तस्याश्च व्यक्तगर्भाया रजोवहानि स्रोतांसि यैः स्रोतोभिरुन्नमन रक्तमृतुकाले बहिर्वहति तेषा वर्त्मानि मार्गाणि मुखानि गर्भेण नेवाहारेणाच्छाद्य ते तस्मात्कारणात् गर्भस्य व्यक्तीभावात्परमार्तवं न प्रवर्तते । यत्तु कदाचिद्दृश्यते तद्वैकृतम् । तदेव चार्तवमधोगमने गर्भेण प्रतिहतमाहारपरिणामाच्च प्रतिदिनमुपचीयमान गर्भस्याश्रय वापरा गर्भनाभ्याख्या मपद्यत इति केचिदाहु । अन्ये पुराणाचार्यास्तदार्तवं जरायुभावात् परिणमतीत्याहु । तस्मिन्नेव रक्ते स्थिते कोष्ठ एवावरुद्ध स्त्रिया नाभेरधो रोमराजि प्रादुर्भवति । तेन रोमराज्यास्तदेव जरायो सम्बन्धि कारणमुक्तम् ८३

१० गर्भिण्या पीनकपोलपयोधरतादि ।

८४—जरायुरोधे चोर्ध्वमसृक् प्रतिपद्यते । तस्मात्पीनकपोलपयोधरता कृष्णोष्ठचूचुकत्व च ॥ १०

८४—तदूध्वार्तवं बहु जरायुभावेन प्रतिघातादूर्ध्व प्रतिपन्न कपोलयो पयोधरयोश्च पीनत्वं स्थौल्य करोत्योष्ठयोश्चूचुकयोश्च स्तनमुखाख्ययोरिति । तत ऊर्ध्वप्रतिपन्नाच्चाधद् स्तनप्रान्ते तत्रस्थानस्थितेन श्लेष्मणा श्वेतेन कृतोपराग स्तन्यता याति ८४

११ स्तन्यप्रवृत्तौ कारणम् ।

८५—स्तन्यमयमेव च कफोपरञ्जित स्तन्यतामुपगत प्रसूताया पुनराहाररसेनाप्यायते ॥ ११

८५—यत्तद् रक्त यतो याति प्रसूताया आहाररसेनापि दर्पेन प्रमावादाप्यायत आमस्थानकक्षयाचेन प्रसूताया मावि स्तन्य नियतकाल भवति ८५

१२ अपत्यप्रवृत्त्युत्पत्ति ।

८६—तत्र प्रथमे मासे कलल जायते । द्वितीये घन पेश्यर्बुदं वा तेभ्य क्रमात् पुंस्त्रीनपुंसकानि । तृतीये पञ्चधा प्ररोहति । तद्यथा—सक्थिनी, बाहू, शिरश्च , सक्थ्यादिप्ररोहैककालमेव च सर्वाङ्गावयवेन्द्रियाणि युगपत्संभवन्त्यन्यत्र जन्मोत्तरकालजन्मभ्यो दन्तादि भ्य क्रमेण तु स्फुटीभवन्ति । एषा प्रकृति । विकृतिरतोऽन्यथा ॥ १२

८६—अतोऽनन्तर गर्भस्याप्रसन्नमवस्थादिकं प्रदर्श्यते। तत्र प्रथमे मासि कललक्रमेण भवति। कलल गृहीतकाठिन्यम् । द्वितीये तु मासे काठिन्यक्रमेण यदा पुमान सम्पद्यते तदा घनो भवति । घन नातिदीर्घपरिवृत्ता मांसप्राय । यदा तु स्त्री सम्पद्यते तदा पेशी चतुरस्रा भवति। यदा तु नपुंसकं तदार्बुद परिवृत्त भवति । तृतीये तु मासे घन पेशी वार्बुद वा साभा येन गर्भे पञ्चधा प्ररोहति । अधिकरणविशाले च'इति*धाप्रलय । द्वे सक्थिनी । द्वौ बाहू, शिरश्च पञ्चमं । सक्थ्यादिप्ररोहसमानकालमेव सर्वाङ्गावयवानामिन्द्रियाणां च सभव । अङ्ग शरीर तस्यावयवा अङ्गावयवा सर्वे च तेऽङ्गावयवास्तथोक्ता । सर्वशब्देन बाह्याभिमानवत्त्वमुच्यते। युगपच्छब्देन परस्परैककालत्वम् । जन्मोत्तरकालमाविना रोमदन्तादीनामङ्गावयवत्वेन तत्कालसम्भवान्निधारणम्। ते हि दन्तादयो जातस्य जायन्त इति। तानि चावयवे। द्वयाणि दशसु मासेषु गर्भस्य स्फुटाभवन्ति। एषा प्रकृतिरतोऽन्यथा विकृतिर्ज्ञेया। तेनैतदुक्त भवति–उपघातकाराभाव एष सभवक्रम । यदा तु लक्ष्येणोपघात कारणमास्थितस्तदा तदनुरूप्यणैव विलक्षणा विकृति । यथोक्तक्रमवपरीत्य विकृतिरुच्यत इत्य यथार्थ ८६

१३ विशिष्टलिङ्गस्यापत्यस्य सभवे कारणम्।

८७—यथार्तव च गर्भस्य पुंस्त्रीनपुंसका यतमालिङ्गानुरूपा एव भावा मनसि शरीरे च संतिष्ठ ते। यद्यपि

५ स्तुवा घ —ग ६ 'क्षिमागौ —ख ग ७ नाक्षियो —क । ताक्षियो —ख ८ ते तु र —क ख ९ कोपचितस्त —क १० ए तु स्पष्टी भ —क ११ 'पा भा —ग *पा सू. ५ ४३

**कालिङ्गसकरे तु यतो भूयस्त्वं ततोऽन्यतरा भावा. १३**

८७—ननु द्वितीये घन पेश्यर्बुदं वा पुस्त्रीनपुसकाख्य जायत इति तत्र हेतुर्न ज्ञायते केन हेतुना सदृशेऽपि करचरणादिभिरङ्गावयवैस्त्र्यादिकृतो गर्भस्य विशेषो भवतीत्यत आह-**यथास्वमित्यादि । यथास्वं** प्रत्यात्म । गर्भस्यान्यतमालिङ्गस्यानुरूपा भावा मनसि शरीरे **च** सतिष्ठन्ते । तेनैतदुक्त भवति-गर्भस्य सभवत एव स्वकर्महेतुका भीरुत्वादयो मनस्यधोगुरुत्वादयश्च शरीरे सतिष्ठन्ते । ये स्त्रीनपुसकहेतवस्त एव क्लैब्यादयस्त्र्यादीना वैशेषिकाणि लिङ्गानि । तथा च क्लैब्याधोगुरुत्वादयस्त्र्याख्य विशेषमारभन्ते । अक्लैब्याधोगुरुत्वादय. पुमाख्यमुभयसमत्वेन नपुसकमिति । अतस्तेषा वैशेषिकगुणत्वम् । अतस्तेषा च **वैशेषिकाणां** लिङ्गाना क्लैब्यभीरुत्वादीना स्त्रीपुसकारणाना सकरे मिश्रीभावे यतो भूयस्त्वमेषामेव वैशेषिकाणा प्रभूतत्व ततोऽन्यतरा भावास्तैरेव भूयोभिरन्यतरस्य स्त्रिया पुरुषस्य वा भाव । उभयेषामपि भूयस्त्वे नपुसकस्येति ८७

१४ स्त्रीपुनपुसत्वसपादका भावा ।

**८८—तद्यथा—क्लैब्य भीरुत्वमवैशारद्य मोहोऽनवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दव गर्भाशयबीजभागस्तथायुक्ताश्चापरे स्त्रीकरा भावाः । ततो विपरीता पुंस्कराः । संकीर्णा नपुंसककराः ॥ १४**

८८ ननु के ते भावास्त्र्याद्यन्यतमालिङ्गानुरूपा इत्याह-तद्यथेत्यादि **क्लैब्यादयो** मनोधर्मा , **अधोगुरुत्वादयश्च** शरीरधर्मा स्त्रीकरा भावा । कर्महेतुका ये ते स्त्र्याख्यविशेषमभिनिर्वर्तयन्ति । तुल्येष्वपि करणादिपु क्लैब्य निस्तेजस्त्वात् । बुद्धेरवैशारद्य मौग्ध्यम् । मोहोऽसम्यग्ज्ञानम् । अनवस्थान चलचित्तत्वम् । इति **मन.संश्रया. स्त्रीकरा भावा** । अधोगुरुत्व पश्चिमकायभागगौरवम् । असहनन मासास्थिसन्ध्यादीनामस्थितानिविष्टत्वम् । शैथिल्यमनिबिडावयवदेहत्वम् । मार्दव शिथिलस्यापि वस्त्रादेर्दृश्यते । गर्भाशयकारणो बीजभागो मातृसभवो येनोत्पद्यमानस्त्रीशरीरे गर्भाशयाख्योऽन्तरवयव सपद्यते । तथायुक्ता स्त्रीसभाविनोऽपरे योनिस्तनादिबीजभागा. । स्तनादीनामुत्तरकालभावित्वस्य समर्थो बीजभागो योग्यकालप्रतीक्षोऽदृश्यमानोऽप्यसत्त्वेन न विज्ञेय इति **शारीरः** स्त्रिया **स्त्रीकरा भावा** । एत एव मन ःशरीराश्रया भावा यथाक्रम वैपरीत्यै पुस्त्वेन व्याख्येया । सकीर्णा साम्येन मिश्रीभूता नपुसककरा इत्यादि ८८

१५ तृतीयमासात्प्रभृति गभे वेदनादिसभव ।

**८९—तदा चार्थे वेदना प्रव्यक्ता भवति । ततश्च तत्प्रभृति स्पन्दतेऽभिलाष पञ्चेन्द्रियार्थेषु करोति ॥ १५**

८९—अस्य च गर्भस्य **तदा**—तृतीये मासे **वेदना** चेतना **प्रव्यक्ता** स्फुटा भवति । ततोऽनन्तरमेव स्वेच्छया स्पन्दते इन्द्रियार्थेषु स्पर्शादिषु अभिलाष करोति ८९

१६ गर्भिण्या द्विहृदयत्वम् ।

**९० मातृजं ह्यस्य हृदयं तद्रसहारिणीभिर्धमनीभिर्मातृहृदयेनाभिसंबद्धं भवति । तस्मात्तयोस्ताभिः श्रद्धा सपद्यते । तथा च द्विहृदयां नारीं दौर्हृदिनीमित्याचक्षते ॥ १६**

९०—अस्मिन्नेव च काले नारी दौर्हृदिनी भवति । दौर्हृदिनी द्विहृदया कथमित्याह—**मातृजमित्यादि**—अस्य गर्भस्य मातृज हृदय भवति मातुर्बीजभागेन मृदुना आर्तवाख्येन जायते । तच्च गर्भहृदय रसवहाभिर्नाडीभिर्मातृहृदयेन सबद्धं भवति । तेन गर्भस्येच्छया माता व्याप्यते मातुश्च गर्भ इति । अतो माता द्विहृदया तृतीयमास्युच्यते ९०

१७ गर्भिण्या दौर्हृदकाल ।

**९१—अन्ये तु पक्षत्रयात्प्रभृत्यापञ्चमान्मासाद्दौर्हृदकालमाहुः ॥ १७**

९१—अन्ये पुनराचार्या गर्भग्रहणाद्गते पक्षत्रये यावच्चतुर्थो मासो निष्पन्नस्तावद्दौर्हृदकालमाहुः ९१

१८ गर्भिण्या दोहृदपूरणकाल

**९२—प्रार्थनायां च तीव्रायां काममहितमप्यस्यै हितोपहितं[१६] दद्यात् ॥ १८**

९२—अस्मिश्च दौर्हृदे गर्भिण्या प्रार्थनाया नानाविध आहारे पथ्ये यदि प्रार्थना भवति तत्तदानीमेव दद्यात् । अहिते पुनर्यदि प्रार्थना भवति ततोऽन्येन हितेनोपहित मिश्र तत्तस्यै प्रदद्यात् ९२

१९ दौर्हृदविमाननाद्धानि ।

**९३—दौर्हृदविमानाद्धि वायुः प्रकुपितोऽन्त.शरीरमनुचरन्गर्भस्य विनाशं वैरूप्य वा कुर्यात् ॥ १९**

९३—अन्यथा दौर्हृदस्य विमाननात् प्रार्थनाभङ्गादसौम्यत्वाद्वायु कुपितोऽन्त शरीर परिभ्रमन् गर्भस्य विनाश करोति वैरूप्य वा करोति ९३

२० दौहृदस्य यथावत्परिपूर्तेः फलम् ।

**९४—लब्धदौर्हृदा तु वीर्यवन्तं चिरायुषं च पुत्रं प्रसूते ॥ २०**

९४—यदा पुनर्दौर्हृदे प्रार्थित लभते तदा सा लब्धदौर्हृदा वीर्यवन्त चिरायुष च पुत्र सूते ९४

२१ चतुर्थे गर्भस्याङ्गप्रत्यङ्गविभागस्तत्स्थैर्य च ।

**९५—चतुर्थेऽङ्गप्रत्यङ्गविभाग. प्रव्यक्तो गर्भश्च स्थिरो भवति ॥ २१**

९५—चतुर्थे मासि सर्वावयवाना स्फुटता, व्यक्ति , स्थैर्य च गर्भस्य भवति ९५

२२ पञ्चमे मासे मन प्रबोधो मासशोणितोपचयश्च ।

**९६—पञ्चमे मनः प्रतिबुद्धतरं भवति मासशोणितोपचयश्च ॥ २२**

१२ °जभावास्त°–क ख १३ °था युक्त्या चाप°– क ख. १४ स्य चेतना प्र°–क. ख. १५ °था. द्वि°–क, १६ प. सहित°–ख. ग.

अपरागर्भनाडीसहितो गर्भः ।



९६-अन्यत्सुबोधम् ॥ ९६

टिप्पणी—प्रतिबुद्धितरामिति-चतुर्थमासि प्रबुद्ध मनोऽस्मिन् मासे प्रबुद्धतरं भवति ९६

२३ षष्ठे मासे केशरोमादिभिरभिव्यक्तिबलवर्णोपचयः ।

९७-षष्ठे केशरोमनखास्थिस्नाय्वादीन्यभिव्यक्तानि बलवर्णोपचयश्च । सप्तमे सर्वाङ्गसम्पूर्णता ॥ २३

२४ अष्टमे मासि मातृगर्भयोरोजसो विनिमयः ।

९८-अष्टमे गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिर्वाहिनीभिर्मुहुर्मुहुरोजः परस्परमाददाते । तस्मात्तदा गर्भिणी मुहुर्मुदिता भवति, मुहुर्म्लाना तथा गर्भः ॥ २४

९८—अष्टमे मासि ताभिरुभयगामी रसवहाभिर्नाडीभिरोजः प्रतिक्षणं द्वयोः शरीरयोः प्रभावाच्चलत्वाच्च सञ्चरति । यत्र च तदोजस्तिष्ठति तत्र शरीरे हर्षो भवत्यन्यत्र ग्लानिः ९८

२५ अष्टमे मासे गर्भगर्भिण्योर्व्यापत्तिभयम् ।

९९-एवं गर्भस्य जन्म व्यापत्तिमत्तदा भवत्योजसोऽनवस्थितत्वात् । तथा ह्यस्य निष्क्रमणो मुखस्य परिवर्तनादौ च नुभवत एवौजसा वियोगः । यद्यपि च किञ्चित्कालमस्योच्छ्वसनं स्यात्तच्छिन्नस्येवाङ्गस्यौजःसंस्कारानुवृत्तिकृतम् । जननी यास्तु स्थिरौजस्कतयैकदेशेन रसे सङ्क्रान्ते ग्लानिरेवेति ॥ २५

९९—तत्र मातृशरीरं गतमोजसि यदि गर्भः प्रसूते तदा स जातो विनश्यति । यत्तु किञ्चित् स्वल्पमवौजो भवति तत्तन्नमदेशेन क्षयं याति । यत्तु किञ्चित्कालमुच्छ्वसनं भवति तदोजस्संस्कारात् । यथा छिन्नस्याङ्गस्य चलनम् । यदा गर्भशरीरं प्राप्ते ओजसि गर्भो निष्क्रामति तदा ओजसः सद्भावात् जातो जीवत्यन् माता यतः स्थिरौजस्का भवत्यतः सा केवलं ग्लाना भवति न तु विपद्यते तस्यास्तु सर्वस्मिन्नोजस्ततोऽपसृत्य गर्भशरीरं सङ्क्रामति ९९

२६ अष्टमे प्रसवनं गर्भमरणमिति मतम् ।

१००-अन्ये पुनराहुः । नैर्ऋतभागत्वात्तत्र गर्भस्य मरणम् ॥ २६

१००-अन्ये पुनराचार्याः सुश्रुतादयस्तत्राष्टमे मासे नैर्ऋतभागत्वाद्भूतावसरत्वात्तस्य कालस्य गर्भस्य मरणमाहुः । न त्वोजसोऽनवस्थानात् १००

२७ अष्टममासिकप्रसवप्रतिषेधोपायाः ।

१०१-तस्मात्प्रसवप्रतिषेधार्थं स्त्री स्नाता, शुचिर्ब्रह्मचारिणी, देवताराधनपरा स्यात् । मांसौदनबलिं चात्र निर्वपेत् ॥ २७

१०१—तस्मान्नैर्ऋतभागत्वात्तस्य कालस्य प्रसवप्रतिषेधार्थं भूयो मे प्रसवो भूयादिति कृत्वा गर्भिणी स्त्री स्नानादियुक्ता सती देवाराधनपरा स्यात् । तथा च नैर्ऋतानां मांसौदनादिकं बलिं पललपिष्टादिकं निर्वपेत् १०१

२८ गर्भस्य प्राकृतविकृतौ प्रसवकालौ ।

१०२-तस्मिन्नेकदिवसातिक्रान्तेऽपि प्रसवकालमाहुरा संवत्सरात् । अत ऊर्ध्वं विकारी भवति ॥ २८

१०२—अस्मिन्नष्टमे मासे एकदिवसातिक्रान्तेऽपि प्रसवकालमाहुः । एकदिवसमतिक्रान्तो यः स तथोक्तः । यावत्संवत्सरं तावन्नवमासात्प्रभृति चतुर्मासं प्रसवकालमाहुः । संवत्सरात्परं तु त्रयोदशादिषु मासेषु अन्तः स्थितो गर्भो विकारित्वं भजते १०२

२९ गर्भकोष्ठे गर्भावस्थानरीतिः ।

१०३-गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्गो गर्भकोष्ठे दक्षिणपार्श्वमाश्रित्यावतिष्ठते पुमान्, वामं स्त्री, मध्यं नपुंसकम् ॥ २९

१०३—स च गर्भो यावत् जठरे तिष्ठति यावदेव तिष्ठति, एवं च निष्क्रामतीति प्रदर्शनार्थमाह-गर्भस्त्वित्यादि । सर्वो गर्भो मातृपृष्ठाभिमुखो ललाटे कृताञ्जलिस्तिष्ठति सङ्कुचितैरङ्गैः । स च यदा पुंव्यञ्जनस्तदा गर्भकोष्ठस्य दक्षिणं पार्श्वमाश्रित्य तिष्ठति स्त्रीव्यञ्जनो वामं, मध्यं नपुंसकमिति १०३

३० गर्भस्य मातृपरतन्त्रता ।

१०४-तत्र स्थितश्च गर्भो मातरि स्वपन्त्यां स्वपिति प्रबुद्धायां प्रबुध्यते । परतन्त्रवृत्तेश्च गर्भस्य । निषेकात्प्रभृति गर्भाशयोपस्नेहोपस्वेदौ वर्तनम् ॥ ३०

१०४-परतन्त्रवृत्तमातृपरायत्तवृत्तित्वात् । द्वौ तु गर्भाशयमवष्टभ्यापलब्धोपस्वेदौ वर्तनम् । उपस्नेहः स्निग्धत्वम् । उपस्वेद उत्क्लेदः तौ चाहारायत्तौ । सुबोधमन्यत् १०४

३१ गर्भस्य पोषणम् ।

१०५-ततो व्यक्तीभवदङ्गप्रत्यङ्गस्यास्य नाभ्यां प्रतिबद्धा नाडी नाड्यामपरा तस्यां मातृहृदयम् । ततो मातृहृदयादाहाररसो धमनीभिः स्यन्दमानोऽपरामुपैति । ततः क्रमान्नाभिम् । ततश्च स पुनर्गर्भस्य पक्वाशये स्वकायाग्निना पच्यमानः प्रसादबाहुल्याद्धात्वादिपुष्टिकरः सम्पद्यते । तथा रोमकूपैरुपस्नेहो रसः एवं च पर्याभूतः ॥ ३१

१०५—तस्य च गर्भस्य क्रमेण व्यक्तीभवदङ्गप्रत्यङ्गस्य सततं मातुराहारसारो रसाख्यो धातुः पुष्टिकरः सम्पद्यते । कथमित्याह-नाभ्यामिति । गर्भस्य नाभ्यां प्रतिसंबद्धा नाडी भवति, तस्यां नाड्यां प्रतिबद्धा पूर्वोक्तापरा तस्यां प्रतिबद्धं मातृहृदयम् । तत्र मातुः सर्वस्याहाररसस्तद्धृदयलग्ना धमनीः प्राप्नोति । ताभिर्धमनीभिः स्रुतोऽपरां प्राप्नोति । ततो नाभिप्रतिबद्धनाडीक्रमेण नाभिमनुप्राप्तो गर्भस्य कायाग्निस्थानमनुप्राप्य तत्र कायाग्निना पच्यमानः ससारः स्वल्पोऽपि प्रसादबाहुल्याद्धातोर्धातुपुष्टिकरः सम्पद्यते ।

१७ माददाते । त—क १८ परमास्या—ग ख १९ व पर्यो —क

अस्य ह्याहार सारो भवति। गर्भशरीर तु सर्वं एव सार प्राप्नोतीति प्रसादवाहुल्यम्। तथा गर्भाशयस्यापि स्नेहो गर्भस्य रोमकूपे प्रविष्टो धातुपुष्टिकर सपद्यते। तथा गर्भस्य जातस्यापि स एव मातुराहाररसः पयोभूतो धातुपुष्टिकर सपद्यते १०५

३२ जठरस्थस्य गर्भस्य स्थूलमलानामसभव।

**१०६-अजातस्य साक्षादन्नपानाननुप्रवेशादमलत्वाच्च रसस्य गर्भस्य स्थूलमलासंभवं ॥ ३२**

१०६—गर्भस्य तु जठरस्थस्य स्थूलाना मलाना मूत्रपुरीषादीनामसभव साक्षादन्नपानाननप्रवेशाद्धेतो। यश्च प्रविशति रस सोऽमल प्रसादरूपत्वादित्यर्थ १०६

३३ प्राकृतिकगर्भनिष्क्रमणम्।

**१०७-एव जठरस्थो गर्भो जन्मकाले तु प्रसूतिमारुतयोगात्परिवृत्त्याऽवाक्शिरा निष्क्रामत्यनु चापरा च्युता मातृहृदयात्। एषा प्रकृतिः। विकृतिरतोऽन्यथा ॥ ३३**

१०७—एवमनन्तरोक्तेन प्रकारेण जठरस्थो गर्भ प्रसूतिवशात् पृष्ठाभिमुखत्वात् परिवृत्य नाभ्याभिमुखो भूत्वाऽवाक्शिरा निष्क्रामति। अवाक्शिरा अधोमुख। अनु च गर्भे निष्क्रान्ते अपरा निष्क्रामति। एषाऽनन्तरोक्ता प्रकृति, अतो यथोक्तादन्यथा विकृति। तेनैतदुक्त भवति—यथा गर्भसभवादनन्तरमाप्रसव यथोक्ताकारत्वेन गर्भस्य स्थान प्रकृतिरुच्यते। अतो वैपरीत्याद्विकृतितस्तत्र यद्विधेय तद्वक्ष्याम १०७

३४ गर्भस्थापत्याना लिङ्गविशेषेऽभिज्ञानानि।

**१०८-तत्र या दक्षिणं पादं पूर्वमभिसराति दक्षिणश्च बाहुर्बलवांस्तेन चेष्टते तत्स्तने च प्राक् पयो दृश्यतेऽभ्युन्नतदक्षिणकुक्षि परिमण्डलगर्भा पुन्नामदर्शनस्पर्शनप्रश्नदौर्हृदाभिरता पुन्नामधेयांश्च स्वप्नान् पश्यति प्रसन्नमुखवर्णा तीक्ष्णक्षुदूर्ध्वरोमराजि. पुरुषानभिलाषिणी च सा पुत्र प्रसूते, तद्विपर्यये कन्याम्, संकरे च नपुसकम्। प्रश्नकाले नारी यल्लिङ्गमङ्ग बाह्यद्रव्यं वा परामृशति तल्लिङ्गमस्या गर्भमादिशेत् ॥ ३४**

१०८ अनन्तर पुस्त्रीनपुसकाना गर्भस्थाना पुसवनादिफलज्ञानाय भिषजश्च प्रतिपत्तये क्रमेण लक्षणमुच्यते—**तत्र या दक्षिणमित्यादि**। या स्त्री दक्षिण पाद पूर्वमभिसरत्यभिसरणकाले सा पुत्र सूत इति सबन्ध। तदित्यनेन सर्वत्र दक्षिणशब्दस्य परामर्श। परिमण्डल सर्वत सम। पुल्लिङ्गनाम्नो भावान् झटिति स्वप्ने पश्यति। पुन्नामभिरेव यत्किञ्चित् पृच्छति। पुन्नाम्नि दौर्हृदेऽभिलाष करोति। मुखवर्णयो प्रसन्नत्व बुभुक्षायास्तीक्ष्णत्वम्। रोमराज्या नाभेरधोभवाया ऊर्ध्वत्वमूर्ध्वाभिमुखत्वम्। गर्भिणी सती पुरुषगमनाय नाभिलषतीति। एतद्विपरीत्येन दुहितर प्रसूत इति व्याख्येयम्। तत्र दक्षिणशब्दस्थाने वामशब्दप्रयोग। पुन्नामस्थाने स्त्रीशब्दप्रयोग। परिमण्डलस्थाने दीर्घशब्दन्यास। तीक्ष्णे मन्दशब्द। ऊर्ध्वस्थाने अ[illegible]। पुरुषानभिलाषशब्दे हितत्वमित्येवमादि सर्व योज्यम्। उभयलिङ्गसकरे मिश्रभावे नपुसको विधेय। लिङ्गद्वयोर्मिश्रीभावे तूभयच्छायाग्रहणेन तयोश्च क्रमविनिपर्यय यथासभव व्याख्येयम्। प्रश्नकाले यस्मिन काले भिषजो गर्भप्रसवाय कश्चित्पृच्छति किंलिङ्गो गर्भ प्रसो[illegible]। सुबोधमन्यत् ॥ १०८

३५ गर्भिण्या वेगविधारणादिना वातकोपाद्गर्भस्य व्यापद।

**१०९-यदा तन्मार्गगो वातो गर्भस्य रसवाहीनि स्रोतांसि शोषयति तदा वातरोगी हीनाङ्गो वा जायते। बहूनि वा वर्षाण्युदरे तिष्ठति ॥ ३५**

१०९ यदा त्वित्यादिना वेगधारणेन वातकोपात् परिपोषकरसक्षयाद्दोषमभवदर्शन। गर्भशरीरे भवतीत्युच्यते। वायुरुन्मार्गग स्वमार्गं त्यक्त्वाऽन्यमार्गगतो गर्भस्य रसवाहिस्रोतांसि शोषयति तदा ते शुष्याङ्के शरीरे रसो न वहत्यतो वातरोगी हीनाङ्गो वा जायते। अपरिपूर्णत्वाद बहून् वर्षानुदरे तिष्ठति १०९

## ( अष्टौ क्लीबाः )

३६ द्विप्रकृत्याख्यनपुसकापत्योत्पत्तिकारणम।

**११०-यदा स्त्रीपुसयो. संभेमेवार्यो निष्पद्यते। बीज वा तयो' समांश समुख च। यदा च बीज भागे दुष्यति तदा द्विप्रकृतिर्द्विरेता नपुसक भवति३६**

११०—यदा तु रतिकाले स्त्रीपुसयो. समसमकालमथा रतिसमाप्तिलक्षणो निष्पद्यते। अनयो स्त्रीपुसयो सबन्धि बीज वा समभाग भवति समुख चैकरूपेण। यदा च तस्मिन् स्त्रीभूत बीज गर्भस्य बीजारम्भके भागे दुष्यति येनैकरूपता पुविशेषेण योषिद्विशेषेण वा गर्भबीजस्य न सपद्यते तस्मिन्स्त्रीपुरुषबीजभागे केनापि दोषकोपकारणेन दुष्टे हि प्रकृतिरेकोऽप्युभयस्वरूपो द्विरेता नपुसको भवति। स्त्रीकार्यमपि स्तोक साधयति पुरुकार्यमपि न पुमानित्यर्थ ११०

३७ वातेन्द्रियाख्यनपुसकोत्पत्तिकारणम्।

**१११-यदा स्त्री प्रथम कृतार्था भवति, तत पुरुषेण पश्चाच्छुक्रमुत्सृष्ट हर्षानवस्थितचेतसः स्त्रिया वातो विगुणीकरोति पुरुस्त्ववाहीनि चास्य स्रोतांसि चोपहन्ति तदा वातेन्द्रिय भवति। तन्मैथुने वातमेवोत्सृजति ॥ ३७**

१११—यदा तु स्त्री रतौ पुस पूर्व कृतार्था सप्राप्तरत्यवसाना भवति, ततोऽस्या स्त्रिया पश्चात्पुसा शुक्रमुत्सृष्ट भवति रतिकालभूतेन हर्षेणानवस्थितचेतस सत्या

२० °व जन्मका°—क ख २१ °वंमभिहर°—क ख २२ °गश्च यस्या वा°—क ख २३ °न च चे°—क
२४ °तेऽत्युन्नततत्कुक्षि परिमण्डलग—°क. ख. २५ °ममयो नि°—क. ख. २६ रेतो भ°—क. ख.

४७ गर्भाशयस्थस्त्रीबीजे किञ्चित्प्रदुष्टे पूतिप्रजोत्पत्तिः ।

**१२१–यदा तस्यावयवस्तदा पूतिप्रजाम् । तस्या जातं जातं म्रियते ॥ ४७**

१२१—यदा त्वभाकल्येन तदा पूतिप्रजा जायते। तस्या जातं जातं म्रियते । लिङ्गविशेषेण नपुंसकम् । पूतिः छिन्ना क्षीणा प्रजा यस्याः सा तथोक्ता ॥ १२१

४८ वातात्पत्तिकारणम् ।

**१२२–यदा पुनः सोऽवयवः स्त्रीकराणां च शरीरसंश्रयाणामधोगुरुत्वादीनां[33] निर्वर्तका ये बीजांशास्तेषामेकदेशः । तदा स्त्र्याकृतिप्रायामस्त्रियं वार्तां नाम जनयति । तां स्त्रीव्यापदमाचक्षते ॥ ४८**

१२२—यदा पुनः सोऽवयवः अनन्तरोक्तबीजभागावयवः पूर्वोक्तानां चाधोगुरुत्वादीनां भावानां ये निर्वर्तका भावास्तेषां यः एकदेशस्तद्दुष्टया माता वार्तां नाम स्त्रियं जनयति । या स्त्र्याकृतिबाहुल्यात् स्त्री, स्त्रीकार्याकरणाच्चास्त्री। तस्याश्च स्त्रीव्यापदिति नाम १२२

४९ शुक्राख्यबीजस्य किञ्चिद्भागे प्रदुष्टे वन्ध्य-पूति-प्रतृण-सुतानामुत्पत्तिः ।

**१२३–एवमेव पुंसो यदा शुक्राख्ये बीजे बीजं प्रदुष्यतीत्यादि योजयेद्वन्ध्यं पूतिप्रजं तथा पुरुषाकृतिप्रायमपुरुषं[34] तृणपुत्रिकं नाम जनयतीत्येतेन मातृजानां पितृजानां चावयवानां विकृतिर्व्याख्याता[35] ॥ ४९**

१२३—एवमेव यथा स्त्रिया शोणिताख्ये बीजे गर्भाशयस्य निर्वर्तकं बीजमित्युक्तं तथैव च पुंसः शुक्राशयनिर्वर्तकं प्रदुष्यतीत्यादि योज्यम् । तेन वन्ध्यावद्वन्ध्यो यो गर्भस्तं जनयति । पूतिप्रजावत् पूतिप्रजो यस्माज्जातं जातं म्रियते । वार्तावत्तृणपुत्रिकः । यः पुरुषाकृतिप्रायत्वात् पुरुषः पुरुषकार्याकरणाच्चापुरुष इति । एतेन मातृपितृजावयवदोषा व्याख्याता १२३

५० सात्म्यरससत्त्वजावयवविकृतेरौपदेशिकं फलम् ।

**१२४–अनेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता भवति[36] । यस्य यस्याङ्गावयवस्य बीजे बीजांशे[37] वा उपतप्तिर्भवति तस्य तस्याङ्गावयवस्य विकृतिरुपजायते । नोपजायतेऽनुतापात् ॥ ५०**

१२४—अनेन सात्म्यरससत्त्वजानामवयवानां दोषविकृतिर्व्याख्याता भवति । कारणसामान्यात् सात्म्यजानामायुरारोग्यादीनामङ्गविभागे वक्ष्यमाणानां रसजानां च शरीरोपचयबलवर्णादीनाम् । सत्त्वजानां च शौचादीनामद्रव्याणामुपचर्यते । तेनैतदुक्तं भवति–रसस्य नानाविधया दुष्ट्या तत्कार्याणामपि गर्भे तदनुगुणैव विकृतिर्भवति । एवं सात्म्यासात्म्ययोरपि वाच्यम् । अपि च बीजभागोपतापाद्गर्भावयवानां विकृतिर्भवति । एतदाह–**यस्य यस्येत्यादि** । सुबोधम् १२४

५१ जड-मूक-बधिरादीनां समुत्पत्तौ कारणम् ।

**१२५–यदा च लब्धगर्भाऽन्वक्षमेव वातलान्यासेवते तदाऽस्या वायुः प्रकुपितः शरीरमनुसर्पन् गर्भाशयेऽवतिष्ठमानो गर्भस्य जडबधिरमूकमिन्मिनगद्गदखञ्जकुब्जवामनहीनाङ्गाधिकाङ्गत्वान्यन्यं वा वातविकारं करोति ॥ ५१**

१२५ लब्धगर्भा चान्वक्षं निरन्तरं यदा वातलान्यासेवते तदाऽस्या वायुः प्रकुपितः शरीरोपसर्पणेन गर्भाशयमनुप्राप्तो गर्भस्य जडबधिरत्वादीनन्यांश्च यथाहेतुवातविकारान् करोत्येव पित्तलान्यासेवमानाया पित्तं खलत्यादीनि श्लेष्मा कुष्ठादीनि त्रिवर्गसन्निपातो मिश्रानन्तरोक्तान् वातपित्तकफजान् । जडः स्तोकश्रुतिर्बधिरोऽश्रुतिः । मूको वाग्रहितः । मिन्मिणोऽनुनासिकभाषी । गद्गदो घर्घरस्वरः । खञ्जः एकपात् । तथा हीनाङ्गोऽधिकाङ्गो वा १२५

५२ खलतिपलितश्मश्रुहीनतादीनां समुत्पत्तौ कारणम् ।

**१२६–तथा वायुवत् पित्तमपि खलतिपलितश्मश्रुहीनतात्वङ्नखकेशपैङ्गल्यादीनि ॥ ५२**

१२६—खलतिर्निर्लोमशिरस्त्वम् । पलितं श्वेतलोमत्वम् । श्मश्रुहीनता निःश्मश्रुत्वम् । त्वगादीनां पैङ्गल्येन सबन्धः । आदिग्रहणेन पित्तविकाराणां ग्रहणम् १२६

५३ कुष्ठकिलाससदन्तत्वादीनां समुत्पत्तौ कारणम् ।

**१२७–श्लेष्मा तु कुष्ठकिलाससदन्तत्वादीनि । त्रिवर्गो मिश्रान्विकारान् ॥ ५३**

१२७—सदन्तत्वं गर्भे एव दन्तजन्म । आदिग्रहणेन श्लेष्मविकाराणां ग्रहणम् १२७

५४ जात्यन्धात्पत्यादीनां समुत्पत्तिकारणम् ।

**१२८–अपि च । दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धत्वम् । तदेव वातानुगतं विकृतरूक्षारुणाक्षम् । पित्तानुगतं पिङ्गाक्षम् । श्लेष्मानुगतं शुक्लाक्षम् । रक्तानुगतं रक्ताक्षमिति ॥ ५४**

१२८— अपि चेति विकृतिप्रसङ्गसमुच्चये । गर्भस्य दृष्टिभागं यदि तेजो न प्रतिपद्यते दृष्टादृष्टात्कारणात् तदा जात्यन्धो जायते । तदेव तेजो वातानुगतं दृष्टिभागं प्रतिपन्नं विकृतरूक्षारुणाक्षं जनयति । पित्तादौ तेजोऽनुवर्तते । अन्यत् सुबोधम् १२८

५५ गर्भिण्या गर्भोपघातकरेभ्यो भावेभ्यो रक्षणम् ।

**१२९–गर्भसमानयोगक्षेमा हि गर्भिणी भवति । तस्माद्विशेषतस्तां प्रियहिताभ्यां गर्भोपघातकरेभ्यो रक्षेत् ॥ ५५**

१२९ प्रस्तुतस्य गर्भस्य विकृतिर्यथा न भवति । तथोच्यते–गर्भसमानयोगक्षेमा हि यतो गर्भिणी भवति ततस्तां प्रियहितैः करणभूतैर्वक्ष्यमाणेभ्यो गर्भविघातकरेभ्यो भावेभ्यो रक्षेत् १२९

—

३३ °नां निर्वर्तका ये बी°–क ३४ °पं तृणपुत्रिकं नाम ज°–क ख ३५ °ख्यानेन सात्म्य°–क ख ३६ °ति । यस्य-यस्या°–क ३७ °शे वा उत्पत्तिर्भ°–ख.

६१ गर्भिण्या रक्षणे प्रयोजनम् ।

**१३५-स्त्री हि मूलमपत्यानां स्त्री हि रक्षति रक्षिता ।**
**सर्वाश्रमाणां प्रथमं गृहस्थत्वमनिन्दितम् ॥ ६१**

१३५-यस्मादपत्यानां मूलकारणं स्त्री तस्मात् पालयेत् । अतश्च तां यत्नेन पालयेत् सा रक्षिता सती पुनो गृहित्वं गृहस्थत्वं रक्षति । किंभूतमित्याह-**सर्वाश्रमाणामित्यादि** । सर्वेषां ब्रह्मचर्यादीनामाश्रमाणां प्रथमं प्रधानम् १३५

६२ गर्भस्यारोदने हेतुः ।

**१३६-जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते ।**
**वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ ५९**

इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां शारीरस्थाने गर्भावक्रान्तिर्नाम द्वितीयोऽध्यायः ॥

१३६-जरायुणा इत्यादिना प्रतिस्पर्धायोगविप्रतिपत्त्यादिनिग्रहमात्राय गर्भस्यारोदने कारणमुपसंहरन्नध्यायमाचार्यः कथयति ।

इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां शारीरस्थाने द्वितीयोऽध्यायः ॥ २ ॥

# गर्भोपचरणीयस्तृतीयोऽध्यायः ।

## ( उपोद्घातः )

पूर्वयोरध्याययोर्गर्भस्य संभवस्थितिक्रमसुक्त्वा तस्यैव चानुपघाताय परिपूर्णत्वाय सुखप्रसवाय चोपचार उच्यते । गर्भस्यात्र गर्भिणीपरायत्तत्वाच्च तस्या एवानुष्ठेयं विधानम् ॥

१ प्रतिज्ञा

**१३७-अथातो गर्भोपचरणीयं शारीरमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १**

२ गर्भिण्या प्रथममासप्रभृत्या पञ्चमान्मासात्सेवनीयानि

**१३८-प्रथमे मासि गर्भिणी क्षीरमनुपसंस्कृतं मात्रावच्छीतं काले काले पिबेत् । तस्मिन्नपि चाद्यं द्वादशरात्रं क्षीरोद्भवं सर्पिः शालिपर्णीपलाशाभ्यां शृतं कनकरजतक्वथितशीतोदकानुपानं पिबेत् । स्वादु शीतं द्रवप्रायं सात्म्यं च सायंप्रातराहारयेत् । न चाभ्यङ्गोद्वर्तनानि सेवेत । यथोक्तानि च दोषकराणि परिहरेत् । पञ्चमान्मासाद्विशेषेण ॥ २**

१३८-तत्र प्रथमे मासि गर्भिण्यसंस्कृतं क्षीरं पिबेत् । मात्रावद्यत्नेनाधिक्यरक्षया काले कालेऽन्नस्य द्वयोरपि कालयोः । अत एवाजीर्णादिपरिहाराय मात्रावदिति । तस्मिन्नपि तत्रापि प्रथमं द्वादशरात्रं क्षीरोद्भवं घृतं पिबेत् । क्षीरपानापवादत्वेन । किंभूतं क्षीरोद्भवमाह-शालिपर्णीपलाशाभ्यां स्नेहपाकपरिभाषया शृतम् । सौवर्णे राजते वा क्वथितं शीतोदकानुपानं च । सा च गर्भिणी स्वाद्वादिप्रायमाहारं प्रतिदिनमुभयकालमाहारयेत् । निषेकात् प्रभृत्यभ्यङ्गादीन् पूर्वोक्तांश्च गर्भोपघातकरान् व्यवायादीन् वर्जयेत् । यावत् पञ्चमो मासस्तावदेव विशेषेण कुर्यात् । तदा हि गर्भस्यास्थिरत्वात् झटिति बाधाभयम् १३८

३ द्वितीयमासे सेवनीयम् ।

**१३९-द्वितीये मधुरौषधसिद्धं पयः पिबेत् ॥ ३**

१३९-द्वितीये मासे मधुरैर्द्राक्षामधूकादिभिः सिद्धं पयः पिबेत् १३९

४ तृतीयमासे सेवनीयम् ।

**१४०-तृतीये तदेव सर्पिर्मधुभ्याम् ॥ ४**

१४०-तृतीये तदेव मधुरौषधसिद्धं सर्पिर्मधुभ्यां युक्तं पिबेत् ॥ १४०

५ चतुर्थमासे सेवनीयम् ।

**१४१-चतुर्थेऽक्षमात्रनवनीतयुक्तम् ॥ ५**

१४१-चतुर्थे तु तदेव नवनीतस्याक्षमात्रेण युक्तम् १४१

६ पञ्चममासे सेवनीयम् ।

**१४२-पञ्चमे क्षीरसर्पिः ॥ ६**

१४२-पञ्चमे क्षीरोद्भवं सर्पिः १४२

७ षष्ठसप्तममासयोः सेवनीयम् ।

**१४३-षष्ठे तदेव मधुरौषधसिद्धं सप्तमे च ॥ ७**

१४३-षष्ठे मधुरौषधसिद्धं तदेव क्षीरसर्पिः । सप्तमे तदेव १४३

८ सप्तममासाया गर्भस्य स्थितिः । तेन गर्भिण्या पीडा च ।

**१४४-तस्मिंस्तु गर्भस्य केशोत्पत्त्या मातुर्विदाहो भवतीति स्त्रियो भाषन्ते । नेति भगवानात्रेयः । गर्भोत्पीडनात्तु दोषा हृदयं प्राप्य विदहन्ति ततः कण्डूर्जायते कण्डूया किक्किसम् ॥ ८**

१४४-तस्मिन् सप्तमे मासि मातुर्विदाहो भवति । स तु केशोत्पत्तिकार्यमिति स्त्रियो भाषन्ते । तथा नेति भगवानात्रेयः । स चैवमाह-गर्भोत्पीडनाद्दोषा वाताद्यो गर्भिण्या हृदयं प्राप्ता कण्डूं कुर्वन्ति कण्ड्वा । अनन्तरं किक्किसम् । रेखास्वरूपस्त्वक्संकोचः किक्किसम् १४४

९ सप्तममासिकगर्भोपद्रवे सेवनीयानि ।

**१४५-तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रमस्यै दद्यात् । चन्दनमृणालकल्कैश्च स्तनोदरं मृद्नीयात् । शिरीषधातकीसर्षपमधुकचूर्णैर्वा । कुटजार्जकबीजमुस्ताहरिद्राकल्कैर्वा । निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा । शशहरिणपृषतरुधिरयुक्तया वा त्रिफलया । करवीरकरञ्जपत्रकल्कसिद्धेन च तैलेनाभ्यङ्गः । परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा । कण्डूयनं वर्जयेत् । त्वग्भेदवैरूप्यपरिहारार्थं स्नानोद्वर्तनं च शीलयेत् । मधुरं चाहारमल्पमल्पस्नेहलवणमल्पोदकानुपानं भुञ्जीत ॥ ९**

१ °रणीयमध्या°-ग २ °स । प्रथ°-क ख ३ क्वथितं शी°-ग ४ स्मिंश्च ग°-क ख ५ °ण्ड्वा किक्किस°-ख ६ °धातुकीसर्ष°-क ख ७ °णपुनर्नवमालतीमधुकसिद्धेनाम्भसा पृषतरुधिर°-क ख ८ °वीरपत्रकर°-क ख ९ त्वग्भेद वैरू°-ख १० स्नानोच्छादनं च शी°-क

१४५-तत्र क ट्विबिसयोरनवास्ये गार्गिण्ये व-रोदवन मयुक्त पाणतल नवनीतस्य दयमव्यवहाराय । पाणितर कप । च- ।मृ ।।८क व न स्तनोदरस्य म-न ( । प्रकृत्यादि विशेषापेक्षया शिरीषादिचूर्णैर्वा । मु नानना ग्निलेर्वा । चूर्ण पुष्पपिष्ट । वस्त्रा जलपिष्ट । निम्बादिवर्रैर्वा । नाशा चन्यतमगधिरभिनना वा निप९या । दोषादिविशेषापेक्षया स्तनोदर मृन्नीयादिति सवप । सुबोधम् । परिषेश स्तनोदरस्य । त्वम्भदस्य विरूपत्व य च परिहाराय स्तनो दरस्य च य इयन वनयेत् । तत्परिहारार्थमव च स्नान- मुद्धतन च नीलयत् । अल्प वादियुक्तमाहार मुञ्जान १४५

१० अष्टम मासे मवनीयानि ।

१४६-(१)अष्टम क्षीरयवागू सर्पिष्मतीं पिबेत्नेति स्वण्डकाप्यो गमस्य पैङ्गल्यायाधमर्योत् । अस्तु पैङ्ग- ल्यानाधस्तया नर्न कुर्वीत । नीरजं थर य मित्त्वसहन नसंपदुपेत माती नामप्रगण्यमपत्यं जनयतीति भगवा नात्रेय (२) बदरोदकेन प९९पयोदधिमस्तुतैर ८ पप्ष ९घृतमयुक्तनास्थापयत् । पुराणविड्विशुध्यर्थं मधु कादिमधुरापघसिद्धेन च तैलनानुवासयदनुलोमनाय वायो । अनुलाम हि भारत मा सु खमनुपत्या प्रसूत । (३) गर्भिणी तु "षु जामास्नापयेदनुवासयेद्वा । तयाऽस्या विवृतमागतया मन्नर्गोपधमनुप्रविशति ( ४ ) तत ऊर्ध्व स्निग्धाभियवागूभिर्जाङ्गलरसैश्चोपचरे दाप्रसववार ।दिति भगवान् ध व तरि ॥ १०

१४६-(१)अष्टमे मासे घृतमिश्रा क्षीरयवागू पिबदित्यात्रय । तान् पिबेत् गभस्य पैङ्गल्यमयादिति स्वण्डकाप्य । तत्प्र त्याहात्रेय -अङ्गोक्रियता प्त्र यम् । गर्भिण्या नारुजत्वला भाद्गर्भस्य च वलाद्युक्त य लाभात् । मपिष्मत्या क्षीरय वाग्वा । महननमवयवनिवपत्वम् । (२) व-रोदव नास्थापन परिमाणया प्न्ली । अुकेनास्थापयेत् । पुराण मवित पुरीष शोधयित्वा तदथमवानुवामन मधुरादिसिद्धतैलन । एव पुराणाया विश शोधनादनुलामो वायु प्रसूतय सुखो भव तीति । (३)मवस्य च वामपार्श्वस्थस्यास्थापनानुवासनविधान गर्भिण्या पुम्भत्वमपवाद । यु ना जान नामपोमुखी भूमो स्थिता । तथा हि जठरस्य न्मवत्वाद्गर्भमार्गो विवृतो भवति(४) ततऽ मा मासा ू र्मप्रसवात् स्निग्धाभिर्यवागू भिरुपाचरेत् । चाङ्गलरसैबोपचरत्निति ध व तरि । चरकस्य तु नाङ्गलरसानभिधानम् १४६

११ नवममासे करणीयानि गभिणाकृत्यानि ।

१४७-नवम तु तत एवानुवासनतैलपिचु योनौ प्रणयद्गर्भमार्गास्थाना स्नेहनाथमिति ॥ ११

१४७-नवम मासे तत एवान तरोक्त मधुरौपधसिध्याद नुवामनतैलात् पिचु योनौ धारयत् । तेन हि गर्भप्रसति मार्ग गर्भाशये च स्नेह सपद्यते १४७

१२ प्रथममासा ।र न कृता ।। कमणा फलम् ।

१४८-अनेन प्रथममासाद्यारभ्य क्रम । गर्भिण्या प्रसवकाले गर्भधारिणीकुक्षिकटीपार्श्वपृष्ठं मृदु भवति । वायुश्चानुलोम सपद्यते । मूत्रपुरीषे च प्रकृतिभूत जरायुश्च मार्गं नातिपद्यते । पुत्र चष्ट ४८नमानुष्म त सुगिर्न सुखन काल थर नतो प्रसूत ॥ १२

१४८-एतच्च सव मासविधान गर्भिण्या गर्भधारिणी कुक्ष्यादि मृदुत्वलाभाय भवतीति सुबोधम् १४८

१३ गर्भिण्या स्नानोदकसंस्कार ।

१४९-बिल्वकापासीकर्णिपाटलीपिचुम दाग्निमे- षमासीवर्धमानकपत्रभङ्गक्वाथेन शीतन सवगन्धो दकेन वा गर्भिण्या प्रत्यहं स्नानमुपदिशेत् ॥ १३

१४९-बिल्वादीना काथन गर्भिण्या प्रत्यह स्नानमुपदि शेत् । सर्वगन्धोदकेन वा । पत्राङ्कानि पत्रभङ्गादि १४९

टिप्पणी- अवाल इति लाक' इति क वपुस्तकयो फणा पयाय मसुलिखित १४९

१४ सूतिव ।गारवणनम् ।

१५०-प्राक् चैवास्या नवमान्मासादप्रशस्तादिवार्के रानपाल प्रशस्त दशे वास्तुविद्याप्रशस्तं सर्वतुसुखमुप हृतम उपकरणं सन्निहित नर्न प्राग्द्वारमुदग्द्वार वा सूतिकागार कारयत् ॥ १४

१५ -अस्यान गर्भिण्या नवममासात्प्रशस्तपहनाख्यौ त्यां पूक्त सूतिकागार कारयचत्र मासका सती वमति । शीतातपाधभावेन सवतुसुखम् १५

१५ सूतिकागारे गर्भिण्या प्रवेश ।

१५१-तत्रानुकूलेषु नक्षत्रादिषु पु याहन दन गो ब्राह्मणवृद्धास्त्वाऽवतमाना प्रदक्षिण प्रविश्य बहुश प्रसूताभिरनुरक्ताभिरविषादाभि क्लेशक्षमाभिं परि वृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमित वातमूत्रपुरीषा प्रसवकालमुदीक्षत । स्वल्पेऽपि च विण्मूत्रविध धे प्र नर्तो प्रणिदधात् ॥ १५

१५१-तत्राऽऽ ।।रऽनुद्रल चलतहोतिथिमुहूर्तादिषु पुण्याह शब्देन गवादीनत्तनमा ।। प्रविश्य निवारप्रमूताभि परिवृता सा स्वस्त्ययनपरत्वादित्युक्ता प्रसव ।कमुदीक्षत प्रतिपालयेत । सुबोधम् १५१

१६ आसन्नप्रसवाया लक्षणानि ।

१५२-तत्रासन्नप्रसवाया क्लमो ग्लानिमुक्त न वन द्धयाक्षिणी निर्दोविका मूत्रपुरीषबाहुल्य शिथिलकुक्षि ताऽधागुरुत्वमन्नानभिलापो वदनोदरह-यवदीबस्ति वक्षणेषु तोदभेदशूल स्फुरणस्रवणानि च या या भवति तदन तरमावीना प्रादुर्भावो गर्भोदकप्रवाहश्च ॥ १६

१५२-क्लमादिकमासन्नप्रसवकाल लक्षणम् । उदरादीना वनया मत्र ध । तोदादीनि यो याम् । अन तरमावना सूतिवदनापर्यायाणा प्रादुर्भाव , अन तर गर्भोदकस्य १५२

---

११ निपण्डकाथो ग -च ग १२ त । अस्ति प क ग १३ त मुग -च स १४ ति अत ऊ-च स १५ ष दपमव -च ग १६ मीपप ।।पा -ग, सी ७७ ।।पा -च १७ माथवासीव -क

१७ उपस्थितगर्भाया यवागूपानम् ।

**१५३-अथैनामुपस्थितगर्भां कृतकौतुकमङ्गलां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तां सघृतां यवागूं पाययेत् ॥ १७**

१५३-अथानन्तरमेनां गर्भिणीं निकटीभूतगर्भत्वादियुक्तामुष्णोदकेन परिषिक्तां सतीं यवागूं सघृतां पाययेत् १५३

१८ आवीप्रादुर्भावोत्तरकृत्यम् ।

**१५४-ततः सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूमिशयने शयानामुत्तानामाभुग्नसक्थिपृष्ठामहतवाससोऽशङ्कनीयाः प्रियदर्शना परिणतवयसः प्रजननकुशलाः प्रगल्भाः कृत्तनखाः स्त्रियः सूतिकाः सूनृताभिर्वाणीभिराश्वासयन्त्यः पर्युपासीरन् ॥ १८**

१५४-ततः सुरक्तेन ऋषभचर्मणा कृतप्रच्छदे मृदुनि कार्पासादिकृते शयने शयानामुत्तानामहतवासस्त्वादियुक्ता योषितः सूनृताभिराश्वासयन्त्यः पर्युपासीरन्निति संबन्धः । आभुग्नसक्थिं संकुचितजानुम् । प्रजनने गर्भनिष्क्रासने कुशलास्तयोक्ताः । सूनृता प्रियवाचः १५४

१९ गर्भस्याधोमुखीकरणम् ।

**१५५-अथास्यै दद्यात् कुष्ठैलालाङ्गलीवचाचव्यचित्रकाचिरिबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुः । तथा भूर्जपत्रशिंशपासर्जरसान्यतमधूममन्तरान्तरा च । पार्श्वपृष्ठकटीसक्थिदेशान् कोष्णेन तैलेनाभ्यज्यानुसुखमस्या मृद्नीयात् । एवमवाक् परिवर्तते गर्भः ॥ १९**

१५५-अनन्तरमस्यै कुष्ठादिचूर्णमुपाघ्रातुं दद्यान्मुहुर्मुहुः । तथैव भूर्जाद्यन्यतमधूममुपाघ्रातुं दद्यादिति संबन्धः । अन्तरान्तरा चेत्यावीप्रादुर्भावमनु धूमादिप्रसङ्गे । पार्श्वादिदेशानीषदुष्णेन तैलेनाभ्यज्य यथासुखं मृद्नीयादिति संबन्धः । एवमनेन यवागूपानादिना जठरस्थो गर्भस्तस्मिन्काले सुखेनावाक् परिवर्तते, अधोमुखतां यातीत्यर्थः १५५

२० अधोमुखगर्भलक्षणम् ।

**१५६-तस्य लक्षणम्-विमुच्य हृदयमुदरमाविशति । बस्तिशिरोऽवगृह्णाति । त्वरयन्त्येनामाव्यः ॥ २०**

१५६-स चावाङ्मुखो गर्भो हृदयमोक्षणादिना लक्षणेन ज्ञायते । मातुर्हृदयदेशं परित्यज्य यदा तु जठरमाविशति गर्भो बस्तिशिरआख्यं वक्ष्यमाणं प्रदेशं नाभेरधो गृह्णाति । आव्यश्चैनां गर्भिणीं निरन्तरप्रादुर्भावेन त्वरयन्ति तदा परिवृत्तमध्यवस्येत् १५६

२१ गर्भपरिवृत्तिकरं जृम्भणादि ।

**१५७-न चेदेवं परिवर्तते ततो मुहुर्मुहुर्जृम्भणं चङ्क्रमणं च कारयितव्यमनन्तरोक्तं विधिम् ॥ २१**

१५७ एवं न परिवर्तते चेज्जृम्भणादिकं वक्ष्यमाणं कारयितव्यम् । अनन्तरोक्तं च विधिं धूमाघ्राणादिकं पुनः पुनश्च १५७

२२ गर्भपरिवर्तनार्थं गर्भिण्या मुसलेन कण्डनं कर्तव्यमित्यन्यमतोपन्यासः ।

**१५८-अन्ये तु मुसलेनोलूखले धान्यपूर्णमाहननीयमित्याहुः ॥ २२**

१५८-केचिदाचार्या गर्भपरिवर्तनार्थं धान्यपूर्णमुलूखलं गर्भिण्या मुसलेनावहननीयमिति १५८

२३ मुसलाहननपरमतस्य निरासः ।

**१५९-तत्तु न सम्यक् । दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते । विशेषतश्च प्रसवकाले । प्रचलितसर्वधातुदोषायाः सौकुमार्यत्वान्नार्या मुसलव्यायामेनेरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यादिति ॥ २३**

१५९-तदात्रेयप्रमुखा नेच्छन्ति, यतस्तथाविधायामतिसुकुमारायामवस्थायामेव विवेकेनोपचारेणावहननव्यायामेन प्रबलीभूतो वायुरन्तरं हृदयं लब्ध्वा प्राणान् हिंस्यादिति १५९

२४ गर्भपरिवृत्त्यनन्तरकृत्यम् ।

**१६०-अथ परिवृत्तगर्भां पर्यङ्कमेनामारोप्य कुशला स्त्री पादतोऽस्या निषण्णाया योनिमनुलोममनुसुखमभ्यज्य स्फिजौ पादाभ्यां पीडयेत् । योनिं च पुनःपुनः प्रसाधयेत् । ब्रूयाच्च सुभगे शनैःशनैः प्रवाहयस्व सुप्रसन्नस्ते मुखवर्णः पुत्रं जनयिष्यतीति ॥ २४**

१६०-ततोऽनन्तरोक्तेनावाक्परिवृत्तगर्भलक्षणेन परिवृत्तगर्भां विदित्वा पर्यङ्कमारोप्य पादतो निषण्णा स्त्री योनिप्रसाधनादिकं गर्भिण्याश्च कुर्यात् १६०-

२५ गर्भप्रसवमन्त्राः ।

**१६१-अन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत् ॥**

(१) "क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पातु वैशल्यं वा दधात्वपि ॥

(२) प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम्" इति॥

तथा

(३) 'इहामृतं च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥

(४) 'इदममृतमपां समुद्धृतं वै
तव लघुगर्भमिमं प्रमुञ्चतु स्त्रि ।
तदनलपवनार्कवासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम्' इति॥ २५

१६१-द्वितीया च वामे कर्णे मन्त्रं वक्ष्यमाणं पठेत् । प्रसाधनं गर्भनिष्क्रमणयोग्यताकरणम् । सुबोधमन्यत् । क्षितिर्जलादिकं दिशन्तु शान्तिमित्यन्तं श्लोकचतुष्टयं मन्त्राः १६१

१८ °न प्रसारये°-क ख  १९ °यादिर°-ग  २० °श्रतु स्त्री । त°-ग

२६ अनागतायां वेदनायां गर्भस्य बलात् प्रवाहणे निषेधः ।

**१६२–तथा पराऽनुशिष्यात्–अनागतायां वेदनायां मा प्रवाहिष्ठाः । अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवादीरणमनर्थकरमहितं च गर्भस्य श्वासकासशोषकुब्जतादिकारित्वात् । तथा तेषामेव विधारणमिव वेदनायामप्रवाहणमुपघाताय । ततो यथोक्तं कुरु च ॥ २६**

१६२–तथाऽपरा स्त्री इदमनुशिष्यात्–भद्रे! गर्भिण्यनागतायां गर्भवेदनायां गर्भं मा प्रवाहिष्ठाः, न प्रेरयितव्यस्त्वया गर्भ इत्यर्थः । तथाविधमकालप्रवाहणं वेगोदीरणवद् गर्भिण्या अहितम् । गर्भस्य च तत्स्थाननिष्क्रासातस्य श्वासादिकरम् । तथा प्राप्तायां वेदनायां यदप्रवाहणं तद्वेगधारणवद् गर्भिण्या अहितं सदुपघाताय संपद्यते १६२

२७ प्रवाहणनियमः ।

**१६३–ततो शनैः शनैश्च पूर्वं प्रवाहिष्ठाः । निर्गमे बाढं गर्भस्य योनिमुखप्रतिपत्तौ बाढतरमा प्रसवात् इति॥२७**

१६३–तथा भद्रे! त्वं प्रथममारम्भ एव शनैःशनैः स्तोकं स्तोकं प्रवाहयेथाः । अनन्तरं गर्भस्य निर्गमनकाले निबिडं प्रवाहयेथाः । ततोऽपि योनिमुखप्राप्ते गर्भे निबिडतरमिति । आप्रसवादायावद्गर्भो निष्क्रान्तो भवति । यदा पुनर्गर्भो निष्क्रामति तदा तस्मिन् १६३

२८ प्रवाहमानायां गर्भिण्या हर्षोत्पादनाय शब्दः ।

**१६४–तस्यास्तु प्रवाहमानायाः स्त्रियः शब्दं कुर्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति। तथाऽस्या हर्षेण प्राणा आप्यायन्ते ॥ २८**

१६४–सुबोधम् १६४

२९ गर्भसङ्गे चिकित्सा ।

**१६५–गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण, पिण्डीतकेन वा। बध्नीयाच्च हिरण्यपुष्पीमूलं हस्तपादयोः। धारयेच्च सुवर्चलां विशल्यां वा ॥ २९**

१६५–गर्भसङ्गे कृष्णाहिकञ्चुकेन पिण्डीतकेन वा योनिधूपनम् । पिण्डीतको मदनः । तथा हस्तपादे च हिरण्यपुष्प्या मूलं बध्नीयात् । तथा सुवर्चलाया विशल्यायाः वा मणिवद्धारणं धारणम् १६५

३० अपरापातने उपचाराः

**१६६ (१) अथ प्रसूताया न च्यवेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुत्पीड्य अन्येन पृष्ठत उपसंगृह्य विधुनुयात् ( २ ) पार्ष्ण्या वा श्रोणीमाकोटयेत् । स्फिजौ वापरिगृह्य सुपीडितं निपीडयेत् । वेण्याऽङ्गुल्या वा कण्ठवेष्टितया च कण्ठतालु परामृशेत् । ( ३ ) भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत् । भूर्जगुग्गुलुभ्यां वा । शाल्मलिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिम्बसर्पनिर्मोकधूपयेत् । अनभ्यक्तां वा कटुतैलमिश्रैः कल्कीकृतैर्वा तैलाक्तैराऽलिम्पेत् । गुञ्जनालकल्केन वा । तदेव वा भक्षयेत् । लाङ्गलीमूलकल्केन वा पाणिपादावालिम्पेत् । महावृक्षक्षीरं वा मूर्ध्न्यनुपेचयेत् । ( ४ ) कुष्ठतालीसकल्कं बिल्वबल्वजयूषमैरेयसुरामण्डान्यतमेन यापतीक्ष्णोष्णेन वाऽम्लेन कुलत्थरसेन मधुकपिप्पलीसम्पाकेन वा पाययेत् । पिप्पल्यादिगणविडङ्गचित्रकापकुञ्चिकाकल्कं वा । खरस्य वृषभस्य वा जीवतो दक्षिणं कर्णमुद्धृत्य बिल्वकुलत्थबल्वजयूषादीनामन्यतमे प्रक्षिप्य मुहूर्तस्थितमुद्धृत्य तदापानं पाययेत् । ( ५ ) कुष्ठैलाकल्कं वा सुरया । अकालकल्कपायं वा प्रजातासुरामिश्रम् । कुष्ठलाङ्गलिकीमूलकल्कं वा मद्यमूत्रयतरेण । वत्सकादिचूर्णं वा मद्येन । शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य च तैलस्य पिचुं ग्राहयेत् । ततश्चैनामनुवासनकालेऽनुवासयेत् । ( ६ ) बिल्वबल्वजयूषाद्यास्थापनैश्च फलजीमूतकक्ष्वाकुधामार्गवकुटजाककृतवेधनहास्तिपर्णीमूलोपहितैरास्थापयेत् । सिद्धार्थककुष्ठलाङ्गलिकीमहावृक्षक्षीरमिश्रेण वा सुरामण्डेन । शाल्मलीवृन्तानि वा स्विन्नानि यापाथ्य पञ्चमूलकषाये विमर्दयेत् । तेन च पूतेन स्नेहवता फलादियुक्तेन ( ७ ) यथोक्तास्थापनद्रव्यसिद्धेन कटुतैलेनोत्तरबस्तिं दद्यात् । त्रिवृत्सुमुखमरिचाजाजीचित्रककल्कक्षीरगोमूत्रसिद्धेन वा कटुतैलेनाऽनुवासयेत् । उमाशाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयात् । स्निग्धेन वा कृत्तनखेन पाणिना नालानुसारतोऽपहरेत् ॥ ३०**

१६६–( १ ) अथानन्तरं निष्क्रान्ते गर्भे यदाऽपरा गर्भशय्या न निष्क्रामति तदा गर्भिणीवमनादिकं वक्ष्यमाणं विधेयम्–काचित् स्त्री गर्भिणीं विधुनुयात् । कथमित्याह–दक्षिणेन पाणिना नाभेरधो गर्भिण्या पीडयित्वा वामेन पृष्ठं चोपगृह्येति (२) तथा चान्या स्त्री पार्ष्ण्या गर्भिण्याः कटीमाकोटयेत् । आहन्यादित्यर्थः । तथा तस्याः स्फिचौ निपीडयेत् । तथा वेण्या केशवेण्या तालुकण्ठं स्पृशेत् । अङ्गुल्या वा केशवेष्टितया ( ३ ) भूर्जपत्रादित्रितयेन योनिधूपनम् । काच एव काचमणिः । भूर्जगुग्गुलुभ्यां वा योनिधूपनम् । अथवा शाल्मलीमूलसिद्धसर्पिषा म्रक्षिता योनिं कटुकालाबुप्रभृतिभिः धूपयेत् । अथवानभ्यक्तामेव कटुकालाब्वादिभिस्तैलमिश्रैः योनिं धूपयेत् । तैरेव वा कल्कीकृतैस्तैलमिश्रैर्योनिं लिम्पेत् । गुञ्जामूलेन वा नालपिष्टेन योनिं लिम्पेत् । तदेव वा गुञ्जामूलं वा भक्षयेत् । अयमनुमानम् । महावृक्षः सुधा ।

---

२१ व्यपृ–च ख २२ माकुट्टयेत् । स्फि–च ख २३ दविल्व–ग २४ मुत्कृत्य बि–ख २५ त्वबिल्व जयू–क. ख २६ यवासु°–च ख २७ गालिमी–ग २८ पतमेन । व°–ग २९ त्वबिल्व°–च ख ३० पुष्पाहे–च ख

(४) दोषाद्यपेक्षया कुष्ठतालीसयोः कल्कं पाययेत्। केनेत्युच्यते—कदाचिद्बिल्वक्वाथेन। कदाचित् वल्वजक्वाथेन। मैरेयेण वाऽन्येन वा यथायोग्येनासवेन सुरामण्डेन, तथाऽम्लेन काञ्जिकादिना, व्योषतीक्ष्णेन वा कुलत्थरसेनाम्लेन वा, मधूकपिप्पलिसपाकेन वा। मधूकशब्दो मूलागमेभ्यो नाधिगतः। एवं बिल्वयूषादीनामन्यतमेन कुष्ठतालीसयोः कल्कं वा पाययेद्योषितं भिषक्। अथवा पिप्पल्यादीनां कल्कं बिल्वयूषादीनामन्यतमेन पाययेत्। सुबोधमन्यत्। (५) कुष्ठैलाकल्कं सुरामण्डेन। अर्कालर्कयोर्वा कषायं क्वाथपरिभाषापरिदर्शितमानेन क्वथितगृहीतं प्रकृतिदेहाद्यपेक्षमात्रया सुरयोन्मिश्रं पाययेत्। अथवा लाङ्गलीमूलकुष्ठयोः कल्कं मद्यानामन्यतमेन मूत्राणां वाऽन्यतमेन पाययेत्। एतदुक्तं मद्यमूत्रयोरन्यतमेन। वत्सकादेर्गणस्य वा चूर्णं मद्येन यथायोग्यं पाययेत्। शतपुष्पादिभिः सिद्धस्य तैलस्य सबन्धिनं पिचुं तस्या योनौ धारयेत्। तथानुवासनकाले अनुवासनयोग्यतायाम्। तत एव शतपुष्पादितैलात् स्तोकेनानुवासयेद्यद्योदिनेऽनुवासनकाले सामान्येन योनौ पायौ वा। (६) अनन्तरोक्तबिल्वादियूषाद्यन्यतमेन फलजीमूतादिचूर्णमिश्रेण तामेवास्थापयेदपि। सिद्धार्थकादिमिश्रेण वा सुरामण्डेनाऽऽस्थापयेत्। अथवा बिल्वादिपञ्चमूलकषाये मृदितानां स्विन्नानां शाल्मलीपत्राणां स्वरसेन पूतेन स्तोकस्नेहेनानन्तरोक्तफलादियुक्तेनास्थापयेत् (७) यथोक्तैर्वा मदनकुष्ठादिभिरास्थापनद्रव्यैः सिद्धेन कटुतैलेनोत्तरबस्तिः। शिग्र्वादिसिद्धेन कटुतैलेनानुवासनम्। क्षीरगोमूत्रयोर्मिश्रीभूतयोर्द्रवप्रमाणम्। सवृतोमाशाल्मलिपिच्छापूरितयोनिं वा स्त्रियं विधुनुयात्। अथवा वैद्योपदेशेन काचित् पाणिना स्नेहाभ्यक्तेन नल्पनखेन बहिः प्रलम्बमपरानालमनुसारयन्ती कुशला तामपरामन्तरपहरेत्. १६६

### ३१ प्रसूताया मक्कल्लशूले चिकित्सा।

**१६७-(१) प्रजातायां चेद्बस्तिमूर्धोदरेषु शूलं मैर्कलाख्यं स्यात्तत्र यवक्षारचूर्णं सर्पिषा सुखोष्णोदकेन वा पिबेत्। वरणादिं वा सपञ्चकोलमेलाप्रतीवापम्। (२) अथवा वीरतरादिसूपरादिप्रतीवापम्, लवणचूर्णं वा वत्सकादिनिर्यूहेण, वत्सकादिं वा मदिरया, अंशुमतीद्वयक्वाथेन वा मरिचभद्रदारुकल्कम्, भार्ङ्गीनागरदेवदारुकल्कं कोष्णाम्भसा, पुराणगुडं वा त्रिकटुत्रिजातकधान्यकचूर्णसंसृष्टं भक्षयेत् ॥ ३१**

१६७-(१)प्रजातायाः प्रसूताया यदि बस्तौ मूर्ध्नि उदरे च कारणविशेषाद्युगपच्छूलं भवति, ततस्तस्मिन्मर्कलनाम्नि शूले घृतेन कोष्णोदकेन वा यवक्षारं पिबेत्। तयोरिवान्यतरेण वा पञ्चकोलसंयुक्तं वरणादिकम्। क्वथितं सदेलाप्रतीवापं पिबेत्। प्रतीवापोक्तेरेव क्वाथः सिद्धः। तथा च लवणचूर्णमपि वत्सकादेर्निर्यूहेण स्वयं वक्ष्यति (२) एवमेव वरितरादिकमपि क्वथितमूपरादिप्रतीवापम्। प्रतिवापशब्देनावचूर्ण्य देयं द्रव्यमुच्यते। अथवा वत्सकादिचूर्णितं सुरया पिबेत्। शालपर्णीपृश्निपर्णीभ्यां क्वाथेन वा मरिचभद्रदारुकल्कं पिबेत्। भार्ङ्ग्यादित्रयकल्कं कोष्णाम्भसा। अथवा त्रिकटुकादिसंयुक्तं पुराणगुडं योग्यया मात्रया भक्षयेत् १६७

### ३२ योनिभ्रंशचिकित्सा।

**१६८-तस्याश्चेत्स्वस्थानतो योनिर्भ्रश्येत। ततो यस्य कस्यचिच्छोणितेनाभ्यज्य योनिं यथास्थानं कुशला स्त्री निवेशयेत्। निविष्टां चाशोकरोहिणीबर्हिपोशीरप्रियङ्गुदेवदारुकल्कविपक्केन तैलेन बहुशः स्वेदयेत् पूरयेत् ब्रूयाच्च 'गच्छ सुभगे स्वस्थानम्' इति ॥ ३२ ॥**

१६८-तस्मिन्काले योनिभ्रंशे रक्ताभ्यक्ताया योनेः प्रवेशनम्। प्रविष्टाया चाशोकरोहिण्यादिपक्वतैलेन स्वेदनं पूरणं च बहुशः शश्वत्। 'गच्छ सुभगे स्वस्थानम्' इति मन्त्रपदेनैव तां योनिं ब्रूयात् १६८

### ३३ जातमात्रस्य बालस्योपचारः।

**१६९-तद्वच्चान्यतमा स्त्री जातमात्रमेव बालं बालोपचरणीयेन विधिनोपपादयेत्। तमुपदेक्ष्यते सूत्तरेषु ३३**

१६९-अन्यतमा च कुशला परिचारिकोत्तरस्थानोक्तेन विधिना बालमुपपादयेत्। सुबोधमन्यत् १६९

**टिप्पणी**—बालोपचरणीयेनेति-अ स उ १

### ३४ सूतिकाया उपचारः।

**१७०-(१) अथ सूतिका बलातैलेनाभ्यज्यात्। बुभुक्षितां च पञ्चकोलचूर्णेन यवान्युपकुञ्चिकाचव्याचित्रकव्योषसैन्धवचूर्णेन वा युक्तामहः परिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत्। स्नेहायोग्यां वातहरौषधक्वाथं ह्रस्वपञ्चमूलक्वाथं वा। (२) पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरं वस्त्रेण। तथा न वायुरुदरविकृतिमुत्पादयेदनवकाशत्वात्। जीर्णे तु स्नेहे पूर्वौषधैरेव सिद्धां विदार्यादिगणक्वाथेन क्षीरेण वा यवागूं सुस्विन्नां द्रवां मात्रया पाययेत्। प्राक् स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेत्। (३) एवं त्रिरात्रं पञ्चरात्रं सप्तरात्रं वानुपाल्य ततो यवकोलकुलत्थयूषेण लघुना चान्नपानेन। द्वादशरात्रात्परं जाङ्गलरसादिभिश्च क्रमादाप्याययेदग्निबलादीन्यपेक्ष्य। क्वथितशीतं च तोयं पाययेत्। तथा जविनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहैरन्नपानैश्च हृद्यैरुपाचरेत् ॥ ३४**

(१)१७०-यथासात्म्यमन्यतरस्य स्नेहस्याह परिणामिनीमिति नात्र स्नेहमात्राया नियमः। केवलं तथा विधेयम्—यथा तस्मिन्नेवाहनि जीर्णे स्नेहे यवाग्वा प्रयोगो नोपरुध्यते। तथा च आचार्य एव हृदये केवलं महत्या प्रतिषेधं करोति। यतः साऽहोरात्रेण जीर्यते। न तु मात्रान्तरस्य विधानम्। सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेदिति स्नेहे क्वाथे वा पीते यमकाभ्यक्तदेहाया वस्त्रेणोदरं

---

३१ 'मक्कल्लाख्यं स्या'-क. ख.

गर्भाशयान्निःसृता अपरा।




प्रसवोत्तरमपरासहितो गर्भाशयः।



# નિઃશલ્યો ગર્ભાશયઃ યોનિભ્રંશશ્ચ






વિવૃતાયોનિઃ

वेष्टयेत् (२) वातपूर ।भयात् वकारपरिहाराय । तत्र यदा स्नेहपानमारभ्यते तदा प्रोदकेन परिषेव सुस्नाता पुनश्च परिषेको यदा वा यवागूपानमारभ्यते । एतदुक्तं प्राक् स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेदिति । पूर्वोक्तैरेवौषधैरन तरोक्त । पञ्च कालेन यवागू यावन्मिवी सिद्धामेव यथायोग्यम् (१) एतदेव स्नेहपानादिक त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा । अनन्तरं यावद् द्वादशरात्रं यवागूपानं ततः मयूषे ।।त्र लघुना च तत्प्रायेणानुपान तत श्रम ।।मिरलम वेक्ष्य जाङ्गलरसादिभिर्बृंहणैर्बृंहयेत् १७०

टिप्पणी—स्नेहायोग्यामिति-स्नेह या नार्हति । स्नेहद्वेषिणीमिति भाव १७०

३५ सूतिकाया नवाभवनम् ।

**१७१-एवं हि गर्भवृद्धिक्षपितशिथिलसर्वशरीरधातुप्रवाह वेदनाक्लेदरक्तनिस्रुतिविशेष शून्यशरीराच्च पुनर्नवीभवति ॥ ३५**

१७१-सुबोधम् । अनेन क्रमेण सूतिस्त्री पुनर्नवी भवति १७१

३६ सूतिका याधे कृच्छ्रसाध्यत्वमसाध्यत्व वा

**१७२-अत एव च सूतिकाया व्याधिः कृच्छ्रसाध्यो मवत्यसाध्यो वा । तस्मात्तां यथोक्तेन विधिना प्रयत्नेनोपचरेत् ॥ ३६**

१७२-अत एव गर्भवृद्धिक्षपितधातुतयेत्यादिहेतुः सूतिकाया व्याधेरसाध्यत्वे भवति १७२

३७ सूतिकोपचाराणामवधि ।

**१७३-एवं साध्यर्धमासमुपसंस्कृता क्रमेण विमुक्ताहारविहारयन्त्रणा विगतसूतिकाभिधाना स्यात् । पुनरार्तवदर्शनादित्येके ॥ ३७**

१७३-सार्धो मासादूर्ध्वं सूतिकाभिधाननिवृत्ति । अन्ये पुनराहु पुनरार्तवदर्शनादूर्ध्वं सूतिकाभिधाननिवृत्ति १७३

३८ अध्यायोपसंहार ।

**१७४-इत्याद्य मासमादाय यावद्गर्भक्षमा पुन ।**
**स्त्री स्यात्तावद्विधिः सर्वः सर्वथा साधु दर्शित**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां शारीरस्थाने गर्भोपचरणीयो नाम तृतीयोऽध्यायः ॥ ३ ॥**

१७४-इत्येवमनन्तरोक्तेन प्रकारेण प्रथममासादारभ्य आदानात् प्रभृति पुनरार्तवदर्शनेन गर्भयोग्यता तावदस्या विधिरस्मिन्नध्याये दर्शित इति १७४

**इति श्रीमहामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां शारीरस्थाने तृतीयोऽध्यायः ॥**

---

## गर्भव्यापच्चतुर्थोऽध्यायः ।

### ( उपोद्घात )

अथ प्रकरणानात् गर्भव्यापच्चिकित्सितप्रधानमध्यायारम्भ ।

१ प्रतिज्ञा

**१७५-अथातो गर्भव्यापदं व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षयः ॥ ३८**

२ परिहार्याणि आसेवमानाया गर्भिण्या पुष्पदर्शनादौ चिकित्सा ।

**१७६-स्त्री चेदापन्नगर्भा परिहार्याण्यासेवेत । ततश्च यस्या वस्तिपार्श्वश्रोणियोनिमुखेषु शूलं पुष्पदर्शनं च स्यात् । तां मृदुसुखशिशिरास्तरणशयनस्थामीषदवनतशिरसं शीतप्रदेहपरिषेकादिभिरुपाचरेत् ॥ २**

१७६-आपन्नगर्भा सप्राप्तगर्भा स्त्री परिहार्याण्यासेवेत चेत्ततश्च यस्याः शूलं पुष्पदर्शनं च स्यात्ततस्तां मृदुत्वादिगुणयुक्तशयनस्थां शीतैः प्रदेहादिभिरुपाचरेत् १७६

३ पूर्वोक्तचिकित्साया प्रकार ।

**१७७-तद्यथा । सहस्रधौतेन सर्पिषाऽधोनाभि मवतः प्रदेह्यात् । मधुकसिद्धसर्पिषा सुशीतेन पिचुमाप्लाव्य योनिसमीपे स्थापयेत् । सैवेन पयसा मधुकाम्बुना न्यग्रोधादिकषायेण वा परिषेचयेत् । परिपीततत्त्वरसानि च तैलानि योनौ निधापयेत् । तच्छृङ्गसिद्धस्य वा क्षीरसर्पिष पिचुम् ॥ ३**

१७७-सहस्रधौत सर्पिर्यदनेकशोऽम्भो विलाप्य शीतोदके प्रक्षिप्य स्नानं क्रियते । मधुकेन सिद्ध सर्पिस्तथोक्तम् । तच्छृङ्गैर्न्यग्रोधादिशृङ्गैः सिद्धस्य क्षीरसर्पिष पिचुं योनौ दद्यात् । क्षीरमेव प्रमथ्य संपादितं सर्पिः क्षीरघृतम् १७७

४ अतिस्रुतरक्तायाश्चिकित्सा ।

**१७८-अतिस्रवति तु रक्ते तत एवाक्षमात्रं प्राशयेत् । केवलादेव वा क्षीरसर्पिष । पद्मोत्पलकुमुदकिञ्जल्कं च समधुशर्करं लेहयेत् (२) । धातकीगैरिकसर्जरसाञ्जनचूर्णं वा मधुना । न्यग्रोधादित्वक्प्रवालकल्कं वा । शीतैः । हरिणरुधिरं वा सक्षौद्रं पाययेत् । ऋद्धिविदारीजीवन्तीर्वा पयसा । नीलोत्पलसितापद्मलोध्रचन्दनादि वा तण्डुलाम्बुवासारसा यतरणं । गन्धप्रियङ्गुसितोत्पलशालूकोदुम्बरशलाटुन्यग्रोधशुङ्गानि वाऽजेन**

३२ °क्तानि सुताविं—क,

१ °स्याम । स्त्री च°—क ख २ °ततन य—क स ३ क सर्पि—क ख ४ च चैला—क ५ तच्छुङ्गासि°—क स ६ वा समधु । न्य°—क स ७ °यत् । वृद्धिवि—क ख ८ द्मलोध्रचद—क ख ९ °लाम्बु वा सरसा य सरण । ग°—क स

पयसा। (३)कशेरुकमृणालकशृङ्गाटककाश्मर्यपरूपकद्राक्षाशारिवाप्रपौण्डरीकानन्तोत्पलकन्दर्वबलजिक्वाथेन वा शर्करामधुमधुरेणं शालिचूर्णं । जीवनीयशृतं वा क्षीरम् । बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेनं पयसा समधुशर्करेण रक्तशाल्योदनं सुशीतं भोजयेत् । शीतवीर्यजाङ्गलरसेन वा । रक्तपित्तक्रियाश्च शोधनवर्ज्याः प्रयुञ्जीत । सौम्याश्च मनोनुकूलाः कथाः ॥ ४

१७८-रक्ते त्वतिस्रवति तत एव न्यग्रोधादिसिद्धात् क्षीरसर्पिषोऽक्षमात्र प्राशयेत् । केवलादेव वा क्षीरसर्पिषोऽक्षमात्र न तु न्यग्रोधादिशृङ्गसिद्धात्क्षीरसर्पिष । पद्मादिकिञ्जल्क च मधुशर्कराभ्या युक्त लेहयेत् (२) मधुना वा धातक्यादिचूर्णम् । मधुनैव न्यग्रोधादित्वचा शृङ्गाणा च कल्कम् । सक्षौद्र वा शशाद्यन्यतमरुधिरम् । ऋध्यादिक च पयसा । नीलोत्पलादीनि तण्डुलाम्बुवासारसयोरन्यतरेण । पक्वो मृल्लोष्टस्तथोक्त । आजेन पयसा गन्धप्रियङ्ग्वादीनि । (३) कशेरुकादीना कषायेण माधुर्यसपादनमात्राभ्या शर्करामधुभ्या मिश्रेण शालिचूर्णं पाययेत् । जीवनीयौषधशृत क्षीर वा पाययेत् । बलातिबलादिशृतक्षीरेण मधुशर्करासंयुक्तेन सुशीत रक्तशाल्योदन भोजयेत् । शीतवीर्याणा च जाङ्गलाना रसेन वा सुशीत रक्तशाल्योदन भोजयेत् । शोधनवर्ज्याश्च सर्वा रक्तपित्तोक्ता. क्रिया यथावसर कुर्वीत १७८

५ शोणितस्रुतिरहिते वस्तिशूलादौ चिकित्सा ।

१७९-अदृष्टशोणितां तु मधुकपयस्यासुरदारुभिः सिद्धं पय पाययेत्ताम्रवल्लीचश्मन्तकशतावरीपयस्याभिर्वा । विदार्यादिगणेन वा श्वदंष्ट्रास्वरसक्षीरसिद्ध वा सर्पि । पलाण्डुरससिद्धं वा सक्षौद्रम् ॥ ५

१७९-यदा तु शोणितदर्शन विनैव वस्त्यादौ शूल केवल भवति गर्भिण्यास्तथा ता मधुकादिसिद्ध पय पाययेत् । ताम्रवल्ल्यादिसिद्ध वा पय । विदार्यादिगणसिद्ध वा । श्वदंष्ट्रास्वरसक्षीराभ्या वा सिद्ध सर्पि पाययेत् । पलाण्डुरससिद्ध वा क्षौद्रयुक्त सर्पि १७९

६ त्रिमास यावदस्रस्रुतौ गर्भस्यासाध्यत्वम् ।

१८०-असंपूर्णत्रिमासायास्तु पुष्पदर्शने गर्भः प्रायो न तिष्ठत्यसजातसारत्वात् ॥ ६

१८०—प्रथमान्मासादारभ्य मासत्रय पुष्पदर्शने सम्यक् श्चिकित्सितोऽपि गर्भ कोष्ठे न तिष्ठत्यसजातसारत्वात् स्रवत्येवेत्यर्थ । तेन प्रथममासत्रय पुष्पदर्शने प्रायो गर्भश्चिकित्सयापि कोष्ठे न तिष्ठति । मासत्रयादूर्ध्वमपि चतुर्थादिष्वपि मासेष्वकाठिन्यात् १८०

७ आमगर्भे पुष्पदर्शने चिकित्सोपक्रम ।

१८१-आमान्वये चोर्ध्वमपि विरुद्धोपक्रमत्वात् । तत्र रूक्षशीतानि प्रयुञ्जीत ॥ ७

१८१ आमान्वये पुष्पदर्शने विरुद्धोपक्रमत्वाद्गर्भ कोष्ठे न तिष्ठति । आमे ह्युष्णतीक्ष्णादिका क्रिया । सा तु गर्भे विपरीता । अतो विरुद्धोपक्रमत्वम् । यत्र चतुर्थादिष्वपि मासेष्वामान्वयो नास्ति, तत्र पुष्पदर्शनेऽपि गर्भो विधारयितु सुशक्यते । तत्र त्वामान्वये रूक्षशीतान्यौषधानि प्रयुञ्जीत १८१

८ आमगर्भे पुष्पदर्शने चिकित्सा ।

१८२-तद्यथा-प्रागुपवास ततो दुरालभामृतोशीरपर्पटकघनचन्दनातिविषाबलाकट्वङ्गधान्याकक्वाथपानम् । तृणधान्यशालिषष्टिकपेयानामशनं च मुद्गादियूषैः । जिते त्वामे स्निग्धशीतानि पूर्ववत् ॥ ८

१८२ तद्यथेत्यादिना तेषामेवोपयोगविशेष दर्शयति । औषधात्पूर्वमुपवास । दुरालभादिक्वाथस्य पानम् । तृणधान्यादिपेया । मुद्गादियूषैश्चाशन प्रयुञ्जीतेति सबध्यते । एवमामे जिते प्रथमपुष्पदर्शनवत् स्निग्धादीन्युपयुञ्जीत १८२

९ आमगर्भपाते चिकित्सा ।

१८३-(१) आमगर्भे तु पतिते मद्यानामन्यतमं सामर्थ्यत. पाययेत् । गर्भकोष्ठविशुद्ध्यर्थमार्तिविस्मरणार्थं च । अमद्यपा पाचनीयद्रव्योपहिताभिः स्नेहलवणवर्ज्याभि. सतिलाभिरुद्दालकादियवागूभिरुपचरेद्यावन्तो मासास्तावन्त्यहानीति । (२) ततः प्रीणनैर्बलानुरक्षिभिरस्नेहैराहारैरादोषधातुक्लेदशुद्धेः । आमगर्भशेषेण हि पुनःपुनरकुशलमनुपद्येत । तस्मात्तीक्ष्णैरनवशेषयन्नुपाचरेत् । ततः पर स्नेहपानैर्बस्तिभिराहारैश्च दीपनीयपाचनीयजीवनीयबृंहणीयमधुरवातहरैरिति ॥ ९

१८३-आमगर्भपाते मद्यानामन्यतम गर्भिणीं पाययेत् । प्रयोजननिर्देशस्तद्गुणमन्यत् प्रदर्शयितुम् । अमद्यपा या केनचित् कारणेन मद्य न पिबति, ता पाचनीयद्रव्यसंमिश्राभिरस्नेहलवणाभि सतिलाभिस्तृणधान्ययवागूभिरुपाचरेत् । यावत्सख्ये मासि गर्भपातस्तावत्सख्यान्यहान्यय क्रम. । ततोऽनन्तरमेवादोषादिशुद्धे प्रीणनादिगुणैराहारैरुपाचरेत् । कुत इत्याह । आमगर्भशेषेणेत्यादि । तदनु च स्नेहपानैर्बस्तिभिस्तथा दीपनीयादियुक्तैराहारैरिति १८३

१० गर्भस्यावृद्धे शुष्कत्वस्य वा कारणानि ।

१८४-यस्याः पुनर्महति जातसारे गर्भे वर्ज्यानामवर्जनात् पुष्पदर्शनं स्यादन्यद्वा योनिस्रवणम् । तस्यास्तन्निमित्तं वायुः प्रकुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्यावतिष्ठते । ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभि. प्रतिच्छन्नायां रसस्यासम्यग्वहनाद्गर्भो वृद्धिमनाप्नुवन्नुपविशत्युपशुष्यति वा ॥ १०

१८४-महति जातसारे वर्ज्यावर्जनाद्योनिरार्तवमन्यद्वा किञ्चित् स्रवति तस्या योनिस्रुतिनिमित्त वायु. कुपितः सन् पित्तश्लेष्माणौ परिगृह्य या तु नाडी मातुराहारसारं रस गर्भस्य वहति ता नाडीं प्रतिपीड्य तिष्ठति । ततस्तया

१० °लकन्दर्वा°-क. ख ११ शालिपिष्टम् जी-क. ख. १२ °न च प°-क. ख. १३ °सर्सि°-क. १४ °यामशन च मु°-क. ख १५ °न पुन. शूलमनु°-क. ख.

तद्वद्धया नाल्या कुल्येव तृणादिच्छन्नया केदारो गर्भो वृद्धिमप्राप्नुवन्नुपविष्टस्तुपशुष्यति वा १८४

११ उपविष्टकाभलक्षणम्।

१८५–तत्र यस्या कादाचित्कार्तवपरिस्रावावल्पो च दृश्यते सततं च गर्भं मासात्परिमाणादपरिहीयमाण एव स्फुरति। न च कुक्षिर्विवर्धते तमुपविष्टकमित्याचक्षते ॥ ११

१८५—तत्र द्वौ भेदौ। एको वृध्यप्राप्ति । द्वितीय उपशोष । प्रथमे कादाचित्केन स्रावे। गर्भो न परिहीयते। नापि वर्धने, स्फुरति च। तमुपविष्टकमित्याचक्षत आचार्या १८५

१२ उपशुष्कापरपर्यायस्य नागोदरगर्भस्य लक्षणम्।

१८६–यदा तु प्रतिमासमार्तवं प्रत्यहं वा परिस्रवत्यल्पं च तथा परिहीयमाणो गर्भश्चिरात् किञ्चित् स्पन्दते। कुक्षिश्च वृद्धोऽपि परिहीयते। तदुपशुष्कं नागोदरं च ॥ १२

१८६–द्वितीये स्रवतिस्रावे वृद्धोऽपि परिहीयते। चिरात् स्तोकं च स्पन्दते कुक्षिश्च वृद्धोऽपि परिहीयते तं गर्भमुपशुष्कं नागोदरनाम्ना चाचक्षते १८६

१३ उपविष्टनागोदरयोः प्रसवकाल ।

१८७–तौ तु मातुराहारतेजसाऽप्यनाप्याय्यमानौ यदा पुष्टौ स्यातां केसदनादियुक्तौ। तदा वर्षगणैरपि प्रमदा प्रसूयेत एव ॥ १३

१८७–तौ चोपविष्टोपशुष्कौ मातुराहारतेजसा स्वल्प नाप्याय्यमानौ क्रमेण यदा पुष्टौ स्याता तदा व सदनादि युक्तौ बहुभिरपि वर्षैं प्रमदा प्रसूयेत १८७

१४ वातहेतुकयोरुपवि ष्टनागोदरयोर्लक्षणानि।

१८८–तत्र वातेनापविष्टकापशुष्कयोर्वायु प्रतिहन्यते, सशब्दं फेनिलं विच्छिन्नं शकृदुपसरयते, मूत्र मुपरुध्यते, कटीपृष्ठहृदयेषु वेदना, जृम्भा निद्रा नाशोऽभीक्ष्णं प्रतिश्याय, शुष्कास्य, साद, दह्येते इव कर्णौ, तुद्यते इव शंखौ, पिपासि कादिरिव संसृज्यते शरीरं परिक्रन्तत्विव वायुर्भ्रमति, कुक्षौ तम इव प्रवर्त्यते, दुःखेनास्य जरणमहरह परिहानि, स्फुटितविवर्णपरुषत्वनत्व च भवति ॥ १४

१८८–तत्रेत्यादिना दोषविशेषेण तयोर्लक्षणमुच्यते— तत्रापथ्यविशेषसेवया यदोपविष्टकोपशुष्कयोर्वायुराधिक्य भवति तदा तत्र वातहेतुकयोरुपविष्टकोपशुष्कयो कोष्ठचरो वायुस्ताभ्या प्रतिहन्यते। सशब्दतादियुक्त च शकृत् गर्भिण्युपवेश्यते। सुबोधमन्यत् १८८

१५ पित्तहेतुकयोरुपविष्टकनागोदरयोर्लक्षणानि।

१८९–पित्तेन ताम्रहरितमुपवेश्यते धूमकाऽम्लकश्छर्दिर्मूर्छा कुक्षिहृदयदाह, पीतरक्तगोमूत्रानन मूत्रनेत्रत्वक्त्वं, काली, दुर्बल। नित्य मूना च नारी भवति ॥ १५

१८९–पित्तेनोभयोर्गर्भिण्याःताम्रहरितशकृदुपवेशनादि। सुबोधम्। गोमूत्रवत् पीतरक्तनेत्रादित्वम् १८९

१६ कफहेतुकयोरुपविष्टनागोदरयोर्लक्षणानि।

१९०–श्लेष्मणा मधुरास्यत्वमुत्क्लेश, श्लेष्माद्वमनं, मन्तद्वेष, श्वेतहस्तपादनेत्रता, कास श्वासश्च ॥१६

१९ –श्लेष्मणा तयोर्गर्भिण्या मधुरास्यत्वादिकं भवतीति दोषविशेषलक्षणम् १९०

१७ उपविष्टनागोदरयो सामा या चिकित्सा।

१९१–तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धाना सर्पिषामुपयोग। तथा पयसा रसा मामगर्भाणा च गर्भवृद्धिकर। तथा सभोजनमेतरव च घृतादिभि। सुभिक्षाया अभीक्ष्णं यानवाहनापवर्ज बृंहणैरुपपादनम् ॥ १७

१९१—चिकित्सा तूभयो सामा येन जीवनीयादिसृतस्य पिरादिषु। पामुपयोगो गर्भवृद्धिकर इत्यर्थ। तथा घृतैरेव सर्पिराभिरि समाजनं सह भाजनम्। तैरव च सुभिक्षाया स्वप्राया गर्भिण्या यानवाहनाभिरपपादनमुपस्थार, अपवर्जनं दानम्। इति सामा यनोपविष्टकोपशुष्कयोर्विवर्धनार्थं चिकित्सितम् १९१

१८ वातजनितोपविष्टकनागोदरयोश्चिकित्सा।

१९२–अथ विशेष। वाते पूर्वमेव सैन्धवोपहितं क्षीरयष्टि दत्वा शीतोदकस्नाता मृदु शाल्योदनं भोजयेत्। ततो विदार्यादिग। नाथितेन सर्पिषाऽनुवासयेत्। निवात च सवत ॥ १८

१९२–वातादिदोष वि षे। स्वयेत्यादिना वमयति–बस्तिदानादनुभोजनम्। ततोऽनुवासनम्। सुबोधम् १९२

१९ पित्तजनितोपविष्टनागोदरयाश्चिकित्सा।

१९३–(१)पित्ते मधुकविदारीनियूहसिद्धं पयः पिबेत्। तिस्र स्थूलकुक्कुटीर्निस्तुषमाषाढक च क्षीरोदकनो ... संक्षुद्य तद्रसेन सर्पिषा च तित्तिरिकपिञ्जलान्यतरस्य साधयित्वा पाययदुपविष्टकविवर्धनार्थमुपशुष्कबृंहणार्थं च। अजासर्पिषा क्षीरेण जीवनीयैश्च संस्कृता यवागू पिबेत्। (२) पयस्याकाकोलीद्वयमुनिप कल्केन पयसा च सर्पिर्विपाचयेत्। तत्कार्यं क्षीरानुपानमुपयुञ्जीत। आमगर्भरसेन चाश्नीयात्। तानेव च तत्र मृष्टान् भक्षयेत्। जलचरमांसानि च ॥ १९

१९३–(१) स्थूला ता कुक्कु यस्तथोक्ता। तन माष कुक्कुटीरसेन सर्पिषा मिश्रितेन सह तित्तिरे कपिञ्जलस्य वा रस साधयित्वा उपविष्ट विवर्धनायमुपशुष्कबृंहणार्थं च पाययेदिति सबन्ध। जीवनीयाना यथासंस्कार मात्रा। (२) पयस्यादीना चतुर्णां कल्केन तच्चतुर्गुण सर्पि

१६ ताम्। तन व –च ख १७ खल का –क ख १८ हनादिभि क्षोभण मार्जनजभर्णैरु –च १९ ले सक्षु ध्यत–क २० यष्टिनिप यक–क ख २१ विपक्तात्मा –च ख

पयसा स्नेहसमेन विपचेत्। पयस्या क्षीरविदारी। कल्य प्रात। तस्मिन् क्षीरानुपाने प्रयुक्ते भोजनकाले आमगर्भाणा त्वाचिरकालजाताना प्राणिना रसेनान्नमश्नीयात्। तानेवामगर्भांस्तत्रैव रसे भृष्टान्निस्तालितान् भक्षयेत्। तत्तज्जल चारिणा हसादीना मासानि च १९३

२० कफजनितोपविष्टकनागोदरयोश्चिकित्सा।

**१९४-(१) कफे त्वानूपौदकपिशितोपदंशामच्छसुरां त्रिरात्र पञ्चरात्रं सप्तरात्र वा पिबेत्। (२) तिलमुद्गमापलवणबिल्वैपात्रैः पञ्चभिर्घृतपात्रं सयोज्य स्वनुगुप्तं निधापयेत्। ततः प्रातः पिण्डं बिल्वमात्र शृतशीतच्छागदुग्धानुपान वाऽश्नीयात्। अत्रैव वा बदरचूर्णपात्रमपि निदध्यात्। २०**

१९४-(१) पिशितमुपदश पानोपायभोजनयस्या सुरायास्ताम्। (२) तिलादीना पञ्चानामेकीकृत्य चूर्णस्य पञ्चपात्र घृतस्य पात्रेण सयोज्य निधापयेत्। स्वनुगुप्त कृत्वैष ततः प्रयोग। अत्रैव बदरचूर्णपात्रप्रक्षेपो द्वितीय। पात्रम् शुष्कद्रव्यस्य चतुष्षष्टिपलानि। घृतस्याष्टाविंशत्यधिक पलशतम् १९४

२१ वृद्धौ तत्पातनम्।

**१९५-एवमवृद्धौ तीक्ष्णैर्विरेचयेदपरापातनीयैश्च पातयेत्॥ २१**

१९५-एव गर्भो न वर्धते तदा गर्भिणी तीक्ष्णैर्द्रव्यैर्विरेचयेत्। अपरापातनीयैर्वा प्रयोगैर्गर्भं पातयेत् १९५

२२ लीनगर्भलक्षणम्।

**१९६-यस्या। पुनर्वातोपसृष्टस्रोतसि लीनो गर्भः प्रसुप्तो न स्पन्दते तं लीनमित्याहु.॥ २२**

१९६-लीनो नाम गर्भो यो गर्भिण्या वातोपसृष्टस्रोतसि लीनो न स्पन्दते।

२३ लीनगर्भचिकित्सा।

**१९७-तत्र श्येनोत्क्रोश-गो मत्स्य-गोधा-शिखि-कुक्कुट-तित्तिरीणामन्यतमस्य रसेन भूरिसर्पिष्केण माषयूषेण मूलकयूषेण वा घृताढ्येन रक्तशाल्योदन भोजयेत्। सक्तून्वा तिलमाषबिल्वशलाटुयुक्तान् पयसा पाययेत्। मेद्यमांसोपदंशं वा मार्द्वीकम्। तैलेन चाभीक्ष्णमुदरवक्षणोरुकटीपार्श्वपृष्ठान्यभ्यज्यात्। मुहुर्मुहुश्चैना हर्षयेत्। पूर्वोक्त चेक्षेत॥ २३**

१९७-तत्र लीने गर्भे श्येनादीनामन्यतमस्य रसेन बहुसर्पिष्केणाथवा माषयूषेण घृताढ्येन मूलकयूषेण वा घृताढ्येन रक्तशाल्योदन भोजयेत्। सक्तून् वा तिलादिसयुक्तान् क्षीरेण पाययेत्। बिल्वशलाटु बालबिल्वम्। मेध मेदुरम्। सुबोधम्। पूर्वोक्त गर्भवृद्धिकरोक्तम् १९७

२४ उदावर्तविबन्धचिकित्सा।

**१९८-(१)यस्या. पुनरुदावर्तविबन्धः स्यात्तां वातहरस्निग्धान्नपानैरुपाचरेत् (२) अष्टमे तु मासे मधुकसिद्धेन तैलेनानुवासयेत। तदसिद्धौ वीरणशालिकुशकाशेक्षुबालिकावेतसपरिव्याधमूलानां भूतीकानन्ताकाश्मर्यपरूषकमधूकमधुकमृद्वीकाना च पयसार्धोदकेनोद्धृत्य रसं तेन प्रियालबिभीतकमज्जातिलकल्कयुक्तेनेपल्लवणोष्णेन निरूहयेत्। विगतविबन्धां च स्नाताशितां साय तेनैव तैलेनानुवासयेत॥ २४**

१९८-(१) यस्या इत्यादि सुबोधम्। (२) अष्टमे मासे त्वनुवासन तेनानुवासनेनासिद्धौ वीरणादीना मक्षाना मूलाना भूतीकादीना यथासभव मूलाना फलाना च क्षीरोदकाभ्या अनुक्वथनेन चूर्णमेलनेन रसमुद्धृत्य तेन रसेन प्रियालादिकल्कमिश्रेण ईषल्लवणेनेषदुष्णेन च निरूहयेत्। वीरण तृणविशेष। इक्षुबालिका काण्डशालिरिक्षु। परिव्याधो जलवेतस। विगतोदावर्तविबन्धा चानुवासयेत्। तेनैव मधुकसिद्धेन तैलेन १९८

टिप्पणी-'न्युब्जा (अधोमुखीं शयानाम्) त्वेनामास्थापनानुवासनाभ्यामुपाचरेत्' इत्युक्तं चरके (शा. ८-२९) १९८

२५ उदावर्तापेक्षाया दोष।

**१९९-उदावर्तो हि समुपेक्षितः सहसा सगर्भां गर्भिणीमतिपातयेत्॥ २५**

१९९-अवश्य चोदावर्ते चिकित्सा कुर्यात्। यत उदावर्त उपेक्षित सहसा शीघ्रमेव सगर्भां गर्भिणा हन्यात्। १९९

२६ मूढगर्भहेतव।

**२००-यस्या पुनरतिमात्रदोषोपचयाद्यथोक्तैर्वा व्यवायादिभिरन्यैर्वा व्याधिभि. पूर्वोपचितेन वा जनन्यपत्ययो कर्मणा बन्धनोन्मुच्यते गर्भ. फलमिव वृन्तात्समुक्तबन्धनो गर्भशय्यामतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रसमान. कोष्ठसंक्षोभमापादयति। तत. कोष्ठसंक्षोभाद्वायुरपानो मूढ. कुक्षिबस्तिपार्श्वोदरयोनिशूलानाहविण्मूत्रसंगानापाद्य गर्भं च्यावयति तरुणं शोणितभावेन। सोऽभिहितः प्राक्॥ २६**

२००-यस्या इत्यादि सुबोधम्। गर्भस्य बन्धनं यत्र तत्र मातुरनुबन्धो भवति परिपोषार्थम्। वृन्तात्येन शाखाया। निबध्यते फलम्। स व्यापन्नो गर्भ आम सन् शोणितभावेनापि प्रस्रवते। तत्र च विधेयमुक्तम् २००

टिप्पणी-'अपानो मूढ सन् तरुणमधनाद्यमव्यक्तचेतनं गर्भ च्यावयति' इति सर्वत्र। शोणितभावेन-शोणितस्रावेण २००

२७ मृतगर्भाया लक्षणम्।

**२०१-विवृद्धे तु गर्भे स्तब्धं स्तिमितं शीतमश्मगर्भमिवोदरमाभाति। शूलमधिकमुपजायते न च स्पन्दते गर्भो नाव्य प्रादुर्भवन्ति न स्रवति योनिराक्षिणी**

२२ °ल्वपत्रै. प' क. ख. २३ °यकृमधुकमृ.-क. ख. २४ °नान्मोच्य-क. ख.

## मूढगर्भाणां केचन प्रकाराः ।



एकसक्थ्ना निर्गतो मूढगर्भः



कीलाख्यो मूढगर्भः









परिघाख्या मूढगर्भ-प्रकाराः

चास्या मंस्यते तथा मूत्रामतिपरीता व्ययतेऽन्यया चेष्टते ताम्यति भ्राम्यति रादित्यहर्निशं न स्वपिति पूत्युच्छ्वासा कृच्छ्राच्छ्वसितिर्यतिकष्टं प्राणिति जक्षि तीत्यवंविधा स्त्रियं मृतगर्भां विद्यात् ॥ २७

२०१–यदा तु वद्धो व्यापद्यते तदा गर्भिण्या स्तब्धो दरत्वादिक करोति। आन्या गर्भप्रसववेदना। अत्रा श्वासो वचार्न मन। पूतिः श्वासो यस्या मा तथोक्ता। अतिकष्ट प्राणिति। यद्यपि येष्ठासु प्रभवति। जीवति वा कष्ट न जक्षिति भक्षयति। स्वपिति वा। इत्येवंविधान्नुग युक्ता स्त्रियं मृतगर्भा विद्यात् २०१

२८ मू मन्दप्रय।

२०२–त तु गर्भं कदाचिदम्यगपत्यपथमनेकधा प्रतिपन्नं विगुणेनेव वायुना पीडितं मोहितं च मूढ गर्भमित्याहुः। विगुणानिः प्रतिपीडनर्वधिन्यादस्य गतिं च २८

२०२—न गर्भं कदाचिद्दानवद्यादम्यगनार्नवापत्य पथ योनिमार्गं प्रवृत्तं वायुना पीडितं मोहितमपत्यं मू गभमि याहुराचार्याः। वायुपीडनवैनिम्याध तस्य गभस्या मूढगतिरवम् २०२

२९ मूढगर्भगतय स्थानानि च।

२०३–समासतस्तु त्रिविधा गतिरूर्ध्वा तिर्यगुन्युब्जा च। सन्धानानि पुनरष्टौ। तान्यवेवासरन यस्य न्ते २९

२०३—मक्षपण त्रिविधा गतिरूर्ध्वादिभेदेन। ऊर्ध्वा यस्यामुत्थितो गभ आयाति। तिरश्चीना गर्भिणीपार्श्वयो कृपार्श्वाययस। कुब्जा अधश्शिरस ऊर्ध्वपाय्य। तस्य च गभस्याष्टौ सस्थानानि तानि च वक्ष्यन्त–(१) मखिय ध्यामागमनमेकम् (२) एकेन मवथ्ना द्वितीयम्। (३) शिर हमूलेन तृतीयम् (४) तिर्यक् चतुथम् (५) पार्श्ववृत्त शिरस पञ्चमम्। (६) बाहुद्वयेन षष्ठम। (७) वक्रण पृष्ठेन पार्श्वपार्श्वर्नयानिमुपागमन सप्तमम् (८) एकेन पाण्या यानिं द्वितीयेन गु मित्यष्टमम् २०३

टिप्पणी–समामत इति–'विस्तरेण तु तिर्यग्ग्रीवाजङ्घा प्रवर्तनादन्यता ' इति डल्हण (सु नि ८५) २०३

३ असाध्यमूढगर्भलक्षणम्।

२०४–तेपु सर्वेष्वपि विपरीतं द्रयार्थामाक्षपयानि प्रसवर्नवरणमकर श्वासप्रमाभिपन्नां शीतगात्रीं पूत्यु द्गारा च वर्जयेत् ३०

२०४—तेषु सर्वेष्वपि मृतगर्भेषु विपरीतां द्रयार्थस्वाप्ति युक्ता गर्भिणीं वर्जयेत्। न चिकित्समित्यर्थ २ ४

२१ मृत मन्दोपक्षाया दोषा।

२०५–न तु क्षणम उपेक्षेत गर्भशल्यम्। तद्धि निरुच्छ्वासमीकृत्य आशु जननीं हन्यात् ३१

२०५–शल्यभूतं गर्भं मृत मत क्षणमपि भिषक् नो पेक्षेत। तद्धि गर्भशल्यं जननी उच्छ्वासरोध कृत्वा ता हन्यात् २०५

३२ सचेतनगर्भशल्यनापि जन या भयम्।

२०६–सचेतनश्च गर्भं शस्त्रेण विदार्यमाणो विषम मङ्गानि विक्षिपेत् ३२

२०६–अविज्ञानाच्च सचेतनोऽपि गर्भ शस्त्रेण विदार्यमाणो विषम कृत्वाङ्गानि विक्षिपन् निरुच्छ्वासीकृत्य जननीं हन्यादिति सवध २०६

३३ गर्भसङ्गे गृहीता दाक्ष्यम्।

२०७–तस्मात्तत्सङ्गे सूत्य प्रयतेरन् पूर्वोक्तानि च मन्त्रौषधानि प्रयुञ्जीत ३३

२०७–तस्मात्तस्य जीवतो गर्भस्य सङ्गे अप्रसवे। सूत्यो या अनुभूतानेकप्रसवास्ता प्रसवाय नानाविधैरुपायै प्रयतेरन् २०७

३४ गर्भसङ्गस्य त्रैविध्यम्।

२०८–त्रिविधस्तु सङ्गो भवति। शिरस्यंसे जघने वा ३४

२०८–तस्य हि सङ्गस्त्रिविधो भवति २०८

३५ मूढगर्भोपाया।

२०९–मूढगर्भस्य तु जरायुपातनसामान्य कर्मत्यक। मन्त्रादिकमाथर्ववदविहितमित्यर्थ। द्दष्टकर्मणा शल्य हृत्या शल्याहरणमित्यर्थ ३५

२०९–य पुरा मूढगर्भेतरयैव आचार्या जरायुपातनसामान्यं कर्मेति कथयन्ति। अ ये मन्त्रादिकं दैवहेतो रचितादर। शुल्यातुवाक्षातस्यक्षापायत्वाच्च २०९

३६ गर्भशल्यम। कष्टतरत्वम्।

२१०–न ह्यत कष्टतममस्ति शस्त्रकर्म। यतो यानि यकृत्प्लीहा आमाशयादीना मध्ये तानुपहिंसिताऽस्य शस्त्रता शस्त्रमवधार्यमुत्कर्ष अपकर्षणस्थापनकर्तन च्छेदनभेदनपीडनऋजुकरणानि चैकेन पाणिना कार्याणि ३६

२१० —अतो गर्भशल्यकर्मणो यच्छस्त्रकर्म कष्टतम ना स्ति यतो यान्या मानि रक्ष्याणि स्थानानेव शस्त्रमवधार्यम दारिणी गर्भत्वात्। एकेनैव पाणिनोत्कर्षणादि कार्याणी त्यतिकष्टम् २१०

टिप्पणी–उत्कर्षणम्–अधोगतस्योर्ध्वाकरणम। यावत नम्–गर्भशय्याया तिर्यगवस्थितस्यानयनयाधोऽन्यावृत्या स्थापनम्। उत्कर्तनम्–ऊर्ध्वस्य कस्यचिन्मृतस्य छेद नम्। अपकर्षणम्–ऊर्ध्वगतस्याधःकर्षणम्। छेद नम्–तत्तदङ्गस्य द्वैधीकरणम्। भेदनम्–गर्भ कुक्ष्यादेराध्मातस्य विदारणम्। पीडनम्–सपीडनम्। ऋजुकरणम्–वक्रस्य ऋजुकरणम् (सु नि १५ ३) २१०

३७ प्राणसंशय शल्योपक्रमविचार।

२११–तस्मादीश्वरमापृच्छ्य पर च यत्नमास्थाय तद्धि शस्तहितस्तमुपक्रमेत्। क्रियायां ध्रुवं मरणम्। उप क्रमे संशय। तथाद्राश्मरीप्रभृतीनामपि ३७

२५ 'गुणन वा,–क ख २६ 'मक्कल्लभा,–क ख २७ 'पंणव्याव–ग

२११-तस्माद्भिषगीश्वरमापृच्छ्य यथा मृतायामयशसा योगो न भवतीति। परं च यत्नमास्थाय कृताभ्यासैश्च भिषग्भि शस्त्रेणोपक्रमेत यस्मादनाहरणे गर्भस्य गर्भिण्याश्च ध्रुवमवश्यं मृत्युर्भवति। उपक्रमे तु संशय । प्रसङ्गादुदरादीनामप्येवं विज्ञेयम् २११

टिप्पणी-ईश्वरम्-स्वामिनम् २११

३८ मूढगर्भाहरणविधि ।

**२१२-अथोत्तानाया व्याभुग्नसक्थ्या वस्त्रचुंवलोन्नमितकटिप्रदेशायाश्च धन्वनागवृत्तिका[29]शाल्मलीपिच्छाघृतैरभ्यज्य हस्तं योनिं च गर्भमाहरेत् ३८**

२१२-व्याभुग्ने संकुचिते सक्थिनी। वस्त्रचुम्बल पट्टमथ कोमलपिण्ड । नागवृत्तिका सल्लकी स्वनामिका। वा नागमृत्तिकेति पाठ । हस्त भिषज । इत्युत्तानाया गर्भमाहरेत् २१२

३९ मूढगर्भाहरणप्रकार ।

**२१३-तत्र सक्थिभ्यामागतस्यानु[30]लोममाञ्छनमेव। एकैक[31]सक्थिप्रपन्नस्येतरं सक्थिं प्रसार्य, स्फिग्देशागतस्य स्फिग्देशं प्रतिपीड्यो[32]र्ध्वमुत्क्षिप्य सक्थिनी प्रसार्य, तिर्यगागतस्य[33] परिघस्येवापरार्धमुत्क्षिप्य पूर्वार्धमपत्यपथं प्रत्यार्जवमानीय, पार्श्वा[34]पवृत्तशिरसोऽसं प्रतिपीड्योर्ध्वमुत्क्षिप्य शिरोपत्यपथमानीय, बाहुद्वयप्रपन्नस्योर्ध्वमुत्पीड्यांसौ शिरोमूलमानीय निर्हरेत् ३९**

२१३-तत्रेत्यादि। आञ्छनमात्मदिकर्षणम्। सक्थिनी प्रसार्य तन्निर्हरेदिति सम्बन्ध । स्फिग्देश योनिमुखादन्तर्नीत्वा। पादौ योनिमुखमानीय । सक्थिनी प्रसार्य गर्भस्य। परिघो दण्डाकार आयुधो योनिमध्ये हि तत्परिवर्तने छिनत्तीति। पूर्वार्ध शिरोभाग । पार्श्वे वक्र शिरो यस्य तस्यांसं प्रतिपीड्य शिर अपत्यपथमानीय निर्हरेत्२१३

४० शस्त्रदारणार्हमूढगर्भलक्षणम्।

**२१४-यस्त्वाभुग्नसक्थ्यः पाणिपादशिरोभिर्योनिं प्रतिपद्यते। यश्चाभुग्न एवैकेन पादेन योनिं द्वितीयेन पायुम्। तौ मूढौ हस्तेनाहर्तुमशक्याविति शस्त्रमवचारयेत् ४०**

२१४-यौ वा ताभ्या संस्थानाभ्या मूढगर्भौ तौ द्वावेव हस्तेनाहर्तुमशक्यत्वात् शस्त्रदारणमर्हत २१४

४१ शस्त्रावचरणेन मूढगर्भाहरणम्।

**२१५-अथ म्रियमाणस्य मण्डलाग्रेणाङ्गुलिशस्त्रेण वा (शिरो) विदार्य शिर.कपालान्याहृत्य[35] गर्भशङ्कुना गृहीत्वा चिबुके तालुन्युरसि कक्षयायां वाऽपहरेत्। अभिन्नशिरसं[36] चाक्षिकूटे[37] गण्डे वा। तथांससक्तस्यांसदेशे बाहुं छित्वा दृतेरिवाध्मातस्य वातपूर्णमुदरमवदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्। जघनसक्तस्य जघनकपालानि दारयित्वेति[38]। अपि च-४१**

**यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः।**
**तत्तच्छित्वा हरेत्सम्यग्रक्षे[39]न्नारीं च यत्नतः ४२**

२१५-अथेत्यादि सुबोधम्। गर्भशङ्कु पूर्वोक्तो वक्रवक्त्रो यन्त्र । गर्भस्य हि कक्षायामपजने वाऽभवत्। यस्य तु युक्तिवशात् कपालान्यविदारितानि तस्याक्षिकूटे गण्डे वा शङ्का वाऽभवत् सक्ति । अपि चेति समुच्चये-यदित्यादि सुबोधम् २१५

४२ व्यपगतगर्भशल्याया उपचारा ।

**२१६-अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक्।**
**एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ४३**
**दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः।**
**योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ४४**
**दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकात्।**
**चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्तत ४५**
**कटुकातिविषापाठाशाकत्वग्हिङ्गुतेजनी.।**
**तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ४६**
**त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत्।**
**सायं पिबेदरिष्टं च तथा सुकृतमासवम् ४७**
**शिरीषककुभक्वाथपिचून्योनौ च निक्षिपेत्।**
**उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ४८**
**पयो वातहरैः सिद्धं दशाहं भोजने हितम्।**
**रसो दशाहं च परं लघुपथ्याल्पभोजना ४९**
**स्नेहाभ्यङ्गपरा स्नेहान्बलातैलादिकान्भजेत्।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ५०**

२१६-मृतगर्भे आहृते याऽवशिष्टाऽपरा सा पूर्वोक्ता। दीप्यकादीना समाना चूर्णं स्नेहेन घृताद्यन्यतमेन यथायोग्य पाययेत्। तेषामेव कल्क वा। कल्को जलपिष्टद्रव्यम्। दीप्यकादिवत् कटुकादीनि। एवमेवौषधेन त्रिरात्रमासीत दोषस्रावाय वेदनोपशमाय च। दोषो न वातादि। अपि तु रक्तपिच्छादि । त्र्यहादूर्ध्वं स्नेहमेव सप्तरात्र पिबेत्। औषधप्रतिषेधार्थमेवकार । एव सायमरिष्ट प्रान स्नेहे पीते। उपद्रवा ज्वरादयो व्याधय । एवं त्र्यहमौषधम्। स्नेह. सप्तरात्रम्। दशाह पय । दशाह मांसरस इति क्रम । ततोऽनन्तर स्नेहाभ्यङ्गपरा सती वातव्याधिनिर्दिष्टान् बलातैलादिकान् भजेत्। आदिशब्देन तत्स्वरूपाणामन्येषा ग्रहणम्। ततश्चतुर्थमासान्त यावल्लघु भोजनत्वादियुक्ता, पञ्चमान्मासादारभ्य क्रमेण न सहसा यथेष्टानि सुखानि भजेत् २१६

४३ बलातैलविधि ।

**२१७-अथ बलातैलमुपदेक्ष्यामः। बलामूलकषायस्य भागाः षट्, तावन्त एव पयसो यवकोलकुलत्थदशमूलकषायस्य भागो भागश्चतुर्दशस्तैलस्य तत्सर्वमे-**

२८ णम्। तथोद°-क ख २९ °गमृत्तिकाशा°-क ख ३० °नुलोम्याभिञ्छनमे°-क ख ३१ °कस्मिन्सक्थिप्र°-क ख ३२ तिपिध्यार्ध्व°-क ग ३३ °तस्य परिवर्त्य वाप-क. ख ३४ पार्श्वावृत्ताशि°-क, पार्श्ववृत्ताशि°-ख ३५ °त्य शङ्कु°-क ख ३६ रस वाक्षि-°क. ख. ३७ °कूटे वा। त°-ग. ३८ °ति। भवन्ति चात्र °-क. ख. ३९ °-ग्रक्षन्ना°-ग. ४० °ना स्वेदाभ्य°-क. ख.

कल्कं कृत्वा श्लक्ष्णपिष्टानि चावाप्य काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाक्षीरशुक्लामधुकदेवदारुमञ्जिष्ठाच चन्दनशारिवातगरकुष्ठशतावयश्च पुनर्नवातपुष्पावराप्रसरणीरवगन्धाकालानुसारीमेवानि शनैर्मृद्वग्निना साधयित्वा शुभाजनेऽनुगुप्त निदध्यादेष भगवतो धन्वन्तरेरभिमतस्तैलराजो राज्ञां राजमात्राणां सूतिकानां वृद्धानां शिशूनामतीतवयसां सुकुमाराणां स्त्रीणां महाग्रहगृहीतानां दीर्घरोगक्षपितवपुषां ममविद्धपतिताभिहतभग्नविश्लिष्टदेहानां दैवोपघाताभिशप्तमनोज्वरपरीतानां पानभावनाभ्यङ्गबस्तिषु प्रयोज्य । तेन बल पौरुषस्मृतिमतिमेधाग्निवीर्यौजांसि विवर्धन्ते पक्षाघाताक्षेपकार्दितादिविविधवातविकारगुल्माहिघ्नाध्मानकासा निवर्तन्ते। अहरहश्चोपयुज्यमाने षण्मासाद्वान्त्र वृद्धिं प्रशाम्यति च वन्ध्या च पुत्रं लभते तामिच्छया ५१ भवत इति । भवति चात्र–५१

२१७–स्नेहान् भजेदित्युक्तिप्रसङ्गेन बलातैलमेव मुच्यते द्वितीय तु बलाशतं छिन्नरुहापादमित्यादिनाऽभ्युक्तं वक्ष्यते। अथेति मङ्गलार्थे । बलामूलकषायस्य षड् भागा । क्षीरस्य षष्ठेव द्वादश । यवादीनां नव ॥ चतुर्थस्य दशमूलस्य नैवोक्तस्य काथस्यैको भाग । एव त्रयोदश भागा क्वाथस्य । चतुर्थो भागस्तैलस्य । तैलचतुर्भागनावापनम । काथ्यद्रव्याणां तैलात्षोडशांश मानम् । द्रव्याच्चतुर्गुण काथशेष । दशमूलमधु यस्य यवाद्यवनमसमत्वम् । वावाल्यादाना परस्परसमत्वम् । क्षीरशुक्ला–क्षीर काकोली । पत्र–गन्धपत्रम् । रसो बाल । कालानुसार्यं सुरसम् । एव द्वात्रिंशदावापनद्रव्याणि । सुबोधम् । भवति चात्रेति तन्त्रशीलि २१७

४४ मृतगर्भिण्या जीवद्गर्भनिष्कासनम्।

२१८–बस्तिद्वारे विपन्नाया कुक्षि प्रस्पन्दते यदि।

जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ५२

२१८–गर्भस्य जन्मकाले जीवतो यदि माता विपन्ना स्यात्तत कुक्षिप्रस्पन्दनेन जीवन्त गर्भ विदित्वा ततो बस्तिद्वारे विपाट्य तमुद्धरेत् २१८

४५ स्रवद्गर्भाया आदितो सप्तममास यावत् चिकित्साक्रम ।

२१९–मधुकं शाकबीजं च पयस्या सुरदारु च।

अश्मन्तक कृष्णतिलास्ताम्रवल्ली शतावरी ५३

वृक्षादनी पयस्या च लता चोत्पल शारिवा।

अनन्ता शारिवा रास्ना पद्मा च मधुयष्टिका ५४

बृहतीद्वयकाश्मर्यक्षीरिशुङ्गत्वचो घृतम् ।

पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका ५५

शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं बला ।

सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ५६

क्रमात् सप्तसु मासेषु गर्भे स्रवति योजयेत् ।

२१९–मधुकादीनि चत्वारि प्रथमे मासे गर्भे स्रवति योजयेद्यथायोग्य कल्पनया । अश्मन्तकादीनि द्वितीये । अश्मन्तको मालुरपर्ण । ताम्रवल्ली रक्तमतल्ली मञ्जिष्ठा वा । वृक्षादनीनि पञ्च तृतीये । वृक्षादनी वृक्षस्थाधिरोहिणी वन्दाक । लता प्रियङ्गु । अनन्तादीनि पञ्च चतुर्थे मासि योजयेत् । अनन्ता दूर्वा । पद्मा पद्मचारिणी । घृत यथायोगम् । क्षीरिवृक्षा ॥ शृङ्गत्वचो यथालाभ पञ्चमे । शृङ्गमङ्कुर । पृश्निपर्ण्यादीनि षट् षष्ठे । श्वदंष्ट्रा गोक्षुरक मधुपर्णिका जीवन्ती । शृङ्गाटकादीनि सप्तमे २१

४५ अष्टमप्रभृति गर्भस्याप्यायना योगा ।

२२०–कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ५७

मूलै शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ।

नवमे शारिवानन्तापयस्यामधुयष्टिभि ५८

योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया २१९

अथवा यष्टिमधुकनागरामरदारुभि ५०

इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसङ्ग्रहसंहितायां शारीरस्थाने गर्भव्यापन्नाम

चतुर्थोऽध्याय ॥ ४ ॥

२२०–कपित्थादीनां षण्णा मूलै शृत क्षीरमष्टमे। शारिवादिचतुष्टयेन नवमे। पयस्यया दशमे। अथवा यष्टिमधुकादित्रयेण दशमे । सर्व बृहणमामान्वय विना शमम् २२०

इति श्रीमहामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां शारीरस्थाने

चतुर्थोऽध्याय ॥

४१ °त्वा श्लक्ष्णपिष्टानि चा°–क ग ४२ °पापनर्ववसजरसराश्वगन्धावचा–क ख ४३ °सार्यमेध–क ख ४४ °राणां महा–क ख ४५ °श्लिष्टाङ्गानां दे°–क ख ४६ भिशस्तम–क ख ४७ स्मदिध्माश्वा–क ख ४८ °सादन्त्र–क ख ४९ °वृद्धि प्रशममावर्ते व°–क ख ५० क सिता । स°–क ख ५१ °गंधिका । मू–क

टिप्पणी—एवं शारीरस्थानस्य प्रथमाध्यायमारभ्य चतुर्थाध्याय यावच्छ्रीमता वाग्भटेन प्रसूतितन्त्रं समासेनोपवर्णितम्। अथ व्यासापेक्षिणाकृते चरकसुश्रुतान्तर्गतास्ते ते भागा वाग्भटीयतत्तत्सूत्राङ्कविन्यासपूर्वकं समुद्धृयन्ते। एवमुत्तरत्रापि द्रष्टव्यम्। अत्र ( ) एतच्चिन्हान्तर्गतोऽङ्को वाग्भटीयसूत्रस्य, तद्बहिर्भूताश्चाङ्का यथायथ सुश्रुतचरकयोरित्यवधेयम्

शारीरस्थाने प्रथमोऽध्यायः ।

( २ ) च चि २ पा. १-१५ सु शा १० ५३ ( ३ ) सु. सू ३५. १३,-सु शा १० ५४ (५) सु शा १० ५४-५५,-शा २ ३१ ( ७८ ) च चि २. पा ४ ४६-४९,-चि ५७, सु शा ४ २०-२३ (९) च चि २ पा ४ ५०,-चि ३० १४५, सु शा २ ११ ( १०, २० ) च चि ३० २२५-२२६, सु शा २ १७ १४ २२ ( ११ ) च चि ३० २०८-२०९, सु शा २ १८ ( १२ ) सु शा २ २० ( १३ ) सु शा २ २२-२३ ( १४ ) च चि ३ १३, सु उ ४२ १३-१५, १९-२१ ( १५ ) च चि १३ २१, ५९-६७, सु नि ७ ८, -चि १४ ५ ( १६ ) च नि ३ १४ ( १७-१९ ) च शा २ ८-१० ( २१ ) सु सू १४ ६, १८, -शा ३ ११ ( २२ ) च शा ८ ४ ( २३-२४ ) च चि ३० १३९-१४४, सु शा. २ ३-४ ( २५ ) सु शा २ ५ ( २६, ४० ) सु शा २ ६, १०, १२, १३ ( २८-३० ) च. चि ३० १४७-१५२ ( ३१-३९ ) सु शा २ १२, ७-१०. १४-१५ ( ४१-४४ ) च शा ४ ७, सु शा ३ ६-१०. ( ४५-४६ ) च शा ८ ५, सु शा २ २५ ( ४७ ) सु शा २ २५-२६ ( ४८-५० ) च शा ८ ५, सु शा २ २८, ३० ( ५१ ) सु शा २ २९ ( ५५-५८ ) च शा ८ ९-१५, ७, ८, सु शा २ २७-२८ ( ५९-६० ) च शा ८ ६ ( ६१-६२ ) च शा ८. १९, सु शा २ ३२ ( ६३ ) च शा ८ २० ( ६४ ) च शा. ८ ९ ( ६६ ) च शा ८ १५, सु शा. २ ३५ ( ६७ ) च शा ८ १६ ( ७० ) च शा ८ १७ ( ७२ ) सु शा २ ३४ ( ७३ ) सु शा २ ३५.

शारीरस्थाने द्वितीयोऽध्यायः ।

( ७४ ) सु शा २ ३६ ( ७६ ) च शा ४ ७ ( ७७ ) सु शा ११०. ( ७८ ) च शा २. १२ ( ७९ ) च शा २ १४ ( ८० ) च शा २ २८-२९, ३ २१, २३, सु शा २ ५०-५२, ३ १७ ( ८१ ) च शा २ २३, सु शा ३ १३ ( ८२ ) च नि ३ १४, सु शा ३ १४-१५ ( ८३ ) सु शा ४ २४ ( ८४ ) सु सू १४ १८, -शा ४ २४ ( ८५ ) च शा ६ २३, -चि १५ १७ ( ८६ ) च शा ४ १४, सु शा ३ १८ ( ८७-८९ ) च शा ४ १४, १५ ( ९० ) च शा ४ १५, १६, सु शा ३ १८ ( ९२-९३ ) च शा ४ १५, १९, सु शा ३ १८, २०, २१ ( ९४ ) सु शा ३ १८-१९, च शा ४ १७ ( ९५ ) सु शा ३ १८, च शा ४ २० ( ९६ ) सु शा. ३ ३०, च शा ४ २१ ( ९७-१०२ ) च. शा. ४ २२-२५, सु शा ३. ३०. ( १०३-१०५ ) च. शा. ६. २२-२३. ( १०६ ) सु. शा. २ ५३ ( १०७ ) च. शा ६. २४ ( १०८ ) च. शा २ २४-२५, सु शा ३ ३४ ( १०९-१२१ ) च शा ८ २१. ( ११०-११२ ) च शा २ १८-१९ ( ११४ ) च शा २ १९ सु शा २ ३८ ( ११५ ) च शा २ २० ( ११६ ) सु शा २ ३९ ( ११७-११८ ) च शा २ ०२-२१ ( ११९-१२२ ) च शा ४ ३० ( १२३ ) च शा ४ ३१-३२ ( १२४ ) च शा. ३ १७-१९, २३, ३२ ( १२८ ) सु शा. २ ३५ ( १२९ ) च शा ८ २१ ( १३० ) च शा ४ २१, २२ ( १३१-१३२ ) च शा ८ २१ ( १३३ ) च. शा ८ २२,-सू २५ ४० ( १३५ ) च चि. ३० ५. ( १३६ ) सु शा २ ५४

शारीरस्थाने तृतीयोऽध्यायः ।

( १३८-१४८ ) च शा. ८ ३२ सु शा १०. ३, ४ ( १५० ) च. शा ८ ३३. सु शा १० ५ ( १५१ ) च शा. ८ ३४, ३५. ( १५२ ) च. शा ८ ३६ सु शा १० ६, ७. ( १५३ ) सु शा. १० ८ ( १५४ ) च शा ८ ३७ सु शा १० ८ ( १५५ ) च शा. ८ ३८ ( १५६ ) च शा ८ ३९ ( १५७-१५९ ) च शा ८ ३८ ( १६१ ) च शा ८ ३९ सु चि. १५ ६, ७ ( १६२-१६४ ) च शा ८ ४० सु शा १० ९ ( १६५ ) सु शा १० ११ ( १६६ ) च शा ८ ४१, सु शा १० २१-चि १५ १७-१८ ( १६७ ) सु नि ९ २७,-शा १० २२ ( १६९ ) च. शा ८ ४२-४७, ५०-६७ सु शा. १० १२-१५, २३-५१ ( १७० ) च शा ८ ४८-४९ सु शा १० १६-२० ( १७१-१७२ ) च. शा ८ ४९ ( १७३ ) सु शा १० १६

शारीरस्थाने चतुर्थोऽध्यायः ।

( १७६ ) सु शा १० ५७ च शा ८ २४ ( १७७ ) च. शा ८ २४ ( १७८ ) च शा ८ २४ सु शा १० ५७ ( १७९ ) सु शा १० ५७ ( १८० ) च शा ८ २३. ( १८१ ) च शा. ८ २५ ( १८२ ) १८३ ) च. शा ८, ३१, सु. शा १० ५७. ( १८४-१८५-१८६ ) च शा ८ २६ सु शा १० ५७ ( १८७ ) च शा २ १५ ( १९१ ) च शा ८. २७ ( १९६ -१९९ ) च शा ८ २८-२९ ( २०० ) सु नि ८ ३ ( २०१ ) च शा ८ ३० सु शा ८ १२ ( २०२ ) सु नि ८ ३-४ ( २०३ ) सु नि ८ ५,-चि १५ ४ ( २०४ ) सु नि ८ ६, ११ ( २०५ ) सु चि १५ १५ ( २०६ ) सु चि १५ १० ( २०७ ) सु चि १५ ५, ९ ( २०८ ) सु चि. १५ ४ ( २०९ ) च शा ८ ३१. ( २१० ) सु चि १५ ३ ( २११ ) सु चि १५ ३, ७ २९ ( २१२-२१३-२१४ ) सु चि १५ ९ ( २१५ ) सु चि १५. १२-१३ ( २१६ ) सु चि १५ १७-२८. ( २१७ ) सु चि १५ २९-३९ च चि २८ १४८-१५६. ( २१८ ) सु नि ८ १४ ( २१९ ) सु शा. १०. ५८-६२. ( २२० ) सु. शा. १०. ६३-६५

# अङ्गविभाग. पञ्चमोऽध्याय ।

## ( उपोद्घात )

सम्प्रयुते ।मॆ६ा।म्थिसिराममपरिज्ञानार्थमध्यायारम्भ । तत्राश्रयत्वादङ्गविभाग प्रथममुच्यते-च।८।ोपचारादध्या यस्य नाम।

१ प्रतिज्ञा।

२२१—अथातोऽङ्गविभाग शारीर व्याख्यास्याम । इति ह्स्माहुरात्रेयादयो महर्षय ॥ १

२ अङ्गानि प्रत्यङ्गानि च।

२२२—सकलमपि शरीमङ्गमित्युच्यते । तत्र पुन षडङ्ग शिरान्तराधिद्वा बाहू सक्थिनी च नेत्रनाभि पाणिपादादीनि त्वस्य प्रत्यङ्गानि ॥ २

२२२—अङ्ग शरारम् । तस्य षट शिर प्रभृतान्यङ्गा यवय वा । अन्तराधि —आन्तरा कटे । प्रत्यङ्गमवयवस्याप्य वयव ।नेत्रकर्णादीनि शिरस ।नाभिहृदयादीन्यन्तराध । पाणिरत्न्यादीनि बाह्वो । पादजङ्घादीनि सक्थ्नो २२२

३ महाभूतभ्याऽङ्गनिवृत्ति ।

२२३—महागुणमयम्यश्च खपवनतजोजलभूम्याख्य भ्या महाभूतभ्यश्चतनाधिष्ठितभ्याऽभिनिवृत्तिरङ्गस्य ३

२२३—तस्य चाङ्गस्य खादिभ्या महाभूतभ्याऽभिनि वृत्ति । किं भूतभ्यश्चतनेनात्मनाधिष्ठितेभ्य । तानि च किंभूतानि? महागुणमयानि। सत्वादय एव भूतभावन परिणता आत्माधिष्ठितान्च २२३

४ प्राणिना सारूप्यासारूप्यत्वस्य कारणम् ।

२२४—भूतानामव च दृष्टादृष्टविविधकर्मनानादनक रूपात्पनिवशविनापादाकृतिप्रमाणजहदीप्तिस्वरादीना सारूप्यमसारूप्य वा सूक्ष्मस्थूलतारतम्यमदभिन्नमाति बहुप्रकार निष्पद्यत ॥ ४

२२४—तत्र शरीरे तथा तषामेव महाभूताना सन्निवश विशषात प्रकृतिप्रमाणादीना सादृश्यमसादृश्य च बहुप्रकार निष्पद्यत । किंभूतात्सन्निवशविशषात्? दृष्टादृष्टनानाविध कर्मव।नानारूपात्। दृष्ट कर्म मातापितृभ्यामिहकृतमा हारादि । अदृष्टमन्यत्र मकृतम्। शरीरिणा किंभूत सारूप्य मसारूप्य चाह-सूक्ष्मादितारतम्यम भिन्नमत एव च बहु प्रकारम् २२४

५ आकाशलक्षणम्।

२२५—तत्र सत्त्वबहुलमाकाशम् ॥ ५

२२५—तत्रत्यादिना प्रत्यकमपि महाभूतस्य त्रिगुणत्व विशषकथनम् २२५

६ वायोर्लक्षणम्।

२२६—रजोबहुलो वायु ॥ ६

७ अग्निलक्षणम्।

२२७—उभयबहुलोऽग्नि ॥ ७

८ जललक्षणम्।

२२८—सत्वतमोबहुलमम्बु ॥ ८

९ पृथिव्या लक्षणम्।

२२९—तमोबहुला भू ॥ ९

१० आकाशादीना लिङ्गानि।

२३०—तेषामप्रतिघातश्चलत्वमौष्ण्य द्रवता काठिन्य मिति क्रमाल्लिङ्गानि ॥ १०

२३०—तेषा महाभूताना पञ्चाना सद्भावे अप्रतिघाता दिक्रमेण लिङ्गम् २३०

११ आकाशादीना विशेषाधिष्ठानम्।

२३१—विशेषतश्च श्रोत्रादिविशेषाधिष्ठानम् ॥ ११

२३१—इन्द्रियाणा प्रत्येक पञ्चभूतात्मकत्वेऽपि क्रमेण विशेषाधिष्ठानम्—श्रोत्रे आकाश, स्पर्शने पवन, चक्षुषि तेज, रसन जलम्, घ्राण पृथिवी २३१

१२ आकाशादीना विशेषाधिष्ठानम्।

२३२—शब्दस्पर्शरूपरसगन्धैरेकैकप्रवृद्धैरन्वय ॥ १२

२३२—तषा च महाभूताना शब्दादिभिर्गुण क्रमेणैव कैकप्रवृद्धैरन्वय तत्र शब्दगुणमाकाशम् शब्दस्पर्श गुण पवन । शब्दस्पर्शरूपगुण तेज । शब्दस्पर्श रूपरसगुण जलम् । शब्दादिपञ्चगुणा पृथिवी २३२

१३ आकाशजा भावा ।

२३३—तत्राऽऽकाशजानि-श्रोत्रं शब्द सर्वस्रोतांसि विविक्तता च ॥ १३

२३३—तत्र शरीर आकाशजानि श्रोत्रादीनि। श्रोत्रमि न्द्रियम्, तथा शब्द, आकाशभावाच्छब्दभाव, विवि क्तता शरीराणा भावाना विभाग २३३

१४ वायवीया भावा ।

२३४—वायवीयानि-स्पर्शनं स्पर्श प्रश्वासोच्छ्वासादि परिस्पन्दनानि लाघव च ॥ १४

२३४—वायवीयानि स्पर्शनादीनि। स्पर्शनमिन्द्रियम्, स्पर्शाऽस्यार्थविषय । एव रूपादीनामपि वाच्यम् २३४

१५ आग्नेया भावा ।

२३५—आग्नेयानि-दर्शनं रूप पित्तमूष्मा पक्ति संतापो मेधा वर्णो भास्तेज शौर्य च ॥ १५

२३५—आग्नेयानि दर्शनादीनि। दर्शन चक्षुरिन्द्रियम्, पित्त दोष, ऊष्मा अग्नि, पक्तिस्तत्क्रिया, भा कान्ति, तेज प्रसिद्धम् २३५

१ स्याम । सङ्ग-क ख २ ततश्च पु-क ग ३ निवृत्ति । भू-क ख ४ द स्रोता-ख ५ ज शौर्य औ आ-क

१६ आम्भसा भावा ।

**२३६—आम्भसानि-रसनं रस स्वेदक्लेदवसाऽसृक्-शुक्रमूत्रादिद्रवसमूहः शैत्यं स्नेहश्च ॥ १६**

२३६-**आम्भसानि** देहे रसनादय । एको रसशब्दो रसविषयत्वज्ञापनार्थ. । द्वितीयो धातुविशेषग्रहणार्थ २३६

१७ पार्थिवा भाव ।

**२३७-पार्थिवानि-घ्राण गन्धः केशनखास्थ्यादिमूर्त-समूहो धैर्यं स्थैर्यं च ॥ १७**

२३७-**पार्थिवानि** घ्राणादीनि । इति देहे महाभूत-काये चेतनश्चाप्यायात्यवहितमनसापि परीक्ष्यमाणो न किंचिल्लभ्यते २३७

१८ मातृजा अवयवा ।

**२३८-तेषु मातृजानि मृदूनि त्वग्रक्तमांसमेदोमज्जना-भिहृदयामाशयगर्भाशययकृत्प्लीहाक्लोमान्त्रगुदादीनि १८**

२३८ **मातृजानीति**-तेषु च महाभूतकायेषु मध्ये किञ्चिद्गर्भस्य मातृजम्, किञ्चित् पितृजम्, किञ्चिच्चेतन-जम् । चेतन आत्मा, तत सक्रान्तमित्यर्थ । त्वगादीन्यन्या-नि च मृदूनि गर्भस्य मातृजानि विधात् । गर्भाशय. स्त्री-गर्भस्यैव २३८

१९ पितृजा अवयवा ।

**२३९-पितृजानि स्थिराणि केशनखास्थिशुक्रसिरा-स्नाय्वादीनि ॥ १९**

२३९-केशादीन्यन्यानि च स्थिराणि **पितृजानि** २३९

२० आत्मजा भावा. ।

**२४०-आत्मजानि नानायोनिषूत्पत्तिर्मनश्चेतनेन्द्रि-याणि प्राणापानौ धारणमाकृतिस्वरवर्णविशेषाः काम-क्रोधलोभभयहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रय त्नाहंकारसुखदु.खायुरात्मज्ञानानि च ॥ २०**

२४०-**आत्मजानि**-पुनर्नानाविधयोन्युत्पत्त्यादीनि । आ-त्मना ह्यवदातानवदातकर्मकारणभूतेन योनिषु मृगसरी-सृपादिषूत्पद्यते, अत सत्कारेण नि श्रेयसाय । तथा मन आत्मजम् । तद्धि न कुतश्चिदागच्छत्यात्मना नित्यसबन्धि-त्वात् । इन्द्रियाणि त्वात्मकृतान्येव । **चेतनेन्द्रियाणि** पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि । **प्राणापानौ** चात्मजो । ताभ्या-मेव ह्यात्मकारणाभ्या जीव्यते । साधारणमवयवाना धारण-मुत्साहेन देहावष्टम्भ । आकृत्यादीना नानाविधा विशेषा । **आकृति.** सस्थानम् । तस्या हि भूतानि समवायिकारणम् । आत्मा त्वसमवायिकारणम् । कामादय सर्व एव विज्ञानधर्मा आत्मभवा । तथा सुखादयोऽप्यात्मन कर्मफलत्वात् २४०

२१ सात्म्यजा भावा ।

**२४१ —सात्म्यजान्यायुरारोग्यमनालस्यालोलुपत्व-मिन्द्रियप्रसादस्वरवर्णौजःसंपत्प्रशस्तताप्रहर्षभूयस्त्व मे-धाबलं च ॥ २१**

२४१ **सात्मजानि**-यानि देहिनो गर्भात्प्रभृति सात्म्य सेविन एव भवन्ति । स्वरादीना सपत्परिपूर्णत्वम् । प्रशस्तता प्रशस्यत्वम् २४१

२२ रसजा भावा ।

**२४२ रसजानि-कृत्स्नस्य देहस्य संभवो वृत्तिर्वृद्धि-स्तृप्तिरलौल्य पुष्टिरुत्साहश्च ॥ २२**

२४२ **रसजानि**-यानि रसेभ्य परिणतेभ्य सपद्यन्ते । देहस्य सभवो मातृजठरे । वृत्तिर्वृद्धिस्तत्रैव । जातस्य च ॥ २४२

२३ शुद्धसत्त्वजा भावा ।

**२४३-शुद्धसत्त्वजानि-शौचमास्तिकत्वं, कृतज्ञता, दाक्षिण्य,व्यवसाय., शौर्य, गाम्भीर्यं,बुद्धिर्मेधा,स्मृतिः, शुक्लवर्त्म रुचिर्भक्तिरभिषङ्गाभावस्तमोगुणविपर्ययश्च ॥**

२४३-**शुद्धसत्त्वजानि**-यानि च वस्तूनि रजस्तमोभ्या-मनुपहतेन शुद्धेन सत्त्वेन भवन्ति । अस्ति परलोक इति विज्ञान यस्यासावास्तिकस्तस्य भाव **आस्तिकत्वम्** । **बुद्धि-**ग्रहणशक्ति । **मेधा** प्रज्ञा । **भक्ति**र्देवतादिविषये । **अभिषङ्ग** सपरित्यागाशक्तता तस्याभाव ,क्रोधाद्यनभिभव इति यावत् । तमोगुणाना वक्ष्यमाणानामज्ञानविषादादीना वैपरीत्यमिति सत्त्वजानि २४३

२४ राजसा भावा ।

**२४४-राजसानि-दुरुपचारतानार्यं शौर्यं, मात्सर्यम-मितभाषित्वमहङ्कारो, लोलुपत्वं, दम्भो, मानः, क्रोधो, हर्षः, कामश्च ॥ २४**

२४४-**राजसानि**-तामसानि च रजस्तमोभ्यामुपहतेन सत्त्वेनैव भवन्ति । **दुरुपचारः** यस्य परिचारकादिभिर्दुःखेन चित्त ग्रहीतु पार्यते तस्य भाव । अनार्य शौर्यम्, विषयका-लादिना अनुचितम् । उचित शौर्य सात्त्विकत्वमेव । लोलुपो विषयकौतुकी तस्य भाव २२४

२५ तामसा भावा ।

**२४५ तामसान्यज्ञान, विषाद., प्रमादो, निद्राऽऽ-लस्यं, क्षुत्, तृष्णा, शोका, मात्सर्य, विप्रतिपत्तिः, परा-तिसन्धानं, सत्त्वगुणवैपरीत्य च ॥ २५**

२४५-अज्ञानादीनि **तामसानि, अज्ञान** मिथ्याज्ञानम् । **विप्रतिपत्ति**र्विरोधोऽन्येन । **परातिसन्धान** परपक्षप्रतिबन्ध । सत्त्वजाना शौचास्तिकत्वादीना वैपरीत्यम् २४५

२६ मनस सत्त्वापरपर्यायस्योपप्लवौ ।

**२४६-तत्र सत्त्व मनस्तस्योपप्लवो रजस्तमश्च ॥ २६**

२४६-**सत्त्वं** किमुच्यत इत्याह-**तत्रेत्यादि** । सत्त्व, मन , इति पर्यायौ । तस्य सत्त्वस्य रजस्तमश्चोपप्लवो २४६

२७ देहस्य भूतात्मकता ।

**२४७-इत्येव भूतात्मक देहमाहु. ॥ २७**

२४७-इत्यनेन प्रकारेण पृथिव्यादिविकारसमुदायात्मक देहमाहुर**ाचार्या** । तेनैतत् स्थितमस्मिन्दर्शने-आत्मा

६ 'सारसासृ°-क ख ७ °मूह शैथिल्य स्ने°-ख ८ °र्य गौरवं च । ते°-क ख ९ °जानि तासु तासु योनि°-ख. १० °नालस्यमलो°-क. ११ °स्वर्णबीजोज.स°-क. ख. १२ 'क्तधर्मस्°-क. ख. १३ °क्तिरनभिष्वङ्गस्तमो°-क. ख. १४ °रारिस°-क. °राभिस-ख.

नित्य, अविकार न जायते न च विनश्यति। सत्त्वादिसंयोगात्तु जातादि यप श लभते । संयोगश्च तस्याविद्यास्वभावकृत । अविद्याक्षय।ध्यवलीन संयोगे शुद्ध सन् मुक्त इत्युच्यते । एतेन ह्य वयिना कर्त्रा विना वालत्वादीना स्मृत्या नि पञ्चाभिसन्धानेन कार्यप्रवृत्ते देहादिकाय च संभव । स च स्वतन्त्रोऽध्यात्मनैव तत् कर्म करोति। यस्य बन्धो वा मोक्षो वा फलमश्नुत । तस्य च स्वकर्म। एव करणात् कारणात् संयोगतद्विनाशौ बन्धमोक्षौ । न ह्यात्मना कर्त्रा विना शरीरस्य संभव । तथाच भगवान् चरक —

"मृद् दण्डचक्रैश्च कृत कुम्भकाराद्दृत घटम् ।
कृत मृत्त्रणकाष्ठैश्च गृहकाराद्विना गृहम् ॥
यो वदेत् स वदेद्देह संभूय करणै कृतम् ' इति ।

तस्मादात्मा चेतन कार।।नित्य । अचेतनानि तु महाभूतानि अनित्यानि प्रतिक्षणप्रध्वंसीनि । तेषा हि नित्यत्व भावाना वृध्याद्यसंभव । न हि तदेव वस्तु तथा चान्यथा च भवितुमर्हति। इष्टत्व च। तस्मादनित्यानि भूतानि। तद धिष्ठितानि पुरुषाख्या लभ ते । एवमा मनोऽनादि मनाग पुरुषसंयोगिभिर या धर्मापक्षेभवति । तस्मात् सितमेव भूतात्मक देहमाहुरिति २४७

टिप्पणी—टीकाया तथा च भगवाञ्चरक इति—शा १ ४३–४४ इत्यत्रेति शेष ।

२८ देहस्य प्रविभाग ।

**२४८–तस्य पुन प्रविभाग —त्वच कला दोषा धातवो मला बुद्धीन्द्रियाणि तदधिष्ठितानि कर्मेन्द्रियाण्यतीन्द्रियमाशया प्राणायतनानि कण्डराजालानि कूर्चा रज्जव सीव न्योऽस्थिसंघाता, सीमन्ता अस्थी यस्थिसंचय स्नायूनि पश्य सिरा धम य स्मातास्यूष्माणा ममाणि केशश्मश्रुलोमानि प्रकृतिविकृतिभेदाश्च ॥ २८**

२४८–स च देहस्त्वगादिभिरपा।ङ्गै । प्रविभज्यते। सुबोधम् २४८

२९ त्वचोलक्षण संख्या च ।

**२४९–तत्राऽसृज पच्यमानस्य क्षीरस्येव सन्तानिका षट् त्वचा भवन्ति ॥ २९**

२४९–तत्र देहे षट् त्वचा रक्तात्स्वोष्मणा पच्यमानात्क्षीरजालिकावत् भवन्ति । तास्तु कल्लादलवद् तरङ तर क्रमण वर्तन्ते २४९

३० त्वचप्रमा लम ।

**२५०–त्वक्प्रसादाद्रक्तस्य प्रसाद ॥ ३०**

२५०–तासा त्वचा प्रसादाद्रक्तस्य प्रसाद । त्वचो हि रक्तस्य प्रसन्नता नयन्ति। धनाभावाद्याल्पीभावादान्नाच्च २५

३१ उदकधरा त्वक् (१)

**२५१–तासामुदकधरा चाद्या ॥ ३१**

२५१–तासा प्रथमा देह उदक बिभर्ति यन बहिर्नश्र्वा भाव २५१

३२ असृग्धरा त्वक् (२)

**२५२–द्वितीयाऽसृग्धरा ३२**

२५२–द्वितीयया रुद्ध तसृम् । तेन रक्त न बहि स्यन्दत माऽसृग्धरा नाम, इत्यादि सुबोधम् २५२

३३ सिध्मकिलासाधिष्ठाना त्वक् (३)

**२५३–तृतीया सिध्मकिलासाधिष्ठाना ॥ ३३**

२५३–यदाश्रित्य यस्य भावस्तत्तस्य तदधिष्ठानम् । सिध्म कुष्ठविशेष, किलास श्वित्रम् २५३

३४ सर्वकुष्ठाधिष्ठाना त्वक् (४)

**२ ४–चतुर्थी सर्वकुष्ठाधिष्ठाना ॥ ३४**

३५ अलजीविद्रध्यधिष्ठाना त्वक् (५)

**२५ –पञ्चमी पुनरलजीविद्रध्यधिष्ठाना ॥ ३५**

३६ प्राणधरा त्वक् (६)

**२५६–षष्ठी तु प्राणधरा । यस्या छिन्नाया ताम्यत्यन्धमिव च तम प्रविशति याचाधिष्ठायारु पि जायन्ते, पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि ॥ ३६**

२५४–षष्ठी सर्वासाम तमास्त्वक्। मा प्रा ।।न तत्त्वरु ध्याऽवतत्यावतिष्ठति। तदधिष्ठानानि हि विशेष । कृष्ण रक्तान्यरूपि २५६

३७ मता तरण मतत्वचाप याम (७)

**२५७–अ प सप्त त्वचो वदन्ति ३७**

३८ भासिनी त्वक् (१)

**२५८–तत्र प्रथमा भासिनी नाम या वर्णानामवभासिनी छादीनाच पञ्चाना छायानासा व्रीहिरष्टादशभागप्रमा ॥ ॥ ३८**

२५८–त्य त्वाचाया भासि यानि भन्न सप्तमशारत्वचा वर्तति। सुबोधम् । पञ्च छाया वक्ष्यमाणा २५८

३९ लोहिनी त्वक् (२)

**२५९–द्वितीया लोहिनी नाम षोडशभागप्रमाणा ३९**

४० श्वेता त्वक् (३)

**२६०–तृतीया श्वेता नाम द्वादशभागप्रमाणा ॥ ४०**

४१ ताम्रा त्वक् (४)

**२६१–चतुर्थी ताम्रा नामाऽष्टभागप्रमाणा ॥ ४१**

४२ वेदिनी त्वक् (५)

**२६२–पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा ॥ ४२**

४३ रोहिणी त्वक् (६)

**२६३–षष्ठी रोहिणी नाम व्रीहिप्रमा ।। ॥ ४३**

१५ *तदधिष्ठानानि कम –ग १६ चा रज्जुकमव –क १७ धय स्नावानि प –क १८ य तुम –ग १९ माव भासि –व स

४४ मांसधरा त्वक् (७)

**२६४-सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा ४४**

४५ कलालक्षणम् ।

**२६५-यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते स यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुसारशेषो रसशेषोऽल्पत्वात् कलासंज्ञः ॥४५**

२६५-उक्तास्त्वचः कला उच्यन्ते यस्त्वित्यादि । धातूनां रक्तादीनामाशया यानि स्रोतांसि तेषां द्वयोर्धात्वाशयोर्मध्ये यः क्लेदः स स्वेन स्वेन धातूष्मणा पक्वः श्लेष्मादिच्छन्नः सन् कलाख्यां लभते,काष्ठसारवत् । यथा काष्ठान्तः सारो विभज्यते तथा शरीरे कला । ताश्च स्वस्थानमजहत्य शरीरं व्याप्नुवन्ति । स तु क्लेदो धातुसारशेषो न पूर्ववातुतां नाप्युत्तरधातुतां प्राप्नोत्यतः स्वल्पत्वात् कलासंज्ञः २६५

४६ कलानां संख्या ।

**२६६-ता धात्वाशयान्तरमर्यादाः सप्त कलाः ॥ ४६**

२६६-आसां तु क्रमो धातुक्रमसम्भवविशेषात् । विशिष्टकार्यता तु स्वभावात् । तथाहि—२६६

४७ मांसधराकला (१)

**२६७-तासां प्रथमा मांसधरा नाम, यस्यां मांसे सिरास्नायुधमनीस्रोतसां भूमाविव पङ्कोदकेन बिसमृणालानां प्रतानानि भवन्ति ॥ ४७**

२६७-प्रथमा रसविशेषजापि **मांसधारा** । यस्या भूम्यामिवाधिष्ठाय मांसे कर्दमसदृशे सिरादीनां प्रतानानि मृणालप्रख्यानि भवन्ति २६७

४८ रक्तधरा कला (२)

**२६८-द्वितीया रक्तधरा नाम, मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च सिराप्लीहयकृत्सु भवति । मांसाच्च क्षतात् क्षतजं वृक्षादिव क्षीरिणः क्षीरं प्रवर्तते ॥ ४८**

२६८-द्वितीयायां शोणितं भवति विशेषतो यकृदादिष्वेव तस्यां कलायां शोणितं भवति प्रभावाच्च मांसात् क्षतात् बहिः शोणितं प्रवर्तते । न हि तया विना मांसे रक्तं भवति दृष्टान्तः स्फुटप्रतिपत्त्यर्थं २६८

४९ मेदोधरा कला । (३)

**२६९-तृतीया मेदोधरा नाम, मेदो हि तस्यामुदरेऽण्वस्थिषु च सरक्तं भवति । तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्यं च स्थूलास्थिषु च मज्जा ॥ ४९**

२६९-तृतीयायां मेदः कर्तृ सरक्तं भवत्युदरेऽण्वस्थिषु तामेवाश्रित्य मेदो मस्तुलुङ्गत्वं याति मज्जत्वं याति २६९

५० श्लेष्मधरा कला (४)

**२७०—चतुर्थी श्लेष्मधरा नाम, तत्स्थेन हि श्लेष्मणाऽऽश्लेषिताः सर्वसन्धयो दृढा भवन्ति सोपाङ्गा इवाक्षा ॥५०**

२७० सुबोधम् । अक्षाश्चक्रनाभयः सोपाङ्गाः मान्याङ्गाः २७०

५१ पुरीषधरा कला (५)

**२७१—पञ्चमी पुरीषधरा नाम, सा ह्यन्त्रामपक्वाशयाश्रिता कोष्ठान्तरुण्डुकस्थं मलं विभजति ॥ ५१**

२७१—उण्डुकः पुरीषाधारः २७१

५२ पित्तधरा कला (ग्रहणी) (६)

**२७२-षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था, सा ह्यन्तरग्नेरधिष्ठानतयाऽऽमाशयात्पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयति, पचति, पक्वं च विमुञ्चति । दोषाधिष्ठिता तु दौर्बल्यादाममेव । ततोऽसावन्नस्य ग्रहणात्पुनर्ग्रहणीसंज्ञा । बलं च तस्याः पित्तमेवाग्न्यभिधानमतः सोऽग्निनोपबृंहितैकयोगक्षेमा शरीरं वर्तयति ॥५२**

२७२-षष्ठी पक्वामाशययोर्मध्ये स्थिता आमाशयात् पक्वाशयोन्मुखमन्नं बलेन विधार्य पचति पित्ततेजसा करणभूतेन । सैव वातादिदोषाधिष्ठानेन दौर्बल्यादाममेव विमुञ्चति । यदेवाग्नेर्धारणं तदेव तस्या उपस्तम्भनम् । यदेवाग्नेरुपबृंहणं तदेवास्या उपबृंहणमित्येकयोगक्षेमा. २७२

५३ शुक्रधरा कला (७)

**२७३ सप्तमी शुक्रधरा नाम द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्याधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्तयति ॥ ५३**

२७३-सप्तमी बस्तिद्वारस्य द्व्यङ्गुलमतिक्रम्य दक्षिणे पार्श्वे मूत्रमार्गमाश्रित्य वर्तते २७३

५४ दोषधातुमलाः ।

**२७४-दोषा धातवो मलाश्च प्रागुदिताः ॥५४**

२७४—दोषादयः प्राक् सूत्रस्थाने उक्ताः २७४

**टिप्पणी**-प्रागुदिता इति-अ. स. सू. १९

५५ बुद्धीन्द्रियाणि ।

**२७५-पञ्च बुद्धीन्द्रियाणि-श्रोत्र, स्पर्शन, दर्शन, रसन घ्राणं च ॥ ५५**

२७५-श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि २७५

५६ बुद्धीन्द्रियाणां विषयाः ।

**२७६ तेषां[22] सभागतया क्रमाद्विषयाः शब्दस्पर्शरूपरसगन्धाः ॥५६**

२७६ तेषामिन्द्रियाणां सभागतया इन्द्रियस्य विशेषेण कृताधिक्यकारणत्वेन सादृश्यात् । यथा चक्षुस्तैजसं तैजसमेव रूपं गृह्णाति । श्रोत्रं नाभसं शब्दोऽपि नाभसः २७६

५७ बुद्धीन्द्रियाणामधिष्ठानानि ।

**२७७—पञ्च बुद्धीन्द्रियाधिष्ठानानि-कर्णौ त्वगक्षिणी जिह्वा नासिके च ॥ ५७**

२७७-इन्द्रियाधिष्ठानानि शरीरावयवाः २७७

२० °ष्ठते यथास्व°-ख २१ °तुसार रस-क °ख २२ °तानां भ°-ख २३ °दरेष्वस्थि°-क २४ °पु तु म°-क ख २५ °न्तरग्न्यधि°-क. ख. २६ °षयन्ती प°-क. ख. २७ °ग्निनोपस्तब्धो प°-क. ख. २८ °रस्य चाधो मू°-क. २९ °षां सभा°-क.

# સપ્તાશયાદિકોષ્ઠાંગાનિ ।



# કફાશયગર્ભાશયૌ નેત્રં ચ

કફાશય

૧ શ્વાસનાડી

ફુપ્ફુસ ૨

ફુપ્ફુસ






पटलानि भवन्ति । बाह्यमित्यादिना पटलाना क्रम । तत्र च यद्बाह्य पटल तदूर्ध्वाधोभेदेन द्वे वर्त्मनी । अन्यद्भसी चाश्रितम्। ताभ्या तदाप्याश्रितम्। एव सर्वत्र वाच्यम। दृष्टिमण्डलस्य यावती विस्तीर्णता तस्या पञ्चमेन भागेन पटलाना घनत्वम् २९४

७५ चतस्रो बन्धनरज्जव ।

**२९५-बन्धनगुणास्तु चत्वारः सिराकण्डरामेदः-कफात्मकाः ॥ ७५**

२९५-सिरादिमयाश्चत्वारो देहबन्धनरज्जव । याभिर्महामन्धयो बध्यन्ते । तेषा सिराद्यनन्यतमत्वान्नाधिकानिर्देश । सुबोधम् २९५

७६ सर्वसंधिबधने श्लेष्मण एव सामर्थ्यम् ।

**२९६-श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्तं प्राक् ७६**

टिप्पणी-प्रागिति-अ स सू १९

७७ शाखाश्मदृष्टान्तेन नेत्रतेजस कर्मण्यता ।

**२९७-नेत्राश्रित तु तेजो बाह्यतेजसा स्वयोनिना योगाच्छन्नमिवाश्मना कर्मण्य भवति । अतियोगादुपहन्यते ॥ ७७**

७८ वैद्युतवडवामुखदृष्टान्तेन नेत्रतेजस तेजस्त्वहानिरिति प्रतिपादनम् ।

**२९८-तच्च वैद्युतवद् वडवामुखवच्चाम्भोमध्यगमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति ॥ ७८**

७९ जिव्हाया उत्पत्ति ।

**२९९ मांसासृक्कफप्रसादात्तु जिह्वा जायते ॥ ७९**

८० वृषणोत्पत्ति. ।

**३००-मांसासृक्कफमेद[३५]प्रसादाद् वृषणाविति ॥ ८०**

३००-जिह्वावृषणयोरिन्द्रियाधारेष्वनुप्रवेश ३००

८१ दश प्राणायतनानि ।

**३०१-दश प्राणायतनानि मूर्धा जिह्वाबन्धनं कण्ठो हृदय नाभिर्बस्तिर्गुद. शुक्रमोजो[३६] रक्त च ॥ ८१**

३०१-प्राणानामायतनानि स्थानानि मूर्धादीनि आद्यानि सप्त गुदान्तानि महामर्माख्यानि कण्ठो जिह्वाबन्धनस्याध सुबोधम् ३०१

८२ सप्त महामर्माणि ।

**३०२-तेषामाद्यानि सप्त पुनर्महामर्मसंज्ञानि ॥ ८२**

८३ षोडशकण्डरा , तेषा स्थानानि च ।

**३०३-षोडश कण्डराः । तासां द्वे द्वे करचरणेषु । चतस्र. पृथग्ग्रीवापृष्ठयो. ॥ ८३**

३०३-षोडशेत्यादि । द्वे द्वे इति चतुर्षु करचरणेष्वष्टौ पृथगिति ग्रीवाया चतस्र । पृष्ठवशे चतस्र इति पूर्वाभि षोडशकण्डरा मासरज्जुप्राया. ३०३

८४ षोडश जालकानि तेषा स्थानानि च ।

**३०४-षोडश जालानि, तेषां मांससिरास्नाय्वस्थिजानि । चत्वार्येकैकत्र गुल्फे मणिबन्धे च परस्परगवाक्षि[३७]तानि तानि स्थितानि ॥ ८४**

३०४-एकैकत्रेति प्रत्येक चतुर्षु गुल्फमणिबन्धेषु चत्वारि मासादिजानि जालकादीनि षोडश ३०४

८५ षट् कूर्चास्तेषा स्थानानि च ।

**३०५-षट् कूर्चा हस्तपादग्रीवामेढ्रेषु ॥ ८५**

३०५-चत्वारो हस्तपादे प्रत्येकमेको ग्रीवायामेको मेढ्रे चेति षट् कूर्चा कूर्चाकृतय स्नाय्वादिविशेषा ३०५

८६ चतस्रो मासरज्जवस्तेषा स्थानानि च ।

**३०६-चतस्रो मांसरज्जव. पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं तासां द्वे बाह्ये । द्वे चाभ्यन्तरास्थिते ॥ ८६**

३०६-पृष्ठवशस्यैकस्मिन् पार्श्वे त्वग्भाग एका तद्वद्द्वितीये पार्श्वे द्वे चाभ्यन्तर इति चतस्रो मासरज्जव ३०६

८७ सप्त सीवन्यस्तेषा स्थानानि च ।

**३०७-सप्त सीवन्य । ता. पञ्च शिरसि जिह्वामेहनयोरेकैका । परिहार्याश्च शस्त्रेण ॥ ८७**

३०७-शिरसि द्वे ग्रीवावाश्रित्य प्रवृत्ते द्वे कृकाटिके एका. उपरि ऋज्वी इति पञ्च । द्वे जिह्वामेढ्रयोरिति सप्त सीवन्य शस्त्रेण परिहार्या ३०७

८८ चतुर्दशास्थिसघातास्तेषा स्थानानि च ।

**३०८-चतुर्दशास्थिसंघाता. । तेषामेकैको गुल्फजानुवङ्क्षणमणिबन्धकूर्परकक्षयासु त्रिकशिरसोश्च ॥ ८८**

३०८-गुल्फादिमणिबन्धादित्रयभेदेन प्रत्येक शाखाया त्रय इति द्वादश । त्रिके शिरसि चेकैक इत्यस्थिसघाताश्चतुर्दश ३०८

८९ सीमन्तास्तेषा स्थानानि च ।

**३०९- तद्वत् सीमन्ता., ते तु पञ्चशिरसीत्यष्टादश ८९**

३०९-तद्वदस्थिसघातवत् गुल्फादिषु त्रिके चैकैक पञ्च शिरसीत्यष्टादश सीमन्ता. । सीमन्ता सीवन्यश्च बहिस्त्वच. शिरसि न दृश्यन्ते ३०९

९० अस्थीनि तेषा स्थानानि च ।

**३१०-त्रीणि षष्ट्याऽधिकान्यस्थिशतानि। तेषां[३९] च चत्वारिंशच्छतं शाखासु, सविंशं[४०] शतमन्तराधौ शतमूर्ध्वमिति ॥ ९०**

३१०-अस्थ्ना शतानि त्रीणि षष्ट्याधिकानि ३१०

९१ शाखास्थीनि ।

**३११-तत्रैकैकस्मिन् सक्थ्नि पञ्च पादनखाः प्रत्येकमंगुल्यां त्रीण्यस्थीनि तानि पञ्चदश। पञ्च पादशलाका. । तत्प्रतिबन्धकमेकम्। द्वे द्वे कूर्चगुल्फजंघास्वेकैकं पार्ष्णिजानूरुषु सर्वाणि च नखास्थ्यादीनि सक्थिवद् बाह्वोश्च ॥ ९१**

---

३५ °द कलाप्रम°-क ३६ °जो रक्तम् । ते°-क ख ३७ °क्षितानि स्थि°-ख ३८ °प्रसेव°-क. ३९ तेषां चत्वा°-क. ख. ४० °सु विश ग°-क ४१ °तमूर्धनीति । त°-ख

# अस्थिकंकालम् ।



पुर कपालम्
नासास्थि
गण्डास्थि
हॅन्वस्थि
प्रकोष्ठास्थिनी
प्रगण्डास्थि
पर्शुका
पर्शुका
श्रोणिफलके (च)
भगास्थि
जानुकपालिके
पार्ष्ण्यस्थि
पार्श्वकपालम्
पश्चाद्कपालम्
शरवास्थि
पृष्ठवंशास्थीनि ग्रीवायाम्
अंसफलकम्
पृष्ठवंशास्थीनि (पृष्ठे)
पृष्ठवंशास्थीनि (कट्याम्)
त्रिकास्थि
गुदास्थि (सु)
ऊर्वस्थिनी
जंघास्थिनी
गुल्फे
पादशलाका
पादांगुल्यस्थीनि

# अस्थिकंकालम् ।

(पुरतो दृष्टम्)



## वक्षःपंजरः पृष्ठवंशश्च ।






वक्ष.पंजरः ।

# अस्थिसंधयः


ग्रीवायाम्
१
२
३
४
५
६
७
पृष्ठवंशे
१
२
३
४
५
६
७
८
९
१०
११
१२
१३
१४
१५
१६
१७
प्रतर-संधयः २५
(पृष्ठवंशो वामपार्श्वतो दृष्टः)




कंठनाडी
मंडल-संधयः

# अस्थिसंधयः



कोरसंधिः
(वामकूर्परं पुरतो दृष्टः)



वायसतुण्डसंधिः
(वामहनोरभ्यन्तरतो दृष्टः)



सामुद्गसंधिः
( स्त्रीश्रोण्यां पुरतो दृष्टः )

# अस्थिसंधयः

[ एतत्सीमन्तचिह्नं मर्मस्वपि विज्ञेयम्। ]






## स्त्रियाः कटीरं समूलो दंतश्च




दन्तः



१०२ शाखागताः स्नायवः ।

**३२२–तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं षट् षट्, तानि त्रिंशत् । दश दश पादतल-कूर्च-गुल्फेषु । त्रिंशज्जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे ॥ १०२**

३२२–तथा चैकस्मिन् सक्थ्नि पञ्च पादाङ्गुलीषु प्रत्येकं षट् एवमङ्गुलीषु त्रिंशत् । पादतलादिषु त्रिषु दश दश । एवं त्रिंशदेकीकृत्य षष्टिः । त्रिंशद्दशचत्वारिंशद्दश शतं सार्धं शतम् । बाहावङ्गुलीकरतलकूर्चमणिबन्धनप्रकोष्ठकूर्परप्रकाण्डकक्ष्यासु क्रमेणोक्तावयववद्विज्ञेयम् ३२२

१०३ अन्तराधिगताः स्नायवः ।

**३२३–चत्वारिंशत् कट्याम् । विंशतिर्मुष्कमेढ्रबस्त्यन्त्रेषु । अशीतिः पृष्ठे । षष्टिः पार्श्वयोः । अष्टादशोरसि । चत्वार्यक्षकयोः । अष्टावंसयोः ॥ १०३**

३२३–अन्तराधौ चत्वारिंशद्विंशतिरशीतिः षष्टिरष्टादश-चत्वार्यष्टाविति त्रिंशदधिकान्यष्टौ शतानि भवन्ति । मुष्कादिषु चतुर्षु च विंशतिः साधारणानि । अक्षकयोर्द्वे । अंसयोश्चत्वारि चत्वारि ३२३

१०४ मूर्धगताः स्नायवः ।

**३२४–द्वे द्वे मन्यावटुनेत्रौष्ठतालुषु । त्रिंशद् ग्रीवायाम् । त्रीणि जत्रुणि । चत्वारि हन्वोः । पञ्च जिह्वायाम् । द्वादशोत्तराधरेषु दन्तमांसेषु । षण्मूर्धनि ॥ १०४**

३२४–शिरस्युच्यते । द्वे मन्ययोः । अवटौ द्वे नेत्रयोर्द्वे । ओष्ठयोर्द्वे तालुनि द्वे इति दश । त्रिंशत् त्रीणि चत्वारि पञ्च द्वादश षडिति मूर्धनि । अक्षकसन्निधौ जत्रु । हन्वोर्द्वे द्वे । उत्तराधरेषु दन्तमांसेषु षट् षडिति स्नाव्नां नव शतानि । अवटुः कृकाटिका ३२४

१०५ स्नायूनां चातुर्विध्यम् ।

**३२५–तत्र शाखासु सन्धिषु च प्रतानवन्ति । महास्नावानि तु वृत्तानि, तानि कण्डरासंज्ञानि । बस्त्यामपक्वाशयान्त्रेषु सुषिराणि । पार्श्वपृष्ठोरःशिरस्सु पृथूनि ॥ १०५**

३२५–तत्रेत्यादिना तेषामाकारविशेषेणाकारविशेषा उच्यन्ते । प्रतानवन्त्यनेकप्रकाराणि । तेष्वेव स्नाव्नां वृत्तानां महतां च कण्डरासंज्ञा । सुगमम् ३२५

१०६ स्नायूनां रक्षणस्य प्रयोजनम् ।

**३२६ स्नावबन्धनैर्हि सन्धिषु सुबद्धा तनुर्नौरिव सम्यग्वहते । तस्मादस्थिसिरादिभ्योऽपि तानि यत्नतो रक्षेत् ॥ १०६**

३२६–एतैर्हि स्नावनिबन्धनैस्तनुः सन्धिप्रदेशेष्ववबद्धा सती सम्यग्वहते साधु कृत्वा चेष्टते । यथा नौः सन्धिषु प्रतिबद्धा सती सम्यग्वहते । ततो हेतोस्तानि स्नावानि यत्नतो रक्षेदस्थ्यादिभ्योऽपि ३२६

१०७ गूढशल्योद्धरणे स्नायूनां सम्यग्ज्ञानस्यावश्यकत्वम् ।

**३२७–यश्च स्नावानि बाह्यान्यभ्यन्तराणि च सम्यग् जानाति स गूढमपि शल्यमाहर्तुं समर्थो भवति ॥ १०७**

३२७–सुगमम् । स्नावशब्दे चात्रार्षप्रयोगो वक्तव्यः ३२७

१०८ पेशीसंख्या तासां स्थानानि च ।

**३२८–पञ्च पेशीशतानि । तासां चत्वारि शतानि शाखासु । षष्टिरन्तराधौ । चत्वारिंशदूर्ध्वम् ॥ १०८**

३२८–अथ पेश्य ३२८

१०९ शाखागताः पेश्यः ।

**३२९–तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं तिस्रः । ताः पञ्चदश । दश दश प्रपदे पादतले गुल्फे च । तथा पादस्योपरि कूर्चे सन्निविष्टाः । विंशतिर्जङ्घायाम् । पञ्च जानुनि । विंशतिरूरौ ॥ १०९**

३२९–अङ्गुलीषु पञ्चदश । प्रपदे पादतलस्याग्रभागे दश । तथा पादतले दश । गुल्फे दश । पादस्योपरि दश । ताश्च कूर्चनाम्नि मर्मणि सन्निविष्टाः । विंशतिर्जङ्घायाम् । जानुनि पञ्च । ऊरौ विंशतिरिति शतं सक्थ्नि तत् । तद्वत्तिसृषु शेषासु शाखासु ३२९

११० अन्तराधिगताः पेश्यः ।

**३३०–एकैका मेढ्रसेवन्योः । द्वे वृषणयोः । दश स्फिजोः । तिस्रो गुदे, तास्तु वलीसंज्ञाः । द्वे बस्तिशिरसि । चतस्र उदरे । नाभ्यामेका । द्वे हृदयामाशये च । षट् यकृत्प्लीहोण्डुकेषु । पृष्ठे पञ्चोर्ध्वसन्निविष्टाः । दश दीर्घाः पार्श्वयोः । दश वक्षसि । तिस्रोंऽसाक्षकोपरितः ॥ ११०**

३३०–अन्तराधौ तु–एका मेढ्रे । एका सेवन्याम् । द्वे । दश । गुदे तिस्रो वलीसंज्ञाः । द्वे । चतस्रः । एका । द्वे हृदयामाशये च साधारणम् । यकृदादिषु त्रिषु षट् । पृष्ठे पञ्च । तास्तु ऊर्ध्वं शिरस्सन्निविष्टाः । दश । दश । असाक्षकोपरितस्तिस्र इत्यन्तराधौ षष्टिः । पूर्वैः सह षष्ट्यधिकानि चत्वारि शतानि भवन्ति ३३०

१११ मूर्धगताः पेश्यः ।

**३३१–दश ग्रीवायाम् । अष्टौ गण्डयोः । अष्टौ हन्वोः । एकैका गलकाकलजिह्वामूर्धसु । द्वे द्वे तालुललाटयोः । नासौष्ठकर्णेषु च ॥ १११**

३३१–ऊर्ध्वाद् उच्यते–दशाष्टावष्टावेकैकैकैका द्वे द्वे द्वे द्वे इति चत्वारिंशत् । काकलं कण्ठमध्यम् । काकलस्याधो नालम् । मूर्धा शिरः । नासाया द्वे । ओष्ठयोः कर्णयोश्च प्रत्येकमेका । इति पुंसां पञ्च पेशीशतानि ३३१

११२ स्त्रीणामधिकाः पेश्यस्तासां स्थानानि च ।

**३३२ स्त्रीणां तु विंशतिरधिका । तत्र दश स्तनयोः तासां यौवने परिवृद्धिर्भवति । दश योनौ ॥ ११२**

---

५० °मेका । हृद्या°–ग.

३३२–स्त्रीणां विंशति पेश्योऽधिका । तासां मध्या, । स्तनयो । तासां बाल्ये व सङ्कुचिता । यौवने वृद्धि । यानी दश ३३२

११३ योनिलक्षण तत्रस्ता पेश्यश्च ।

**३३३–तासामभ्यन्तराश्रिते द्वे । मुखाश्रिते वृत्ते द्वे । तिस्रो गर्भमार्गाश्रिता । यस्यां गर्भस्तिष्ठति । योनिस्तु शङ्खनाभ्याकृतिस्त्र्यावर्ता । तस्यास्तृतीये आवर्ते पित्त पक्वाशयान्तरे रोहितमत्स्यमुखाकारा गर्भशय्या तस्यां शुक्रार्तवप्रवेशिन्यस्तिस्र पेश्य ॥ ११३**

३३३–तासां विभाग । द्वे अभ्यन्तर महास्रोतसि प्रवृत्त, द्वे योनिमुखे वृत्ताकारे, तिस्रो गर्भमार्गमाश्रिता । तत्रैव गर्भाशये शुक्रार्तवप्रवेशिन्यो गर्भशय्याया प्रतिबद्धा । सा च योनौ शङ्खनाभ्याकृत्या तृतीये आवर्ते निरुद्धा । रोहितमत्स्यमुखाकारा गर्भशय्या ३३३

११४ पेशीनां स्वरूप कार्यं च ।

**३३४–ताभिर्हि शरीरे तनुबहलस्थूलाणुपृथुवृत्त ह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभि सन्ध्यस्थिसिरास्नावानि प्रच्छादितानि ॥ ११४**

३२४–स्थूल त्यक्त भि पे शीभिस्तनुत्वादिगुणयुक्ताभि शरीर सन्ध्यादीनि प्रच्छादितानि ३३४

११५ सिराधमनीमुखानां सङ्ख्यानम् ।

**३३५–सिराधमनीमुखानां त्वणुशो विभज्य मानानामेकान्त्रिंशच्छतसहस्राणि नव च शतानि षट् पञ्चाशानि भवन्ति । ताभिरिदं शरीरं गवाक्षितं विततं च ॥ ११५**

३३५–सिरा नातिस्थूला रज्ज्वाकारा सूक्ष्मसुषिरा वाता निरुद्धा । धमन्यस्तादृशा एव वक्ष्यमाणा । ताभि शरीरं गवाक्षितं जालवत् पिनद्धं बद्धं यन्त्रं जुष्टं ततं पर्यन्तं युक्तं ३३५

११६ केशादिसङ्ख्या सङ्ख्यानम् ।

**३३६–तावन्ति च केशश्मश्रुलोमानि ॥ ११६**

३३६–केशादीनि च तावन्त्येव ३३६

११७ सिराधमनीनां कार्याणि ।

**३३७–तासां हि मुखानि तत्प्रतिबद्धानि यतस्तानि ताभिराप्याय्यन्ते । तत्र ता स्वेदमभिवहन्ति । तथाऽभ्यङ्गलेपान्वीर्यं त्वचि विपक्वमन्तर्नयन्ति, स्पर्शं च गृह्णन्ति ॥ ११७**

३३७–अणुशो विभज्यमानानां सूक्ष्मभागक्रमेण विभाग गच्छन्तीनां तासां सिराधमनीनां मुखानि सर्वत्र प्रसृतानि । तत्प्रतिबद्धानि तदाश्रितानि । अतो हेतोस्तानि केशादीनि ताभि सिराधमनीभिराप्याय्यन्ते । तत्र कषायानुबद्धमुखैस्ता स्वेदमभिवहन्त्यभ्यङ्गादीनां वीर्यं त्वचि विपक्वमन्तर्नयन्ति । स्पर्शं गृह्णन्ति ३३७

११८ स्नायुसङ्ख्यानम् ।

**३३८–स्नायवो ह्येता अपि पुनरस्य नवानि तथापि तु सिरादीनि यथास्थूलं यथोपयोगं चात्रनापेक्ष्यन्ते ॥ ११८**

३३८–स्रोतांसि सामान्याः स्नायवस्ता धातुना यान्ति । सौक्ष्म्यात् प्रतानवत्त्वादपरिसङ्ख्येयानि सिरादीनि । सिराधमनीस्रोतांसि न सर्वाणि यथाप्रधानं यथोपयोगं च यानि प्रधानानि, यानि चिकित्सायामुपयुज्यन्ते तान्येवात्र सिरा विभागादावुपदिश्यन्ते ३३८

११९ एष शरीरादीनां स्थूलभावस्य वर्गनिर्देश ।

**३३९–इत्येव परिसङ्ख्याता शरीरे मूर्तिमन्त स्थिरा भावा ॥ ११९**

३३९–इति शरीरे मूर्ता कठिनाः सन्निन्द्रियाग्राह्या भावा वस्तुतस्ते परिसङ्ख्याता यथावत् भवन्ति ३३९

१२० शरीरस्य द्रवस्वरूपम् ।

**३४०–द्रवास्तु यत्तदतियोगेन च्यवमान पुरीषमनु बध्नाति । तथा मूत्रं रुधिरमन्याश्च शरीरे धातून् । यच्च सर्वं शरीरगतं ग्राह्यं त्वग्बिभर्ति । यच्च त्वगन्तर गतं स्वेदाख्यं, स्वेद इत्याख्यायते । यच्चाप्यनुवर्त्त्यमानमूर्ध्वमधश्चाभिनिष्पततत्स्वेदाख्यम् । तदुदकम् ॥ १२०**

३४०–द्रवास्तु सन्ति शरीरे । तत्र तद्धि तत्र दहे यत् यत् वनभूतमतियोगेन च्यवमानं पुरीषमनु बध्नाति । तत्प्रसाद । सर्वांश्च धातूनां गतमत्यन्तं तम् । तयातियोगेन च्यवमानं मूत्रं प्रमदे । रक्तपित्तं च मांसरक्तादीन् । अन्यांश्च शरीरधातून् पित्तश्लेष्मानिलानियोगेन प्रवर्तमानाननु बध्नाति । तद् उदकमिति सम्बन्ध । सुबोधम् ३४

१२१ शरीरगतानां रसरक्तश्लेष्मपित्तमूत्रवसा मज्जमेदःप्रमाणम् ।

**३४१–तस्याद्यस्य चाहारसारस्य रसाख्यस्य रक्तस्य शकृत श्लेष्म । पित्तस्य मूत्रस्य वसाया मेदसो मज्ज्ञश्च स्वेन स्वेनाञ्जलिप्रमाणेन यथापूर्वमसादिसंख्या प्रवृद्धि ॥ १२१**

३४१–तस्याद्यस्य रसादयस्याद्याहारसारस्य रक्तादीनां च मज्जा तानामेषां स्वेन स्वेनाञ्जलिप्रमाणेन यथापूर्व मेकाधिक्यप्रवृद्धिर्विज्ञेया । स्वेन स्वेनेत्यञ्जलिप्रमाणेनाऽऽस्य स्वैराञ्जलिम् । तत्पूर्वाणां क्रमशोऽत्र एकैकवृद्धि । मज्जा एकोऽञ्जलि द्वावञ्जली, वसा त्रयोऽञ्जलयो, यावदुदकस्य दशाञ्जलयो दहे ३४१

१२२ शुक्रस्य परिमाणम् ।

**३४२–अर्धाञ्जलि शुक्रस्य ॥ १२२**

१२३ मस्तिष्कमोजसो परिमाणम् ।

**३४३–तावदेव मस्ति कमोजश्च ॥ १२३**

३४३–ओजादिशुक्रमस्तिष्काणि प्रत्येकं स्वेनाञ्जलिप्रमाणेनाधाञ्जलानि । सुबोधम् ३४३

५१ गर्भाशयान्तरे गर्भ–ग ५२ त विनद्ध॰–च ५३ वमन्त प्रतिपद्यन्ते, स्पर्श॰–क ५४ ॰स्य तथा र–ख ५५ शकृत पित्त–च

१२४ रजस परिमाणम् ।

**३४४-स्त्रीणा रजसोऽञ्जलयश्चत्वारः १२४**

१२५ स्तन्यस्य परिमाणम् ।

**३४५-स्तन्यस्य द्वौ ॥ १२५**

१२६ रज स्तन्ययो समुत्पत्ति ।

**३४६-उभयमपि चैतद्रसप्रसादात्मकमिति ॥ १२६**

३४६-उभय रजस्स्तन्यलक्षण रसस्य धातो प्रसादात्मभवति ३४६

१२७ रसादीना परिमाणे विशेष ।

**३४७-समवातोः परिमाणमिदम् । अतो वृद्धिक्षयौ यथास्व लक्षणैर्विभावयेदपराश्चापरिसंख्यातानमूर्तामूर्तान् भावान् ॥ १२७**

३४७-३८ यथोक्त परिमाण समधातोर्नान्यस्य विज्ञेयम । अन्यस्य त्वेतेषा वृद्धिक्षयौ दोषभेदैर्विवृतैर्लक्षणैर्विभावयेत् ३४७

१२८ मूर्तामूर्तानां आदाश्रभावाना परिमाणम ।

**३४८-तद्यथा-मासकर्णादिमलान् वायुबुद्धिस्मृत्यादींश्च ॥ १२८**

३४८-अपराश्च मूर्तान मासकर्णमलादीनमूर्ताश्च वायुबुद्धिस्मृत्यादीन् भावान्यथास्व लक्षणैर्विभावयेदिति सम्बन्ध ।

१२९ रसादीना परिमाणविषये धान्वन्तरीयाणा मतम ।

**३४९-धान्वन्तरीया पुन पठन्ति । 'विलक्षणानि हि शरीराणि नित्यमेव च चला दोषधातुमलाः । तस्मादुदकादीनामपि समत्व मांसादिवत् परिमाणतो निर्देष्टुमशक्यम् । केवल स्वास्थ्यमात्रेणानुमानतो लक्षयेत्' इति ॥ १२९**

३४९-धान्वतरीया सौश्रुता । सुबोधम । दोषादिनाम-व्यवस्थितरूपत्वाद दुर्ज्ञान प्रमाणम । केवल स्वास्थ्यमात्रेणानुमानाल्लक्षयेदिति ३४९

१३०-सर्वेषामेवावयवाना परमाणुभेदेनासंख्येयता ।

**३५०-सर्व एव त्ववयवा परमाणुभेदेनातिसौक्ष्म्यादसंख्येयता यान्ति ॥ १३०**

३५०-इद च विज्ञेयम । स्थूलया दृष्ट्या अङ्गप्रत्यङ्गाना सख्यादिकमुक्तम् । सर्व एवावयवा परमाणुभेदेन त्वतिसौक्ष्म्याद्धेतारसंख्येयता यान्ति । ते च परमाणव प्रतिक्षण सजातियविजातीयसंयोगविभागाभ्या शरीरभावेन वर्तन्ते । अन्यथा यो वा तत्र आगत स एव युक्त प्रतिपन्न इत्येकस्यापि नानात्वायोगात् ३५०

१३१ कर्मणोऽनन्तरायवायुसंप्रयुक्ताना परमाणूना संयुक्तविभागेन कार्यद्रव्यारम्भकत्वम ।

**३५१-तेषा संयोगविभागे परमाणूनां कर्मप्रेरितो वायु कारणम ॥ १३१**

३५१-तेषा परमाणूना संयोगविभागे अदृष्टनामकर्मप्रेरितो वायुः कारणम । अन्यथा कर्मभयादृष्टान्यत्वोत्पत्तिर्न दृष्टा । केवलो वायुर्निमित्तम । कर्मणोऽनन्तरायवायुप्रेरणया परमाणव कार्यद्रव्यमारभन्ते संयुक्तादिकम् । वायुकारणत्वेन च परमाणूना विनाशात् संयोगविनाशेन द्रव्यकार्यविनाश ३५१

१३२-भेदाभेदाभ्या गृहीतम शरीरम बन्धाय मोक्षाय च प्राप्ति ।

**३५२-तदेतदेवमभेदेन भेदतश्च गृह्यमाण बन्धाय मोक्षाय च भवतीति । भवति चात्र- ॥ १३२**

३५२-अत उपसंहरति-तदेतदनुक्रान्तरूपमङ्ग शरीरमभेदेनैकत्वेन आत्मना सामान्यतदुपाधिभेदेन बन्धाय जन्मजरामरणप्रवृत्तिपरम्पराप्रदानेन भवति । तदेतदनन्तरोक्तेन प्रकारेण भेदेन आत्मना निस्सार जुगुप्सितवस्तुसमारब्धत्वेन हेतुना मोक्षाय संसारानागततत्त्वात्कल्पापरिहारात् भवति । भवति चात्रेति श्लोकेनोपसंहरति त्वनन्तरोक्त ३५२

१३३ सर्वावयवोपेतस्य शरीरस्य यथावज्ज्ञानस्य प्रयोजनम ।

**३५३-इति सर्वावयवशो यो जानाति कलेवरम् । अहितेषु स मोहेन न कदाचित् प्रवर्तते ॥ १३३**

**इति वैद्यपतिसिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहिताया शारीरस्थाने अङ्गविभागो नाम पञ्चमोऽध्यायः ।**

३५३-इत्यनेन प्रकारेण सर्वावयवश सर्वमवयव य पुरुष कलेवर शरीर जानाति सोऽहितेषूभयलोकविरुद्धेषु मोहात्र प्रवर्तते । गृहीतवस्तुतत्त्व सन्नहितानि परित्यज्य हितेष्वेव प्रवर्तत इत्यर्थ ३५३

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया शशिलेखाया शारीरस्थाने पञ्चमोऽध्याय. ॥**

# सिराविभागः षष्ठोऽध्यायः ।

## ( उपोद्घातः )

पूर्वाध्याये शरीरावयवभेदे स्वरूपव्यक्तत्वात् सिरादिर्निर्णीतशेषस्तत्रापि सिराणा प्राधान्यान्निर्णयार्थमध्यारम्भ

१ प्रतिज्ञा ।

**३५४-अथातः सिराविभागमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षय. ॥१**

२ दश मूलसिरा ।

**३५५-दश मूलसिरा हृदयप्रतिबद्धा. सर्वाङ्गप्रत्यङ्गेष्वोजो नयन्ति तत्प्रतिबद्धा हि शरीरचेष्टाः ॥ २**

३५५-दश मूलसिरा इत्यादि । मूलसिरा प्रधानसिरा । ततो हि सर्वा सिरा भवन्ति । ता प्रत्यङ्गेषु चौजो नयन्ति ३५५

५६ धन्वन्त°-ग ५७ °देतदङ्गमे°-क ५८ °क्षाय भव°-क. ५९ °त सिराविभाग शारीर व्या°-क ख. ६० °स्याम इश°-क. ख ६१ °ङ्गप्रत्यङ्गान्योजो न°-क ख.

३ सिरा ।।मा०स्य मरया ।

**३५६–तासु च्छद्गुलमंगुलमधांगुलं यवं यवार्धं च गत्वा द्रुमपत्रसेवनीप्रतानवद्भिद्यमाना सप्तशतानि भवन्ति ॥ ३**

३५६–ता प्रभिद्यमाना द्रुमपत्रसेवनीप्रतानवत् सप्त ।।ानि सिराणां भवन्ति । तदेतदुक्तं भवति–ता हृदयप्रतिबद्धा दश सिरा हृदयाद्यङ्गुलं गत्वा प्रथमं प्रतानं मुञ्चति । ततः अङ्गुलं गत्वा द्वितीयम् । ततः अर्धाङ्गुलं गत्वा तृतीयम् । ततो यवं गत्वा चतुर्थम् । ततोऽपि यवार्धं गत्वा पञ्चममिति। ततो न भिद्यन्ते सर्वत्र नैव भिद्यमाना इति यावद्यावद्देहो स्ति । सप्तशतानि प्रतानाना दीर्घाणां भवन्ति ३५८

४ शाखागता सिरा ।

**३५७–तासां चतुश्शतीं शाखासु ॥ ४**

३५७–ताभ्यश्चत्वारि शतानि चतसृषु शाखासु ३५७

५ शाखासिरास्व वधनीया सिरा ।

**३५८–तत्र षोडश वधनीया ॥ ५**

३५८–तत्रापि चतुर्णा वा षोडश वधनीया ३५८

६ अन्तराधिगता सिरा ।

**३५९–षट्त्रिंश शतमन्तराधा ॥ ६**

३५९–अन्तराधौ तु षट्त्रिंशच्छतम् ३५९

७ अन्तराधिसिरास्व वधनीया सिरा ।

**३६०–तत्र द्वात्रिंशत् ॥ ७**

३६०–तत्र द्वात्रिंशद् वधनीया इति सर्वं ध ३६०

८ मूर्धगता सिरा ।

**३६१–चतुः पञ्चाधिकं शतमूर्ध्वम् ॥ ८**

९ मूर्धसिरास्व वधनीया सिरा ।

**३६२–तत्रापि पञ्चाशत् ॥ ९**

१० एकैकस्मिन् सक्थ्नि शतं सिरा ।

**३६३–तासामेकैकस्मिन् सक्थ्नि शतम् ॥ १०**

११ एकैकस्मिन् सक्थ्न्य वधनीया सिरा ।

**३६४–तत्र न विध्येज्जालधराम् । तिस्रश्चाभ्यन्तरगता ॥ ११**

३६४–तत्र षोडश शाखासु चतसृष्व वधनीया उक्तास्तत्रैका पूर्वोक्ता जालधरा तिस्रश्चाभ्यन्तरसमाख्या अवेध्या ।

१२ श्रोण्यन्तगता सिरा ।

**३६५–द्वात्रिंशच्छ्रोण्यां गुदमेढ्राश्रया । तासां द्वे द्वे वङ्क्षणयोः कटीकतरुणयोश्चेत्यष्टौ नाश्नतो रक्षेत् ॥ १२**

१३ पार्श्वगता सिरा ।

**३६६–षोडश पार्श्वयोस्तयोरूर्ध्वगामेकैका पार्श्वसन्धिसन्नाम् ॥ १३**

१४ पृष्ठगता सिरा ।

**३६७–चतुर्विंशतिः पृष्ठे । तासां पृष्ठवंशमुभयतो द्वे द्वे ऊर्ध्वगामिन्यौ ताश्चतस्त्र ॥ १४**

१५ उदरगता ।

**३६८–चतुर्विंशतिरुदरे । तासां मेढ्रस्योपरि रोमराजीमुभयतो द्वे द्वे ता अपि चतस्त्र ॥ १५**

१६ वक्षोगता सिरा ।

**३६९–चत्वारिंशद्वक्षसि । तासां द्वे हृदये द्वे च स्तनमूलस्तनरोहितेषु । एककापस्तम्भापालापयोरिति । ताश्चतुर्दश ॥ १६**

३६५–३६९–आग्रावामूल । ।गुल्फपर्यन्तराधि । तत्र षट्त्रिंशच्छतं सिराणाम् । तद्यथा–द्वात्रिंशत् श्रोण्याम् । पार्श्वयोर्द्वयोः षोडश । पृष्ठे चतुर्विंशति । उदरे चतुर्विंशति उरसि चत्वारिंशदिति षट्त्रिंशच्छतमन्तराधौ सिराणाम । ‘तत्र द्वात्रिंशद् वधनीया’ इति यदुक्तं तत्प्रदर्श्यते। अ । श्रोण्याम् । वङ्क्षणे उभयत्र चतस्र । कटीकतरुणयोमर्मगा अचतस्र इत्यष्टौ । पार्श्वयोर्द्वौ । द्वयोः पार्श्वयोरेकैकामूर्ध्वगाम् । पृष्ठे चतस्र पृष्ठवंशस्यैकस्मिन् पार्श्वे ऊर्ध्वगामिन्यौ द्वे । अपरस्मिन्नपि द्वे इति । जठरे चतस्र रोमराज्या पार्श्वयोः द्वयोर्द्वे द्वे इति। उरसि चतुर्दश । यत्र द्वे हृदये । द्वे द्वे द्वयोः स्तनमूलयोः इति चतस्र । स्तनरोहितयोश्चतस्र । अपस्तम्भयोरेका तथापालापयोरपि । एवं द्वात्रिंशदन्तराधावधनीया ३६५–३६९

१७ ग्रीवागता सिरा ।

**३७०–चतुर्विंशतिर्ग्रीवायाम् । तासां चतस्रोऽष्टौ च मर्मसंज्ञा । द्वे कृकाटिकयोर्द्वे विधुरयोरिति षोडश शस्त्रेण न स्पृशेत् ॥ १७**

१८ हनुगता सिरा ।

**३७१–हन्वोः षोडश । तासां सन्धिमबन्धिन्यौ द्वे ॥ १८**

१९ जिह्वागता सिरा ।

**३७२–षोडश जिह्वायाम् । तासामधो द्वे रसवेदिन्यौ द्वे वाक्प्रवर्तिन्यौ ताश्चतस्र ॥ १९**

२० नासागता सिरा ।

**३७३ चतुर्विंशतिर्नासायाम् । तासां द्वे गन्धवेदिन्यौ तासामरं च तालुन्येकामिति तिस्र ॥ २०**

२१ नेत्रगता सिरा ।

**३७४–षट्पञ्चाशन्नेत्रयोः । तयोः निमेषोन्मेषक्रिये द्वे द्वे चापाङ्गयोरिति षट् । नासानेत्रगतास्तु ललाटे षष्टिः । तासां केशान्तानुगताश्चतस्रो द्वे चावर्तयोरेका च स्थपन्यामिति सप्त ॥ २१**

२२ कर्णगता सिरा ।

**३७५–कर्णयोः षोडश । तासां शब्दवाहिन्यौ द्वे । त एव च शङ्खयोस्तासां शङ्खसन्धिगते द्वे ॥ २२**

२३ शिरोगता सिरा ।

**३७६–द्वादश मूर्धनि । तासामुत्क्षेपयोर्द्वे सीमन्ते**

६२ ने द्वात्रिंशच्छ्रे–क ख ६३ भ्य तर ॥ –ख

**ष्वेकैकामेकामधिपतावित्यष्टौ शस्त्रेण परिहरेत्। तथा क्षुद्रिका. कुटिला सकीर्णा ग्रथिता सन्धिषु चाशस्त्रकृत्या। ॥ २३**

३७०-३७६–चतुष्षष्ट्यधिक शतमूर्ध्व शिरसि सिराणामिति यदुक्त तद्विजभते। **ग्रीवायां** चतुर्विंशति । **हन्वोर्द्वयो** षोडश। **षोडश** जिह्वायाम् । **नासाया** चतुर्विंशति । **नेत्रयो** षट्पञ्चाशत्। ललाटे षष्टिर्नासानेत्राश्रितास्ताभ्योऽनन्या अतो न गण्यन्ते। **कर्णयोर्द्वयो** षोडश सिरास्ता एव शखाश्रिता अतस्तत्रस्था न गण्यन्ते। **मूर्ध्नि** द्वादशेति चतुष्षष्ट्यधिक शतम्। अत्र 'पञ्चाशदव्यधनीया' इति यदुक्त तदुच्यते। ग्रीवाया षोडश। चतस्रो मर्मसज्ञा। द्वे नीले द्वे मन्ये इति चतस्र। अष्टौ मर्मसज्ञा मातृका इति वक्ष्यमाणा। द्वे द्वयो कृकाटिकयो, द्वे च विधुरयोरिति षोडश हन्वोर्द्वयोः। द्वे हनुसन्धिबन्धनकर्मणी। जिह्वाया चतस्र। द्वे रसबोधने जिह्वाया अधस्तया द्वे वाक्प्रवर्तिन्यौ इति चतस्र। नासाया तिस्रो यत्र द्वे गन्धवोधिन्यावेका च तालुनीति तिस्र। नेत्रयो षट्। निमेषे द्वे उन्मेषे द्वे अपाङ्गयोर्द्वे इति षट्। ललाटे सप्त। केशान्तकाश्चतस्र। आवर्तकाख्ययोर्मर्मणोर्द्वे एका च भ्रूमध्यभवे स्थपन्याख्यमर्मणि इति सप्त। कर्णयोश्चतस्र। द्वे शब्दवाहिन्यौ शखायोस्तत्सन्धिगते द्वे इति चतस्र। केशान्तेऽष्टौ। द्वयोरुत्क्षेपयोर्द्वे सीमन्तेषु पञ्च। अधिपतौ रोमावर्तमर्मण्येका इत्यष्टौ। एव शिरसि पञ्चाशदवेध्या। न केवलमेता एवावेध्या यावत् क्षुद्रिका अतिसूक्ष्मा कुटिला अनृजुगामिन्य सकीर्णा बहुभिरनभिव्यक्ता ग्रथिता सकोचेन ग्रन्थिरूपा तथा सन्धिषु कूर्परादिष्वाश्रिता ३७०-३७६

२४ वातरक्त-पित्तरक्त-श्लेष्मरक्त-शुद्धरक्तवहा सिरा।

**३७७-तासां यथास्व तुर्यांशविभागेन पञ्चसप्तत्यधिक[६४] शतमनिलरक्त वहति। एष विभाग. पित्तश्लेष्मशुद्धरक्तेष्वपि। स्थिता ह्येवं देहमनुगृह्णन्ति दोषाः। व्यत्ययेन तु पीडयन्ति॥ २४**

३७७—तासा च सप्ताना शताना यथास्व शखादिगतसिराणा चतुर्थेन विभागेन प्रत्येक पञ्चसप्तत्यधिक वातादिमिश्र रक्त शुद्ध च वहति। तेन पञ्चसप्तत्यधिक शत सिराणा **वातरक्त** वहति। तद्वत् **पित्तरक्त, श्लेष्मरक्त, शुद्धरक्त** च। एवमनेन सिरावहननियमेन व्यवस्थिता दोषा शरीरमनुगृह्णन्ति। एतद्विपर्यये पीडयन्ति ३७७

२५ वातरक्तवहसिरालक्षणम्।

**३७८-तत्र श्यावारुणा. प्रस्पन्दिन्यः सूक्ष्मा क्षणपूर्णरिक्ता वातरक्त वहन्ति ॥ २५**

२६ पित्तरक्तवहसिरालक्षणम्।

**३७९-नीलपीतासिता स्पर्शोष्णा क्षिप्रस्राविण्य पित्तरक्तम् ॥ २६**

२७ कफरक्तवाहिन्या सिराया लक्षणम्।

**३८०-गौर्य. स्निग्धा स्थिरा. शीता. कण्डूमत्यः कफरक्तम् ॥ २७**

२८ संसर्गसन्निपातवाहिन्या सिराया लक्षणम्।

**३८१-लक्षणसंकरे संसर्गसन्निपातरक्तम् ॥ २८**

२९ शुद्धरक्तवाहिन्या सिराया लक्षणम्।

**३८२ समा गूढा. स्निग्धा रोहिण्य. शुद्धरक्तमिति २९**

३७८-३८२–ननु कथमेतद् ज्ञायत इमा सिरा इद वहन्तीत्याह **तत्रेत्यादि**। सुबोधम्। क्षणेन पूर्णा आध्माता क्षणेन च रिक्ता क्षिप्र शीघ्रमेव वहन्ति स्रवन्ति। समगे किं लक्षणमित्याह अत्र तु यदि दोषान्तरेण ससृष्टो भवति तदा यथास्व लक्षणाना सकरो विज्ञेय रोहिण्यो लोहिता। इति सिरा उक्ता ३७८-३८२

३० धमनीना सख्या।

**३८३-धमन्यस्तु चतुर्विंशति. ३०**

३८३ क्रमप्राप्ता धमन्य उच्यन्ते धमन्यो विशिष्टा सिरा एव। ताश्च सख्यया चतुर्विंशति ३८३

३१ धमनीनामुपयोग।

**३८४-ताभिः कायोऽयमाराम इव जलाहारिणीभिः केदार इव कुल्याभिरुपस्निह्यति ३१**

३२ धमनीनामधिष्ठानम्।

**३८५ ताभिश्च नाभिश्चक्रनाभिरारकैरिवावृता ३२**

३८४-३८५–यथा आरामो जलहारिणीभि केदार कुल्याभिराप्याय्यते तद्वत्ताभिर्नाभिप्रतिबद्धाभि काय आप्याय्यते। चक्रस्य नाभिरक्ष। आरास्तन्निबद्धानि काष्ठानि। सुबोधम् ३८४-३८५

३३ नाभ्या विशेषत प्राणानामवस्थानम्।

**३८६-तस्यां[६५] नाभ्यां विशेषेण प्राणा व्यवस्थिता'। यतश्च साऽन्तरग्न्यधिष्ठानम् ॥ ३३**

३८६ यतश्च सा नाभिरन्तरग्नेरधिष्ठानमतोऽपि तस्या विशेषेण प्राणा व्यवस्थिता. ३८६

३४ नाभिप्रतिबद्धाना धमनीनामूर्ध्वाधस्तिर्यक्च प्रसार।

**३८७—तासां खलु धमनीना दशोर्ध्वं प्रसृता दशाधश्चतस्रस्तिर्यक्। ततस्ताभिर्यथास्वमङ्गावयवा धार्यन्ते[६६] आप्याय्यन्ते च ॥ ३४**

३८७—तासा च नाभिप्रतिबद्धाना मध्याद्दश धमन्य ऊर्ध्वमुपरिकाय गता। दशाध प्रसृता। तिर्यक् चतस्र ३८७

३५ ऊर्ध्वगाना धमनीना प्रतानानि कार्यं च।

**३८८-तासामूर्ध्वगा हृदयमभिप्रपन्ना. प्रत्येकं त्रिधा जायन्ते। ततस्त्रिंशतो मध्ये द्वे द्वे वातपित्तकफरक्तरसान् वहत। अष्टाभि. शब्दरूपरसगन्धान्[६७] गृह्यन्ते। द्वाभ्यां द्वाभ्यां भाषते, घोष करोति, स्वपिति, प्रति-**

६४ °क शतकम्–ख ६५ तस्मान्नाभ्या वि°–क द्वा°–क.

६६ °न्ते याप्यन्ते च। ता°–क. ६७ °गन्धान् गृह्णाति।

स्त्रीपुंसयोः बाह्यानि स्रोतांसि ।









५० अन्नवहस्रोतोदुष्ट्याद्वे ।

**४०३–तेषां दुष्टौ सर्व मात्राशितीयोक्तमवगच्छेत् ५०**

४०२–४०३–अन्नवाहिनां स्रोतसां दुष्टत्वे हेतुं कार्यं प्रतीकारं च सर्वं ज्ञातुं मात्राशितीयमध्यायमवगच्छेत् । तेनेतदुक्तं भवति। अन्नवाहिनामतिमात्रमसमशनादीनि दूषणानि। दुष्टत्वे विषूचिकाद्युत्पत्तिः । वमनादिका चिकित्सा । शेषं सुबोधम् । मूलमाश्रयः । उपकारापकारद्वारमित्यर्थः । एवं प्राणोदकान्नरसादिधातुमूत्रशकृत्स्वेदभेदेन त्रयोदशविधानि स्रोतांसि । तत्र प्राणोदकान्नवाहिनां दुष्टौ हेतुलक्षणोपधान्युक्तानि ४०२–४०३

५१ रसवाहिनां स्रोतसां मूलम् ।

**४०४–रसवाहिनां हृदयं मूलं दश धमन्यश्च ॥ ५१**

५२ रक्तवाहिनां स्रोतसां मूलम् ।

**४०५–रक्तवाहिनां यकृत् प्लीहा च ॥ ५२**

५३ मांसवाहिनां स्रोतसां मूलम् ।

**४०६–मांसवाहिनां स्नायानि त्वक् च ॥ ५३**

५४ मेदोवाहिनां स्रोतसां मूलम् ।

**४०७–मेदोवाहिनां वृक्कौ मांसं च ॥ ५४**

५५ अस्थिवाहिनां स्रोतसां मूलम् ।

**४०८–अस्थिवाहिनां जघनं मेदश्च ॥ ५५**

५६ मज्जवाहिनां स्रोतसां मूलम् ।

**४०९–मज्जवाहिनां पर्वाण्यस्थीनि च ॥ ५६**

५७ शुक्रवाहिनां स्रोतसां मूलम् ।

**४१०–शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च ॥ ५७**

५८ मूत्रवाहिनां स्रोतसां मूलम् ।

**४११ मूत्रवाहिनां बस्तिर्वङ्क्षणौ च ॥ ५८**

५९ शकृद्वाहिनां स्रोतसां मूलम् ।

**४१२–शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च ॥ ५९**

६० स्वेदवाहिनां स्रोतसां मूलम् ।

**४१३–स्वेदवाहिनां[७६] मेदो रोमकूपाश्च ॥ ६०**

६१ रसवहादिस्रोतसां दूषणादीनि ।

**४१४–तेषां दूषणं विविधमहिताहारविहारमुपद्रवाँन् पृथक् पृथक् साधनं दोषादिविज्ञानीयाद्यथास्वं वृद्धिक्षयलक्षणेन लक्षयेत् ॥ ६१**

४१४–तेषां रसवाह्यादीनां स्रोतसां नानाप्रकारमहिताहारदूषणम् । तच्च तीक्ष्णमतिना परिकल्पनीयम् । दुष्टानामुपद्रवा व्याधयस्तच्चिकित्सा च दोषादिविज्ञानीयोक्तेन "रसोऽपि श्लेष्मवत्" इत्यादिना वृद्धिक्षयलक्षणेन लक्षयेत् । तेनैतदुक्तं भवति–आहारादिविशेषवशाद्रसवाहिषु दुष्टेषु कदाचिद्रसवृद्धिजा रोगास्तत्र यथास्वं चिकित्सेति । एवं सर्वत्रापि वाच्यम् ४१४

६२ स्रोतसां शस्त्रादिव्यधे जन्तोर्भ्रमाद्युद्भवः ।

**४१५–व्यधे तु स्रोतसां भ्रममोहकम्पप्रलापाध्मानशूलारुचितृट्छर्दिज्वरातिरुधिरस्रुतिमूत्रपुरीषरोधा मरणं च ॥ ६२**

४१५–अनन्तरोक्तानां च स्रोतसां व्यधे शस्त्रादिनाऽर्दने जन्तोर्भ्रमाद्युद्भवः ४१५

६३ स्रोतोविद्धस्य प्रत्याख्याय चिकित्सा ।

**४१६–तस्मात्स्रोतोविद्धं प्रत्याख्यायोपाचरेत् ॥ ६३**

४१६–तस्माद्व्यधे स्रोतोविद्धं चिकित्साया प्रत्याख्यानं कृत्वा असाध्यतामुक्त्वा दैवात् किञ्चित् भवेदिति शास्त्रानुगमनेनोपचरेत् ४१६

६४ अन्तःशल्यस्य स्रोतोविद्धस्य चिकित्सा ।

**४१७–उद्धृतशल्यं च सद्योव्रणविधानेन ॥ ६४**

४१७–अन्तःशल्यं च स्रोतोविद्धं शल्यमुद्धृत्योपाचरेदिति सम्बन्धः । केनेत्याह–वक्ष्यमाणेन सद्योव्रणविधानेन ४१७

६५ सिराधमन्यः स्रोतोविशेषा एवेति विमतम् ।

**४१८–तत्र स्रोतसामेव विशेषाः सिराधमन्यः ॥ ६५**

४१८–सिराधमन्यः स्रोतोविशेषाः सौषिर्यसामान्यात् ४१८

६६ सिराधमनीस्रोतसां मिथो विभिन्नानीति मतोपपादनम् ।

**४१९–अन्ये त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम् । केवलं परस्परसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते ६६**

४१९–अन्ये त्वाचार्याः सिरादीनां पृथक्त्वमिच्छन्त्येव च ब्रुवते । यत् सिरादीनां परस्परविलक्षणानामविभाग इव लक्ष्यते तत् केवलं परस्परसन्निकर्षादिना हेतुत्रितयेन । सदृशं कर्म वाहकत्वं येषां ते तथोक्ताः । सौक्ष्म्यं सूक्ष्मता ४१९

६७ स्रोतआदीनि शरीरधात्ववकाशानां नामानीत्यपरमतोपन्यासः ।

**४२०–अपरे पुनराहुः स्रोतांसि सिराधमन्यो रसवाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां नामानीति ॥ ६७**

४२०–अपरे पुनराचार्या एवमाहुः—यथा स्रोतांसि शरीरधात्ववकाशानां केषाञ्चिल्लक्ष्याणामिन्द्रियगोचराणां केषाञ्चिदलक्ष्याणामागमानुमानैकगम्यानामेतानि नामानीति ४२०

६८ धात्ववकाशादीनां धातुप्रकोपादौ कारणत्वम् ।

**४२१ ते चावकाशाः प्रकुपिताः स्थानस्थान्मार्गस्थांश्च धातून् प्रकोपयन्ति । तेऽपि[७८] कुपितास्तानि स्रोतांसि स्रोतांसि च स्रोतांसि धातवश्च धातून् ।**

६९ सर्वेषामेव दूषयितारो दोषाः ।

**४२२–तेषां सर्वेषामेव दूषयितारो दुष्टा दोषाः ॥ ६९**

७० अग्निदोषाद्दोषदुष्टिः ।

**४२३–ते च प्रायशो दुष्यन्त्यग्निदोषात् ॥ ७०**

७१ अग्निनिमित्तान्यायुरारोग्यादीनि ।

**४२४–तस्मात्तन्निमित्तान्यायुरारोग्यबलोपचयवर्णौजांसि ॥ ७१**

७५ °मन्यः र°–क ७६ °नां मेदोमूलं रो°–क. ७७ °वान् सा°–क. ख. ७८ °पि तान् स्रोतांसि च। स्रोतांसि, धातवश्च धातून्–क. ख.

# महास्रोतस्तदुपांगानि च ।



७२ धात्वग्निभूताग्निप्रभृतीन्यंतिप्रतिबद्धा यव।

४२५-तत्प्रतिबद्धान्येव च रञ्जकादीनि भूताग्नयो धात्वग्नयश्च ॥ ७२

७३ अन्नस्यामृतविरभवे वार म्।

४२६-तथाऽन्नमपि पित्तेनव पक्वममृतता यात्यपक्व च विषताम् ॥ ७३

४२१ ४२६-स्रोतोदुष्ट्या धातुदुष्टि। धातुदुष्ट्या स्रोतोदूषण चाह-त्त इत्यादिना। प्रकुपिता दुष्टा स्थानमाशयस्तत्र तिष्ठतीति स्थानभ्या स्रोतासि च स्रोतासीति यानि स्रोतासि दुष्टानि भवति ता यया यपि दूषयति। एवं धातूनामपि वाच्यम्। तेषा सर्वेषा धातूना धात्वाशयाना च दुष्टान् वातादीन् तरेण ना यो दुष्टौ कारणम्। दोषा॥ दुष्टिरपि प्रायोऽग्नि पात्। अ यत्सुबोधम् ४२१-४२६

७४ पा कााग्नि।

४२७-तत्र पित्तविशेष पाचकसंज्ञोऽग्निरिति प्रागाभिहित ॥ ७४

४२७-तत्रेत्यादिना-पाचकमग्निमग्नि प्रशंसति। प्राग्दोषभ ये पाचकमग्नि पित्तमन्नाऽन्नस्य पत्ताग्निरित्युक्तवानमाचार्य ४२७

७५ मता तरग्नेर्लक्षणम्।

४२८-अ ये पुनराचक्षते-दोषधातुमलसन्निपातजनितोऽन्तरूष्मा यथानिर्दिष्टाधिष्ठानकमाग्निरिति ॥ ७५

४२८-अ ये पुनराचार्या पित्तमग्निरिति नेच्छन्ति। दोषादेर्मयोगविशेषजनितो त रार उष्मा ग्रहण्यधिष्ठान पाकादिकमाग्निरित्याहु। अथान्तरमस्य ग्रन्थस्य तात्पर्याथ उच्यते-इहायुर्वेदे उभयेषाम चायाणा भिन्न दर्शनम्। एकेषाम त्तराग्निपकान्नसाराः क्रमेण धातु परिपोषोऽन्येषा यौगपद्येनेति ४२८

(मुखप्रवेशादारभ्यान्नस्य यापार।)

७६ अन्नस्य स्थूलपाकक्रम।

४२९-स खलु विधिवदभ्यवहृतमन्नजात प्राणेन वायुना कोष्ठमाकृष्ट द्रवविभिन्नसंघात स्नेहन मृदूकृत मभिसंधुक्षित समाननामाशयस्थ स्थालीस्थमिवाम्बु तण्डुलमग्निर तरग्नि पचति ॥ ७६

४२९-अत्र क्रमवादिन आहु-पुरुष। भु यमानमन्न कठिनतरदशनाभिघातजर्जरित प्रयत्नेनोदीरितेन प्राणाख्येनानिलेन कण्ठनाल्या महास्रोतसि निक्षिप्त नाभिस्थचारिणा समानेन नाभिपार्श्वग्रहण्याख्यपित्तधराकलामर्यादं आमाशये विधृत द्रवण जलादिना विभिन्नसंघात स्नेहेन च मार्दवमापादित पाचकेनेव समानेन संधुक्षित प्रदीपित यन्तराग्नि पचति। यथाऽग्निरादृततोयतण्डुल स्थाल्याम्य पचति ४२९

टिप्पणी-च चि १५ ६-८

७७ अन्नस्याणुपाकक्रम।

४३०-तत्तु सवरसमपि पच्यमानमादौ मधुरीभूत कफ फेनीभूतमुदीरयति। ततो विदग्धमम्लीभूतमामाशयात् च्यवमानमच्छ पित्तम्। प्राप्य च पक्वाशयं कटुकीभूतमनिलम् ॥ ७७

४३०-तत्र चामाशये तदन्न सवरसमपि पच्यमान सत् कफमुदीरयेत्। तच्च फेनभूत यथा दध्यादित क्षुभितात् प्रथम फेनसंभव। ततश्चामाशयात् पाकेन च्यवमानमम्लीभूत सत् स्वच्छ पित्तमुदीरयेत्। ततोऽप्यामाशयात् च्युत पक्वाशयऽग्निना शोषित कटुकीभूत सत्तन्न मारुतमुदीरयेत् ४३०

टिप्पणी-च चि १५९-११

७८ भौतिकाग्नि यापार।

४३१-ततश्चैव विच्छिन्न आहारे पञ्च पञ्चात्मका महाभूताग्नयो वायुना यस्तान् यथास्व पञ्चैव भूतगुणानाहारस्थान् पचति। ते पक्वा पुनयथास्वमव देहाश्रिताश्च स्वविकारभूतान् भूतगुणानाप्याययति ॥ ७८

४३१-जठराग्निना किञ्चित्पक्वविछिन्न आहारे पञ्च महाभूताग्नय पार्थिवादय पञ्चाहारस्थान् यथास्व महाभूतगुणान् पार्थिवादानाहारभागान् पचति। पार्थिवोऽग्निसादृश्यात् पार्थिवमेवाहारभाग पचति। आप्य आप्यमेव। सवत्र गुणशब्दोऽवयववाची। ते च पार्थिवादय पञ्चगुणा पार्थिवादिभि पञ्चभिरग्निभि पक्वा पार्थिवादानेव देहस्थान् भूतगुणानाप्याययन्ति, यथास्वमात्मीयजात्यनतिक्रमेण स्वविकारभूतानित्यत्रविकारा एव देहे महाभूतगुणा ४३१

टिप्पणी-च चि १५ १३-१४

७९ सारकिट्टविभजनम्।

४३२-एव च पक्वादाहाराद्विविधोपगमादिव स्नेहादच्छ सारभूतो रसाख्य किट्टाख्यश्च मलोऽभिनिवर्तत ॥ ७९

४३२-एवमन तराग्नि प्रकारेण पक्वादन्नात् द्वौ राशी भवन किट्ट सारश्च। यथा नानाप्रकारौषधगमाद् घृतात् स्नेह कल्कश्च ४३२

८० सारकिट्टाभ्या स्रोत पूरणम्।

४३३-ताभ्या च सारमलाभ्या तदात्मकानामेव शरीरगुणाना धात्वाख्याना यथास्व स्रोतासि पारम्पर्येणाविच्छिन्नसंतानमापूर्यन्ते ॥ ८०

४३३-ताभ्या सारमलाभ्या तदात्मकाना सारमलस्वभावाना धात्वाख्याना शरीरगुणाना रक्तादाना मूत्रादीना च पारम्पर्येण क्रमप्राप्त्याविच्छिन्नप्रवाह कृत्वा स्रोतासि पूर्यन्ते ४३३

---

७९ मपि तेनैव प-ग ८० अय ग्रन्थ कपुस्तके नास्ति। ८१ तान् विका-क ८२ व सार।-ख ८३ गान्यवच्छि-क

८१ धातुपोषणक्रम ।

**४३४-स्रोतोभ्यश्च यथाविभाग यथायथमेव धातव. पुष्यन्ति ॥ ८१**

४३४-तेभ्यो यथास्व धातव पुष्यन्ति ४३४

८२ धातूना मिथ पोष्यपोषकत्वेऽपि न पूर्वेषामपचय ।

**४३५-उत्तरोत्तरानुप्रवेशेऽपि च पूर्वेषां स्रोतसा यथाकाल सम्यगाहारोपयोगेन परिणामवताऽऽप्याय्यमानानां नापचयो भवति। ततश्च धात्वाख्याः प्रसाद-मला. स्वं स्वमेव मानमनुवर्तन्ते। यथावय'शरीरम् ८२**

४३५-पूर्वस्य रक्तादेर्धातोरुत्तरानुप्रवेशेऽपि मांसादिभावगमनेऽपि न पूर्वेषा रक्तादिस्रोतसामपचयो भवति। किंभूताना पूर्वधातुस्रोतसाम्? यथाकाल कालाविच्छेदेन सम्यगाहारोपयोगेनाप्याय्यमानानाम् । किंभूतेनाहारोपयोगेनाह-परिणामवता । तेनैतदुक्त भवति यदेवाविच्छेदेन स्रोतांसि परिणतोऽन्नसारो याति। पूर्वेभ्यश्च पूर्वाण्यापूर्यन्ते। अतस्तेषामनपचय । तथा परिणामेन च धात्वाख्या देहधारणा प्रसादाश्च मलाश्च वयश्शरीरानतिक्रमेण स्व स्वं प्रमाणमञ्जल्यादिविशेषेणोक्त नातिवर्तन्ते। **प्रसादाः** सारा रक्तमांसकण्डरादीनि। **मला** किट्ट कफलसीकापित्तादि। **वयो**ऽनतिक्रमेणेति बालस्य प्रवृद्धस्य चोक्तात् परिमाणाद्धीनत्व नेति ज्ञापनार्थम्। यथाशरीरमिति महाशरीरेषु प्रसादमला प्रभूता भवन्ति। लघुदेहेष्वल्पा इति ज्ञापयति ४३५

८३ क्रमात्सप्तधात्वग्निषु व्यानेन विक्षिप्तस्याहाररसधातुमलपोषकत्वम् ।

**४३६-तत्राऽऽहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमान स्वात्मभावप्रच्युतिसमनन्तरमेव प्राप्तरक्तादिधातुसंज्ञकः कालवदस्खलितबल-प्रमाणो देहमूर्जयित्वा धातून् धातुमलाश्च पुष्णाति॥ ८३**

४३६-तत्रेत्यादिनाऽस्मिन् क्रमधातुपाकवादे क्रम दर्शयति। आहारस्य प्रधानाग्निना पक्वस्य सत यो रसो भवति स व्यानेन हृदयमूलभवेन वायुना विक्षिप्त प्रेरित स्रोतस्सु विनियुक्त सन् धात्वग्निषु पच्यमान त्रिशिष्टतत्कालव्यपदेशयोग्यस्वरूपप्रच्युत्यैककाल प्राप्तरक्तादिधातुसंज्ञ कालवदविच्छिन्नवाही धातून् रक्तादीन् धातुमलांश्च कफादीन् पुष्णाति । रक्त रक्ताग्नेरेव पाकेन भवति । मांस मांसाग्नेरेवेत्येवमादि यथास्वशब्दार्थ । देहमूर्जयन् शरीर प्राणयन् ४३६

**टिप्पणी**-च चि १५ ३६

८४ मूत्रपरीषोत्पत्ति. ।

**४३७-अथान्नकिट्टमच्छं मूत्रं घनं शकृत् ॥ ८४**

४३७-अथेत्यादिना प्रसादमलयोर्विभागं दर्शयति। यो यस्य पाकात् प्रसाद स तस्य सारो यो मल स किट्ट । सुबोधम् ४३७

८५ रसस्य सारकिट्टे।

**४३८-रसस्य सारो रक्तं मल. कफो लसीका च ८५**

८६ रक्तस्य सारकिट्टे।

**४३९-रक्तस्य सारो मांस कण्डराः सिराश्च मलः पित्तम्॥ ८६**

८७ मांसस्य सारकिट्टे।

**४४०-मांसस्य सारो मेदस्त्वचो वसा च किट्टं कर्णाक्षिनासिकास्यरोमकूपप्रजननमलाः ॥ ८७**

८८ मेदस सारकिट्टे।

**४४१-मेदस. सारोऽस्थिस्नायुसन्धय किट्ट स्वेद. ८८**

८९ अस्थ्न सारकिट्टे।

**४४२-अस्थ्न सारो मज्जा किट्टं केशरोमनखाः ॥ ८९**

९० मज्ज्ञ सारकिट्टे।

**४४३-मज्ज्ञस्तु सार' शुक्रं मलोऽक्षिविट्त्वचां स्नेह. ॥ ९०**

४३८-४४३-अन्नमलस्य घनाच्छभेदेन द्वैविध्यम्। लसीका जलसदृशी। वसा स्वच्छस्नेह । कर्णादिपटकस्य मलशब्देन सबन्ध । कर्णादिषु मलो दृश्यत एव । प्रजनन मेहनम्। सन्धयोऽस्थिभागा पूर्वमुक्ता।अक्ष्यादे स्नेहो मल ४३८-४४३

९१ शुक्रस्य सार ।

**४४४-शुक्रस्य सारमोजः। अत्यन्तशुद्धतयाऽस्य मलाभाव.। अन्ये पुनरत एव तस्य नेच्छन्ति पाकम्। अपरे पुनः शुक्रसार गर्भमेवामनन्ति॥ ९१**

४४४-शुक्रस्य तु क्रमेण सारसारत्वाच्छुद्धतया मलाभाव । अपरे आचार्या । अत सारादपि सारतरत्वाद्धेतो शुक्रस्य पाक नेच्छन्ति। अन्ये त्वाचार्या शुक्रस्य सारो गर्भ इत्यामनन्तीति ४४४

**टिप्पणी**-च सू २८ ४-चि १५ १६-१९

९२ अग्नेराहाररसस्य बहल्पतया पञ्चात्मकस्य वायोरुत्पत्ति ।

**४४५-वायु पुनरग्नेराहारस्य च बह्वल्पतया तस्मात्तस्मान्मूर्छनाविशेषादमूर्त' शब्दवानीषच्छब्दः प्रचुरोऽल्पो वा पञ्चात्मा कोष्ठे प्रादुर्भवति ॥ ९२**

४४५-आध्यात्मिकाना भावाना सभवोक्तिप्रसङ्गे वायोर्द्वितयेन प्रकारेण सभव उच्यते-वायु कोष्ठे प्राणादिभेदेन पञ्चात्मा प्रादुर्भवति । कुतो हेतो ? आभ्या मूर्छनाविशेषात् । कथमाह-अग्नेर्बहुतया कदाचिदग्नेः समत्वेऽप्याहारस्याल्पतया च । वायु कुतश्चिन्मूर्छनाविशेषादमूर्तोऽपि सच्छब्दवान् भवति। कुतोऽपीषच्छब्द । कुतोऽपि प्रचुर' । कुतोऽप्यल्प इति । अमूर्ताऽकठिन ४४५

९३ ' सर्वेऽन्नमया भावा ' इति सिद्धान्तोपसहार. ।

**४४६-एव च कृत्वाऽन्नमयो एव देहे सर्वे भावाः,।**

८४ प्याय्यमा°-ख ८५ °तुसञ्ज्ञ का°-क ८६ केशा लोमानि नखा । म°-क ख. ८७ °स्य सार ओज. । अ°-क. ८८ °द्धतया चास्मिन्म°-क. ख.८९ °नः शुक्रस्य सा°-क. ९० °च्छब्दप्रचु°-क ख. ९१ त्वा देहेऽन्नमया एव स°-क.

तेनैव चदमेव चिरेण यासम तर्वाहि शरीरयन्त्रमन वरतप्रवाहेण स्वास्थ्यन९पिचययुक्त यावत्कर्मोपादान याप्यते। अन्यथा त्वन्नरसोत्क्षेपणाद्विवद्धस्रोतसा वा यथावदनभिसंधीयमानधातुप्रवाहेम तरा व्यवच्छिद्यते। व्याधिमाजन वा भवति॥ ९३

४४६-तस्मात्सर्वे शारीरा भावा अन्नमया। तेनैव चान्ने नाविच्छिन्नप्रवाह। इदमन तराक्तेन क्रमेण शरीर विपरिणमति। अध्यात्मत्यात्मनि। बहिर्बहिर्भागे। शरीरयन्त्रक याप्यत इति सबन्ध। किंभूत शरीरयन्त्रक याप्यत इत्याह स्वास्थ्येन बलेनोपचयेन च युक्तम्। एतच्च यावत्कर्मोपादान माह तद्धेतुकर्मपरिक्षयात्। अन्यथेत्यादि सुबोधम्। इति क्रमधातुवाद ४४६

९४ अन्नरसादेव सकलधातूना युगपदुत्पत्तिरिति मता तरोप यास।

४४७-अन्येतु वर्णयन्ति अभ्यवहृतमात्रस्याऽऽहारस्य कण्ठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य यो य एवाशु कायाग्निनाऽवलीढ पाकमुपनीयते तस्य तस्यैव प्रसाद। यो रस रसोऽभिनिर्वृत्तिसमनन्तर सम सम स्वधातुषु संवृतासंवृते प्रविसृतो विवृतमुखेषु वास्तेषु स्रोतस्सु भूयान् नयमतर चावति पर्यायेणेतरेष्वपि। एवमन्नरस एव साक्षात्सर्वधातून् कनचिदेव कालभदेन पुष्णाति। न पुनर्धातवो धात्व तरता स्वरूपोपमर्देन प्रतिपद्य त इति॥ ९४

४४७-अ ये पुनराचार्या अन्नरसादेव सर्वधातुसंभव वर्णयन्ति। न च धातोर्धात्वन्तरादुत्पत्तिमिच्छन्ति। कथ मित्याह-अभ्यवहृतमात्रस्येत्यादि। य एवाहारभाग काष्ठपाक्षिमन तराग्निना मवध्यते तस्यैव तेन पक्वस्य या सार स तदैव स्वधातुस्रोतस्स्वनुगच्छति। कवल त्वयं विशेष। विवृतमुखेषु असंवृतेषु स्रोतस्सु सारसमव देशासन्नेषु च प्रथममवति भूयान्वा वेति। इतरेषु संवृत मुखेषु दूरेषु च विपर्ययेण। स्वपर्यायेण चान्यथ। एवम स्मिन् पक्षे केवलमविकृतरयान्नसारेण सकलधातुपरिपाक त्वमुक्तम्। यथोत्तर तु धातुस्रोतसा संवृतमुखत्वात् दूरदूरतरत्वाच्च कालभेद अङ्गीकृत एव। तेन द्वयोरपि पक्षयोर्ध तया न युगपद्धातुसंभव। एकत्र धातोर्धात्व तरोत्पादाद न्यत्र संवृतत्वदूरत्वाभ्यामिति। सुबोधम् ४४७

९५ बलभेदेनाग्नेश्चातुर्विध्यम्।

४४८-अग्निस्तु बलभेदेन चतुर्विधो भवति। समो विषमस्तीक्ष्णो मन्दश्च॥ ९५

९६ समाग्निलक्षणम्।

४४९-तत्र समो य सम्यगेवोपयुक्तमन्न सम्यक् पचति॥ ९६

९७ विषमाग्निलक्षणम्।

४५०-विषमोऽसम्यग् युपयुक्त पचति सम्यगपि च न पचति॥ ९७

९८ तीक्ष्णाग्निलक्षणम्।

४५१-तीक्ष्णोऽसम्यग् युपयुक्तमाशु पचति। स एव वर्धमानोऽत्यग्निर्भवति॥ ९८

९९ मन्दाग्निलक्षणम्।

४५२-म दस्तु सम्यगप्युपयुक्तमुदरगौरवाध्मानावि बन्धादान्त्रकूजनमुखशोषदौर्बल्यस्तम्भादीन्यामलिङ्गानि दर्शयित्वा चिरात् पचति॥ ९९

१०० बाह्येनापि पचनदृष्टा तेना तराग्निसरक्षणोपदेश।

४५३-बाह्येनापि च ज्वालाङ्गारात्मकेनाग्निना नैकाकार सर्वदा पाको भवति। किमुतान्तराश्रयेणोष्णात्मना समेनापि। तस्मात्त प्रयत्नतो रक्षेत्॥ १००

४४८-४५३-अग्निस्त्विति-बलभेदेनेति अग्निचातुर्विध्यकारणम्। तत्रेत्यादिनाऽस्याग्निचतुष्टयस्य लक्ष णमुच्यते। समो नित्यधर्मा इति च। सन्नान्नरक्षामात्राशित्या युक्तप्रचार। उदरगौरवादय आमलिङ्गान्याग्निमान्द्यानि च। बाह्येनापीत्यादिना कोष्ठस्याग्नेः प्रयत्नपरिरक्षणीयत्व दर्शयति ४४८-४५३

१०१ अग्नीना रक्षणम्। वैषम्ये चिकित्सा च।

४५४-तत्र प्रवरेण सात्म्यन्न सम यथाभेवमपरेणेतरान् क्रमश सात्म्यमापाद्य प्रवरेण परिपालयेद्दोषोपक्रमणीयोक्तेन च वातादिसाधनेन ग्रहणीरोगविहितैश्चौषधयोगैरामयोगैरिति। भवति चात्र-॥ १०१

४५४-तत्रेति निर्धारणे। समसुत्कृष्टमाग्निमुक्तेन सात्म्येन संवर्धयेत्। इतरानितरान् विषमादीनग्नीनितर। प्रवरेण सारतनासवरसारयेन यथादाप सात्म्यमापाद्य प्रवरेण परिपालयेत्। दोषोपक्रमणीयोक्तया वातचिकित्सया विषमम्। पित्तचिकित्सया तीक्ष्णम्। कफचिकित्सया च मन्द चिकित्सेत्। वातादिग्रहणीदोषोक्तेन विधानेन क्रमेण विषमादीनौषधयोगैरामयोगैश्च। भवति चात्रेति पद्यारम्भ इति ४५४

१०२ स्रोतसा लक्षणम्।

४५५-स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च॥

१०३ स्रोतोदूषक आहार

४५६-आहारश्च विहारश्च य स्याद्दोषगुणै सम।
धातुभिर्विगुणो यश्च स्रोतसा स प्रदूषक॥

१०४ स्रोतोदुष्टेलक्षणम्।

४५७-अतिप्रवृत्ति सङ्गो वा सिराणा ग्रन्थयोऽपि वा।
विमार्गतो वा गमन स्रोतसा दुष्टिलक्षणम्॥

---

९२ मोंपादन या -क ९३ पु संवृतासंवृते प्र -क ९४ ष्वपु द्वारे स्रोत -क ९५ भ्वति।-प -क ९६ पयोयुक्त -क ख ९७ स्वमवर।-क ९८ श सात्म्यमा -क ख

४५५-४५७-स्रोतांसि स्वस्य वातोर्वर्णेन समानि। रक्तस्रोतांसि रक्तवर्णानि। मांसस्रोतांसि मांसवर्णान्येव सर्वत्र वाच्यम्। कानिचित् स्थूलानि, कानिचिदणूनि सूक्ष्माणि। प्रतानसदृशानि वल्लीवदनेकभङ्गीप्रवाहयुक्तानि। तेषां च स्रोतसामाहारो विहारश्च प्रदूषक। किंभूत आह-दोषस्य वातादीनामन्यतमस्य गुणे सम, तथापि यो वातादीनामन्यतमस्य समगुणोऽपि धातुभिर्विगुण। यस्य धातोर्य एवाहारो विहारश्च गुणैर्विपरीत. स एव तस्य स्रोतसां दूषक ४५५-४५७

१०५ स्रोतोद्वाराणां लक्षणम्।

**४५८-बिसानामिव सूक्ष्माणि दूरं विप्रसृतानि च।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते॥ १०७**

४५८-सुबोधम् ५४८

१०६ अन्नस्य शुक्रत्वप्राप्ते काल।

**४५९-केचिदाहुरहोरात्रात् षडहादपरे परे।**
**मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिभिः॥**
**वृष्यादीनि[100] प्रभावेण सद्य शुक्रादि कुर्वते।**
**प्रायः करोत्यहोरात्रात्[101] कर्मान्यदपि भेषजम्१०६**

४५९-अथान्नस्य सारं कियता कालेन सप्तधातूनभिव्याप्नोतीत्याह केचिदित्यादिना। मतत्रयमेतत्॥ पाकक्रमादिभिर्धातुपरिणते स्वल्पैर्दिनैरसम्भव प्रदर्शयति। ननु चैकस्मिन्नेवाह्नि वृष्यादीनां शुक्रादिकर्तृत्वं दृष्टं तत् कथमित्याह-वृष्यादीनीत्यादि। **प्रभाव** सर्वातिशायिनी शक्ति। एकेनादिशब्देन वस्यतर्पणादीनां ग्रहणम्। द्वितीयेन बलतृप्त्यादीनां ग्रहणम्। एकाह षडहात्रमासभेदेन मतत्रये स्थिते प्रभावादेव वाहट. सर्वशास्त्रसिद्धान्त दर्शयति-प्राय इत्यादिना। न केवलं वृष्यादि, यावदन्यदपि भेषजं प्राय अहोरात्रादेव कर्म करोति। अहोरात्रमतिक्रम्य घृतलेहादीनां यद्यपि मात्राभ्यासेन रोगोपशमाख्यकार्यनिर्वृत्तिस्तथापि तेषां दिनानुदिनं कार्यकर्तृत्वं विद्यत एवेति प्रदर्शनार्थं प्रायोग्रहणम् ४५९

१०७ धातूनां मला।

**४६०-कफः[102] पित्तं मलः खेषु प्रस्वेदो नखरोम च।**
**स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मला.॥**

४६०-पूर्वोक्तमेव सग्रहश्लोकेनाह—**कफ इत्यादि।** कफादीनि रसादीनां क्रमेण मलानि रसस्य कफो रक्तस्य पित्तम्। मांसस्य कर्णनासिकादिस्रोतोमलानि। मेदस प्रस्वेद। अस्थ्नो नखरोम। मज्ज्ञो नेत्रादिस्नेह। पूर्वस्यैव सग्रहादपुनरुक्तम् ४६०

१०८ समाधर्मीना लक्षणम्।

**४६१-सम. समाने स्थानस्थे विषमोऽग्निर्विमार्गगे।**
**पित्ताभिमूर्च्छिते तीक्ष्णो मन्दोऽस्मिन्कफपीडिते**

४६१-अविकृत समान समस्याग्ने कारणम्। विकृतस्तु विषमादीनाम् ४६१

१०९ अग्निमूले मरणजीवने।

**४६२-शान्तेऽग्नौ म्रियते, युक्ते चिरं जीवत्यनामयः।**
**रोगी स्याद्विकृते तस्मात्त प्रयत्नेन पालयेत्॥**

**इति वैद्यपतिसिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां शारीरस्थाने सिराविभागो नाम षष्ठोऽध्यायः ८**

४६२-सुबोधमन्यत् ४६२

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां शारीरस्थाने षष्ठोऽध्याय.॥**

# मर्मविभागः सप्तमोऽध्यायः।

## ( उपोद्धातः )

पूर्वमेवाध्यायारम्भप्रयोजनमुक्तम्।

१ प्रतिज्ञा।

**४६३-अथातो मर्मविभागं नामाध्यायं व्याख्यास्याम.। इति ह स्माहुरात्रेयादयो महर्षय.॥ १**

२ मर्मणां सख्या।

**४६४ सप्तोत्तरं मर्मशतम्॥ २**

४६४-सर्वस्मिञ्छरीरे सप्तोत्तरं मर्मणां शतम् ४६४

३ मर्मणां स्थानानि।

**४६५-तत्र चतुश्चत्वारिंशच्छाखासु। षड्विंशतिरन्तराधौ। सप्तत्रिंशदूर्ध्वम्॥ ३**

४६५-तत्र शाखाचतुष्टये प्रत्येकं शाखायामेकादश मर्माणि। आगुदादा चाक्षकसन्धे षड्विंशति। ग्रीवादौ सप्तत्रिंशत्। एकस्मिन् सक्थ्नि एकादशानां मर्मणां विभागा प्रदर्श्यन्ते। एतेन शाखात्रये तथैवानुमन्तव्यम् ४६५

९९ °क्रमादिति। वृष्य°-ख, °क्रमादिभिरिति। वृ°-क १०० °नि प्रभावाच्च स°-क, °नि प्रभावात्तु स°-ख. १०१ °त्राद्यदन्यदपि भेष°-ख १०२ कफ पित्तमित्यादि ग्रन्थ कखपुस्तकयोर्नास्ति।
१ °ग शारीर व्या°-क. ख.

# मर्मशारीरम्।



स्थपनी
अधिपतिः
आवर्तौ
अपाङ्गः
उत्क्षेपौ
मन्या
शङ्खः
सिरामातृका
मन्या
सिरामातृका
नीला
नीला
अपस्तम्भः
कक्षाधरः
स्तनरोहितम्
हृदयम्
उर्वी
स्तनमूलम्
उर्वी
कूर्परम्
आणिः
नाभिः
बस्तिः
लोहिताक्षम्
इंद्रबस्तिः
विटपम्
मणिबन्धः
मणिबन्धः
कूर्चशिरः
कूर्चः
तलहृदयम्
क्षिप्रम्
उर्वी
आणिः
जानु
जानु
गुल्फः
गुल्फः

(शाखामर्माणि)
४ तलहृदय नाम मर्म।
**४६६–अथैकैकस्मिन् सक्थ्नि मध्यमाङ्गुलिमभितो मध्ये पादतलस्य तलहृदयं नाम मर्म। तत्र विद्धस्य रुजया मरणम्॥४**
४६६–पादतलमध्ये मध्यमाङ्गुल्यभिमुखेन तलहृदय नाम मर्म। तत्र विद्धस्य रुजया मरणम् ४६६
५ क्षिप्रमर्म।
**४६७–अङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रम्। तत्राऽऽक्षेपकेन मरणम्॥५**
४६७–क्षिप्रे विद्धस्याक्षेपण मरणम्। आक्षेपो वातव्याधिषु वक्ष्यमाणलक्षण ४६७
टिप्पणी–वातव्याधीति अ स नि १५
६ कूर्चमर्म।
**४६८–क्षिप्रस्योपरि द्व्यङ्गुल उभयत कूर्च। तत्र पादस्य भ्रम।वेपने भवत॥६**
४६८–कूर्चे क्षिप्रस्योपरि द्व्यङ्गुल। उभयत इति पाद पृष्ठात् पादतलं यावत्। तत्र कूर्चे विद्धस्य पादभ्रम।वपने भवत। वेपन कम्पनम् ४६८
टिप्पणी–वेपनमिति– ९स्तु। किंचित्क पनम। वेपन मकदेशक पनम्' इति चक्र (च चि २४ १ )
७ कूर्चशिरोमर्म।
**४६९–गुल्फस धेरध कूर्चशिर। तत्र रुजाशोफौ॥७**
४६९–गुल्फस धेरध कूर्चशिरो नाम मर्म। तत्र रुजा शोफौ भवत। तत्रेत्यत्र विद्धस्येत्यनुवर्तते ४६९
८ गुल्फमर्म।
**४७०–पादजङ्घयो स धाने गुल्फ। तत्र रुक् स्तब्धसक्थिता षण्ढता वा॥८**
४७०–पादस्य जङ्घायाश्च सन्धाने स्थितो गुल्फ रुगादिकर। षण्ढता अयोपिद्योग्यत्वम् ४७०
९ इन्द्रबस्तिमर्म।
**४७१–पार्ष्णिप्रभृति द्वादशभिरङ्गुलैर्जङ्घामध्ये इन्द्रबस्ति। तत्र शोणितक्षया मरणम्॥९**
४७१–जङ्घामध्ये तु इन्द्रबस्ति। तत्र रक्तक्षया मरण भवति ४७१

१० जानुमर्म।
**४७२–जङ्घोर्वो स धाने जानु। तत्र खञ्जता॥१०**
४७२–जङ्घोर्वो सङ्गमे स्थित जानु। तत्र खञ्जता भवति। खञ्जो विकृतपाद ४७२
११ आणिमर्म।
**४७३–जानुन उपर्यङ्गुलादूर्ध्वमुभयत आणि। तत्र शोफाभिवृद्धिस्त स्तब्धसक्थिता च॥११**
४७३–आणि अप्युभयत ऊर्ध्वं जानुन त्र्यङ्गुलादूर्ध्व द्वौ दिशौ याप्य वतत इत्यर्थ। रुगादिकर ४७३
१२ उर्वीमर्म।
**४७४–ऊरुमध्ये उर्वी। तत्र रक्तक्षयात्सक्थिशोष १२**
४७४–ऊरुमध्य स्थिता उर्वी। तद्वेधाद्रक्तक्षयात्सक्थिशोष ४७४

१३ लोहिताक्षमर्म।
**४७५–ऊर्ध्वमधो वक्षणस धेरूरुमूले लोहिताक्षम्। तत्र रक्तक्षयात् पक्षाघात॥१३**
४७५–ऊरोर्मूले वक्षणस धेरधस्तात् लोहिताक्षम्। तत्र रक्तक्षयात् पक्षाघातो भवति ४७५
१४ विटपमर्म।
**४७६–वंक्षणवृषणयोर्मध्ये विटपम्। तत्र षाण्ढ्यमल्पशुक्रता वा॥१४**
४७६–वक्षणवृषणयोर्मध्य विटप नाम। तत्र षण्ढता अथवा अल्पशुक्रता भवति ४७६
१५ बाहुमर्माणि।
**४७७–सक्थिवद् बाह्वा॥१५**
४७७–इति तलहृदयक्षिप्रकूर्चकूर्चशिरो गुल्फ इन्द्रबस्ति जान्वाण्युर्वीलोहिताक्षविटपा एकादशैकस्या शाखाया मर्माणि तद्वदेव शाखान्तरेऽपि विज्ञेयम् १५

१६ बाहुमर्माणि विशेष।
**४७८–विशेषस्तु–गुल्फो मणिबन्धतथा जानुकूर्परम्। तयोर्मध्ये कुणिता॥१६**
४७८–केवल बाह्वा केषाञ्चिन्मर्मणा विशेष–तदुच्यते यथा जङ्घाचरणयो स धि गुल्फ तथा करप्रपाण्यामणिबन्ध। यथा जङ्घोर्वा सङ्गमे जानु, तथा प्रपाणिप्रबाहुमध्य कूर्पर। जानुनि विद्धे यथा खञ्जता कूर्परे विद्धे तथा कुणिता। कुणिर्विकृतकर ४७८
१७ कक्षाधरमर्म।
**४७९–विटपवच्च कक्षाक्षमध्ये कक्षाधार। तत्र कुणित्वम्॥१७**
४७९–तथा वक्षणवृषणयोर्मध्ये विटप तथा कक्षाक्षमध्य कक्षाधर। तस्मिं विद्धे कुणित्वम् ४७९

(अन्तराधिमर्माणि)
१८ गुदमर्म।
**४८०–वातवर्चोनिरसन स्थूलान्त्रविबद्धो गुद तत्र सद्यो मरणम्॥१८**
४८०–गुद स्थूलान्त्रे प्रतिबद्धो वातादिनिरसनकर्मा। तस्मिन्विद्धे सद्यो मरणम् ४८०
१९ बस्तिमर्म।
**४८१–अल्पमांसशोणिताऽभ्यन्तरत कट्या धनुवक्र**

२ थैकस्मि –ग, ३ ता मन्ता वा मन्तो वा–क, ता जडता वा–ग ४ ति प्रतिक्र –क ५ ध्ये ऊर्वी त –क ६ ऊर्वा –क ७ तारन्यम्। तत्र र –क ख ८ क्षाधर –ग

**एकद्वारोऽधोमुखो बस्ति । तत्रापि सद्योमरणमश्मरीव्रणादृते । तत्राप्युभयतो विद्धे न जीवति । एकतो भिन्ने मूत्रस्रावी व्रणो भवति । स तु यत्नेनोपक्रान्तो रोहति ॥ १९**

४८१-बस्तिरल्पमांसशोणित· कट्या मध्ये पृष्ठतो वक्रो धनुर्वत् । द्वारो मुख स चास्यैक अधोमुखश्च । तत्रापि वस्तौ विद्धे मरण भवत्यश्मरीव्रणादृते । तत्राप्यश्मरीव्रणे द्वाभ्या मार्गाभ्या विद्धे वस्तौ मरणमेव । अश्मरीव्रणेऽप्येकतो विद्धे वस्तौ मूत्रस्रावी व्रणो भवति । सुबोधम् ४८१

२० नाभिमर्म ।

**४८२-पक्वामाशयमध्ये नाभि. । तत्रापि सद्यो मरणम् ॥ २०**

४८२-न केवल बस्तिरेव विद्ध सद्योघ्नो यावन्नाभिरपीत्यपिशब्दस्यार्थ ४८२

२१ हृदयमर्म ।

**४८३-कोष्ठवक्षसो. स्तनयोश्च मध्ये सत्त्वरजस्तमोधिष्ठानमामाशयद्वारं हृदयम्। तत्रापि सद्यो मरणम्॥ २१**

४८३-कोष्ठवक्षसो स्तनयोश्च मध्ये स्थित सत्त्वरजस्तमसामधिष्ठानमामाशयद्वार तु **हृदयम्** । तत्रापि विद्धस्य सद्यो मरणम् ४८३

२२ स्तनमूलमर्म ।

**४८४ स्तनयोरधस्ताद्द्व्यङ्गुलमुभयतः स्तनमूले । तयो. कफपूर्णकोष्ठस्य मरणम् ॥ २२**

४८४-**तयोरिति** । स्तनमूलयोर्विद्धयो. ४८४

२३ स्तनरोहितमर्म ।

**४८५ स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयत. स्तनरोहिते । तयो शोणितपूर्णकोष्ठस्य मरणम् ॥ २३**

४८५-चूचुकौ स्तनमुखौ श्यामौ ४८५

२४ उपस्तम्भौ मर्मणी ।

**४८६-उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ।तयोः शोणितपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम् ॥ २४**

४८६-उरसि उभयतो द्वे वातवहे नाड्यौ **अपस्तम्भो** नाम्ना मर्मणी ४८६

२५ अपालापमर्म ।

**४८७-अंसकूटयोरध· पार्श्वयोरुपरि भागयोरपालापौ तयो· पूयत्वमापन्नेन रक्तेन मरणम् ॥ २५**

४८७-असपार्श्वान्तरयोर्मध्ये किञ्चित् पार्श्वभागे **अपालापौ** तयोर्मध्ये विद्धयोर्न सद्यो मरणम् । अपि तु पूयत्वमापन्ने रक्ते ४८७

२६ कटीकतरुणे मर्मणी ।

**४८८-पृष्ठवंशमुभयत. प्रतिश्रोणीकर्णावस्थिनी कटीकतरुणे । तयोः शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपो म्रियते ॥ २६**

४८८-पृष्ठवंशमुभयत पृष्ठवंशस्य द्वयो पार्श्वयोय प्रतिश्रोणी कर्णावस्थिनी स्थिते ते **कटीकतरुणे** मर्मणी । श्रोण्याः कर्णाकृतित्वात् **श्रोणीकर्णौ** ४८८

२७ कुकुन्दरमर्म ।

**४८९-पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयत. कुकुन्दरौ । तयोः स्पर्शाज्ञानमधःकाये चेष्टानाशश्च ॥ २७**

४८९-पृष्ठवंशस्य पार्श्वयोर्मर्मणी **कुकुन्दरौ** । तौ च जघनाद्बहि. कट्या पश्चिमो भागो जघनम ४८९

२८ नितम्बाभिधे मर्मणी ।

**४९०-श्रोणीकर्णयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ । तयोरधःकाये शोफो दौर्बल्य मरणं च ॥ २८**

४९०-पृष्ठवंशस्य द्वयो पार्श्वयो श्रोणीकर्णयोरुपरि पार्श्वान्तरप्रतिबद्धौ पक्वाशयस्य छादने **नितम्बौ** मर्मणी४९०

२९ पार्श्वसन्धी मर्मणी ।

**४९१-अधः पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ये तिर्यगूर्ध्वं च पार्श्वसन्धी । तयो. शोणितपूर्णकोष्ठतया मरणम् ॥ २९**

४९१-पार्श्वान्तरप्रतिबद्धौ। सव्यपार्श्वस्य -सव्ये प्रतिबद्ध । अपसव्यश्चापसव्ये । तत्र चाध ऊर्ध्व· तिर्यक् च प्रतिबद्धौ **पार्श्वसन्धी** । ते च·जघनपार्श्वयोर्मध्ये भवत ४९१

३० बृहत्याख्ये मर्मणी।

**४९२-स्तनमूलयोरार्जवेनोभयत पृष्ठवंश बृहत्यौ । तयो. शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्मरणम् ॥ ३०**

४९२-पृष्ठवंशस्य द्वयो पूर्वोक्तयो स्तनमूलयोरार्जवेन तिर्यक् स्पष्टदिग्ग्रहणेन **बृहत्यौ** मर्मणी ४९२ ।

३१ असफलकाख्ये मर्मणी ।

**४९३-पृष्ठवंशमुभयतो बाहुमूलसबद्धे अंसफलके । तयोर्बाहुस्वापशोषौ ॥ ३१**

४९३-असफलके पृष्ठवंशस्य द्वयो पार्श्वयोर्बाहुमूले च प्रतिबद्धे तयोर्व्यध इति सर्वत्र सबन्ध ४९३

३२ असाख्ये मर्मणी ।

**४९४-ग्रीवाबाहुशिरोमध्येऽसपीठस्कन्धबन्धनावसौ। तयो. स्तब्धबाहुता ॥ ३२**

४९४-**असौ** ग्रीवादिमध्यगौ स्कन्धयो असपीठयोश्च बन्धनौ । एव गुदो बस्तिर्नाभिर्हृदय द्वे स्तनमूले द्वे स्तनरोहिते द्वावपस्तम्भौ द्वावपालापौ द्वे कटीकतरुणे द्वे कुकुन्दरे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे असफलके द्वावसाविति पड्विंशतिर्मर्माण्यन्तराधो ४९४

( ऊर्ध्वमर्माणि )

३३ द्वे नीले द्वे मन्ये मर्मणी ।

**४९५-कण्ठनाडीमुभयतश्चतस्रो धमन्य. । तासां द्वे**

१ °शयच्छाद°-ग

# मर्मशारीरम्।



विधुरम्
कृकाटिका।
कृकाटिका।
अंस
अंस
अंसफलक
अंसफलक
बृहती
बृहती
कूर्परम्
कूर्परम्
पार्श्वसन्धि
पार्श्वसन्धि
नितम्ब
नितम्ब
कुकुन्दरे
मणिबन्ध
कटीकतरुणम
कटीकतरुणम्
गुदम्
ऊर्वी
ऊर्वी
आणि
आणि
जानु
जानु
इन्द्रबस्ति
इन्द्रबस्ति
गुल्फ
गुल्फ

नील, द्वे मन्ये। तासु मूकता, स्वरवैकृत्य, रसाग्राहिता वा भवति ॥ ३३

४९५–ऊर्ध्वमु यत-कण्ठनाड्यामकस्मिन् पार्श्वे एका नीला नाम सिरा। एका मन्या तथैव द्वितीया। तासां व्ये मूकत्वादिकं भवति ४९५

३४ मातृकामर्माणि।

४९६–ग्रीवायामुभयतः पृथक्चतस्रः सिरा मातृकास्तासु सद्यो मरणम् ॥ ३४

४९६–ग्रीवाया द्वयोः पार्श्वयोरष्टौ सिरा मातृका ह्या ४९६

३५ कृकाटिकाख्ये मर्मणी।

४९७–शिरोग्रीवयोः सन्धाने कृकाटिके। तयोश्चलमूर्धता ॥ ३५

४९७–उभयपार्श्वे शिरसो ग्रीवायाश्च सन्धाने कृकाटिके मर्मणी। तत्र विद्धस्य चलशीर्षता ४९७

३६ विधुराख्ये मर्मणी।

४९८–कर्णपृष्ठयोरधः संश्रिते विधुरे। तयोर्बाधिर्यम् ३६

४९८–कर्णयोरधो विधुरे ४९८

३७ फणाख्ये मर्मणी।

४९९–घ्राणमार्गमुभयतः श्रोत्रमार्गप्रतिबद्धावभ्यन्तरतः फणौ। तयोर्गन्धाज्ञानम् ॥ ३७

४९९–घ्राणस्रोतसाद्वयोः पार्श्वयोरन्तः शिरसि गलप्रदेशे फणौ नाम्ना मर्मणी। तौ च स्रोतसा प्रतिबद्धौ। तयोर्व्यधे गन्धाज्ञानम् ४९९

३८ अपाङ्गाख्ये मर्मणी।

५००–भ्रुवोः पुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ। तयोरान्ध्यम् ॥ ३८

५००–भ्रुवोः सर्वान्धिनोः पुच्छा तयोरधो तयोरपि अक्ष्णोश्च बहिरपाङ्गौ मर्मणी ५००

३९ शङ्खाख्ये मर्मणी।

५०१–भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ। तयोः सद्यो मरणम् ॥ ३९

५०१–ललाटे भ्रुवोः पुच्छा तयोरुपरि कर्णमनु कर्णमीलि शङ्खौ नाम मर्मणी। तयोर्व्यधे सद्यो मरणम् ५०१

४० आवर्ताख्ये मर्मणी।

५०२–भ्रुवोरुपरि निम्नयोरावर्तौ। तयोरान्ध्यं दृष्ट्युपघातो वा ॥ ४०

५०२–भ्रुवोरुपरि निम्नयोः प्रदेशयोरावर्तौ नाम्ना द्वे मर्मणी। तयोर्व्यधे आन्ध्यमदर्शन, अथवोपघातमात्र दृष्टेवा ५०२

४१ उत्क्षेपाख्ये मर्मणी।

५०३–शङ्खयोरुपरि केशान्त उत्क्षेपौ। तयोः सशल्यो वा पाकात् पतितशल्यो वा जीवत्यनुद्धृतशल्यः ॥ ४१

५०३–शङ्खयोरुपरि केशान्तसमानमर्यादे उत्क्षेपौ मर्मणी। तयोर्विद्धः सन् सशल्यो जीवति पाकाद्वा स्वयं पतिते जीवति उद्धृतशल्यो न जीवेत् ॥ ५०३

४२ स्थपन्याख्यं मर्मणी।

५०४–भ्रुवोर्मध्ये स्थपनी। तत्रोत्क्षेपवत् ॥ ४२

५०४–भ्रुवोर्मध्ये नाम स्थपनी मर्म। तत्रोत्क्षेपवत् सशल्यो जीवत्। पाकात् पतितशल्यो वा। तत्र न उद्धृतशल्यो न जीवेत् ५०४

४३ सीमन्ताख्यानि कपालास्थिसमानि।

५०५–पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम। तत्रोन्मादभयचित्तनाशैर्मरणम् ॥ ४३

५०५–पञ्च शिरसि कपालानां सन्धयः पञ्च मर्माणि। तत्र द्वौ ललाटपार्श्वयोः केशान्तावस्थितौ द्वौ कृकाटिकापार्श्वयोः पश्चिमः सन्धी। तयोरुपरि तिर्यगनुमस्थि सीमन्तास्तेषु विद्धेषु मोहादिभिर्मरणम् ५०५

४४ शृङ्गाटकाख्यानि मर्माणि।

५०६–जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपाते। तासां मुखानि चत्वारि शृङ्गाटकानि। तेषु सद्यो मरणम् ॥ ४४

५०६–जिह्वादिसन्तर्पणीनां सिराणां तालुनि सन्निपातो भवति। तासां यानि वर्त्मनामपि चत्वारि मुखानि तानि शृङ्गाटकाख्यानि मर्माणि। तत्र व्यधे सद्यो मरणम् ५०६

४५ अधिपतिसंज्ञं मर्म।

५०७–मस्तकाभ्यन्तर उपरिष्टात्सिरासन्धिसन्निपातो रोमावर्तः सोऽधिपतिर्नाम। तत्रापि सद्यो मरणं भवतीति ॥ ४५

५०७–अभ्यन्तरतः सर्वोर्ध्वसिरासन्धीनां सङ्गमो रोमावर्तो नाम मर्म। स एवाधिपत्याख्यः एवं द्वे नीले द्वे मन्ये अष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वौ शङ्खौ[11] द्वावावर्तौ द्वावुत्क्षेपौ एका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटका एकोऽधिपतिः इति आवर्त इत्येतानि सप्तत्रिंशत् शिरसि मर्माणि ५०७

४६ मर्मणां सामान्यलक्षणम्।

५०८–सामान्यलक्षणं पुनर्मर्मणां पीडिते रुजोत्पत्तिर्विषमं च स्पन्दनम् ॥ ४६

५०८–मर्म॥ नाम स्थानं च ज्ञातम्। लक्षणं तु न ज्ञातमतस्तद्विज्ञानाय उच्यते सामान्येनेत्यादि। सर्वमर्मणामिदं लक्षणमित्यर्थः। विषममनवरूपम् ५०८

४७ मर्मविद्धलक्षणम्।

५०९–सामान्येन च–

देहनसुप्तिगुरुता समोहः शीतकामिता।
स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणम्

५०९–नसुप्ति छेदाद्यनवबोधः। संमोहो मूर्च्छा ५०९

---

१० °त चत–क ख ११ °रण भवतीति। मत्स–व

४८ मर्मशब्दनिर्वचनम्।

**५१०-अपि च मरणकारित्वान्मर्म ॥ ४७**

५१०-अपि चेति समुच्चये । मरणकारित्वान्मर्मेति निर्वचनम् ५१०

४९ मांसादिभेदेन पञ्चधा मर्माणि ।

**५११-तत्पुनर्मांससिरास्नाय्वस्थिसन्निपातः । तेन तस्मिन् पीड्यमाने विशेषत प्राणाबाध. । बाहुल्येन तु निर्देश । तस्मान्मांसाद्याश्रयतो मर्माणि पञ्चधा भिद्यन्ते ॥ ४८**

५११-तत् पुनर्मर्म मांसादिसन्निपातस्तेषां मिश्रीभावे नैकत्रावस्थाने तेन हेतुना तस्मिन् पीडितेऽधिक प्राणानामाबाधो भवति । मांसादीनां पञ्चानां यद्यपि मिश्रीभावेन सर्वं मर्म भवति । तथापि योऽयं मांसमर्मसिरा मर्म इत्यादिव्यपदेश स बाहुल्यकृत एव । यत्र मांसस्य बाहुल्य तत्र मांसेन व्यपदेश । यत्र सिराणां तत्र सिराभिरेवमन्यत्रापि वाच्यम् । एव मांसादिभेदेन **पञ्च मर्माणि** ५११

५० मांसमर्माणि ।

**५१२ तद्यथा-तलहृदयेन्द्रबस्तिगुदस्तनरोहितान्येकादश मांसमर्माणि ॥ ४९**

५१२-तत्रैकादश **मांसमर्माणि**-तद्यथा चतुर्षु करचरणेषु चत्वारि तलहृदयानि । चत्वारीन्द्रबस्तय एको गुदो द्वे स्तनरोहित इति ५१२

५१ सिरामर्माणि ।

**५१३-ऊर्वीलोहिताख्यनाभिहृदयस्तनमूलापस्तम्भापालापपार्श्वसन्धिबृहतीनीलामन्यामातृकाफणापाङ्ग—स्थपनीशृङ्गाटकान्येकचत्वारिंशत् सिरामर्माणि ॥ ५०**

५१३—**एकचत्वारिंशत् सिरामर्माणि**। तद्यथा-चतस्र ऊर्व्यश्चत्वारि लोहिताक्षाणि, एका नाभिरेकं हृदयं, द्वे स्तनमूले, द्वावपस्तम्भौ, द्वावपालापौ, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, द्वे नीले[२२], द्वे मन्ये, अष्टौ मातृका ,द्वौ फणौ द्वावपाङ्गिका स्थपनी, चत्वारि शृङ्गाटकानीति ५१३

५२ अस्थिमर्माणि ।

**५१४-क्षिप्रकूर्चकूर्चशिरोविटपकक्षाधराणि बस्त्यसविधुरोत्क्षेपा सप्तविंशति. स्नावमर्माणि ॥ ५१**

५१४—**सप्तविंशति स्नावमर्माणि**। तद्यथा-करचरणेषु चत्वारि क्षिप्राणि, चत्वार कूर्चा , चत्वारि कूर्चशिरांसि, द्वे विटपे, [१४] द्वौ कक्षाधरौ, चत्वार्याणयं , एको बस्ति , द्वावंसौ[२३], द्वे विधुरे, द्वावुत्क्षेपाविति ५१४

**५१५-कटीकतरुणनितम्बांसफलकशंखास्त्वष्टावस्थिमर्माणि ॥ ५२**

५१५—**अष्टावस्थिमर्माणि**। तद्यथा-द्वे कटीकतरुणे, द्वौ नितम्बौ, द्वावंसफलका, द्वा शङ्खाविति ५१५

५४ सन्धिमर्माणि ।

**५१६-गुल्फमणिबन्धजानुकूर्परकुकुन्दरकृकाटिकावर्तसीमन्ताधिपतयो विंशति. सन्धिमर्माणि ॥ ५३**

५१६-**विंशति सन्धिमर्माणि**। तद्यथा-द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वे जानुनी, द्वे कूर्परे, द्वौ कुकुन्दरौ, द्वे कृकाटिके, द्वौ आवर्तौ, पञ्च सीमन्ता , एक अधिपतिरिति ५१६

५५ पुन पञ्चविधानि मर्माणि ।

**५१७-पुनश्च पञ्चधा ॥ ५५**

५१७-तानि च मांसादिभेदेन पञ्चधोक्तानि पुनरन्येन प्रकारेण सद्य प्राणहरत्वादिना पञ्चधोच्यन्ते । (१) कानिचित् सद्य प्राणहराणि । (२) कानिचित् कालान्तरप्राणहराणि । ( ३ ) अन्यानि विशल्यघ्नानि । ( ४ ) अन्यानि वैकल्यजननानि(५)अन्यानि रुजाकराणीति पञ्च प्रकारा ५१७

५६ सद्य प्राणहराणि ।

**५१८ गुदबस्तिनाभिहृदयमातृकाशङ्खशृङ्गाटकाधिपतय एकोनविंशतिः सद्यः प्राणहराण्याग्नेयत्वात्तेषां सप्तरात्राभ्यन्तरं कालः ॥ ५६**

५१८ तत्र सद्य प्राणहराणि गुदबस्तिनाभिहृदयानि चत्वारि, अष्टौ मातृका ,द्वौ शङ्खौ, चत्वारि शृङ्गाटकान्येकोऽधिपतिरित्येकोनविंशतिः। आग्नेयत्वमाशुमरणहेतु । सप्तरात्राभ्यन्तरं प्रथमदिवसादिति ५१८

५७ कालान्तरप्राणहराणि ।

**५१९ तलहृदयक्षिप्रेन्द्रबस्तिवक्षोमर्मकटीकतरुणनितम्बपार्श्वसन्धिबृहतीसीमन्तास्त्रयस्त्रिंशत् कालान्तरप्राणहराणि । सौम्याग्नेयत्वात्तेषां पक्षाभ्यन्तरं कालः । तेष्वपि तु क्षिप्राणि कदाचिदाशु ॥ ५७**

५१९-त्रयस्त्रिंशन्मर्माणि सौम्याग्नेयत्वात् कालान्तरेणविलम्बित प्राणहराणि । पक्षाभ्यन्तरे वा प्रहरादिवशादनियम । तद्यथा-चत्वारि तलहृदयानि, चत्वारि क्षिप्राणि, चत्वार इन्द्रबस्तय , अष्टौ वक्षोमर्माणि स्तनमूलस्तनरोहितापस्तम्भापालापाख्यानि, द्वे कटीकतरुणे, द्वौ नितम्बौ, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, पञ्च सीमन्ता इति, **त्रयस्त्रिंशत्** । तेष्वपि मध्ये क्षिप्राणि सद्य प्राणहराण्यपि भवन्ति ५१९

५८ विशल्यघ्नानि मर्माणि ।

**५२०-उत्क्षेपौ स्थपनी च त्रीणि विशल्यघ्नानि, वायव्यत्वात् । शल्यमुखावरुद्धो हि यावदन्तं वायुस्तिष्ठति तावज्जीवति ॥ ५८**

५२०-**त्रीणि** विशल्यघ्नानि तानि **वायव्यानि** । शल्य आकृष्टे वायोर्व्रणे निर्गमनान्न जीवत्यत एव विशल्य घ्नन्ति न तु सशल्यम् । तत्र द्वावुत्क्षेपावेका स्थपनीति त्रीणि ५२०

१२ ऊर्वीलो°-क, १३ °टपा कक्षा°-क १४ °वदेव वा°-ग.

# मर्मशारीरम् ।


कूर्परम्
अपाङ्ग
स्थपनी
ऊर्वी
फणा
लोहिताक्ष
अपालाप
शृङ्गाटकानि
फणा
असः
हृदयम्
नाभि
इन्द्रवस्ति
मणिबन्ध
बस्ति
ऊर्वी
कूर्चशिर
जानु
तलहृदयम्
कूर्च
क्षिप्रम्
गुल्फ
क्षिप्रम्

५९ विकल्यकराणि मर्माणि ।

५२१—कूर्चजानुकूर्पराण्युर्वीलोहिताख्यविटपकक्षाधरकुकुन्दरासांसफलकनितम्बनालिकाकृकाटिकाविधुरफणापाङ्गावर्ताश्चतुश्चत्वारिंशद्वैकल्यकराणि सौम्यत्वात्। सोमो हि स्थैर्यशैत्याभ्यां प्राणान् धारयति । तान्यपि च कदाचिदभिहतानि मारयन्ति ॥ ५९

५२१—चतुश्चत्वारिंशद्वैकल्यं कुर्वन्ति, सौम्यत्वात् न मारयन्ति । तत्र चत्वारि कूर्चानि द्वे जानुनी, द्वौ कूर्परौ तत्र आणयस्तत्र उर्व्य, चत्वारि लोहिताक्षाणि, द्वौ विटपौ, द्वौ कक्षाधरौ द्वौ कुकुन्दरौ, द्वावंसौ, द्वावंसफलकौ द्वे नाले, द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्ताविति । एतानि चतुश्चत्वारिंशत् कदाचिन्मारयन्त्यतिघातात् ५२१

६० रुजाकराणि मर्माणि ।

५२२—कूर्चशिरोगुल्फमणिबन्धास्त्वष्टौ रुजाकराण्यग्निवायुसोमगुणबाहुल्यात् । अग्निवायू हि विशेषेण रुजाकरौ । सामस्तु प्राणानवलम्बत इत्युक्तम् ॥ ६०

५२२—अष्ट मर्माणि रुजाकराणि साम्याग्निवाय्वात्मकत्वात् । चत्वारि कूर्चशिरांसि, द्वौ गुल्फौ द्वौ मणिबन्धावित्यष्टौ ५२२

६१ आग्नेयत्वहेतुं परित्यजतां केषाञ्चन मर्मविषये मतम् ।

५२३—अन्ये त्वाहु—मांसादीनां पञ्चानामपि विवृद्धानां समवायात्सद्यःप्राणहराणि । एकैकहीनानामल्पानां च क्रमादितराणि स्वभावत एव च ॥ ६१

५२३—अन्ये त्वाचार्या आग्नेयत्वहेतुं परित्यज्य सद्यःप्राणहरत्वे पर्वोक्तमांसादिपञ्चकस्यानूनाधिकभावेन विवृद्धस्य हेतुत्वं वदन्ति । यदा गुदादीनामेकोनविंशतेर्मांसादीनां समानाधिकानां सन्निपातस्तदा सद्यःप्राणहरत्वमित्यर्थः । आदिशब्देनास्थिस्नायुसिरासंधीनां ग्रहणम् । इतराणि कालान्तरप्राणहराणि चत्वार्येकैकेन हीनानां मांसादीनां स्वल्पानां च सन्निपाताद्भवन्तीति । तेन मांसादीनामेकेन हीनानां कालान्तरप्राणहराणि । द्विहीनानां विशल्यघ्नानि । त्रिहीनानां वैकल्यजननानि । एकस्यैव सद्भावाद्रुजाकराणि । सुश्रुत पठति द्वयोः सन्ततादानि, तत्र वक्ष्यामहे ५२३

६२ स्वभाववादिनां केषाञ्चनाचार्याणां मर्मविषये मतानि ।

५२४—अन्ये वदन्ति—प्रतिनियतकर्माणि च सूर्या यस्कान्तोपलानामिवाम्बुवह्निकान्तलोहसंश्लेषास्तथा च छिन्नेषु बहुमर्मस्वपि पाणिपादेषु स्वभावत एव न मृत्युः ६२

५२४—अन्ये त्वाचार्या न सौम्याग्नेयत्वादिकं हेतुं वदन्ति । नापि त्वाशब्दस्य मांसादिसन्निपातम् । अपि तु स्वभावमेव हेतुत्वेनोद्दिशन्ति । यथा चन्द्रकान्तादीनामम्बुजन्मादौ । तथा बहुमर्माश्रये पाणिपादे छिन्नेऽपि मृत्युर्न भवतीत्यत्रापि स्वभाव एव हेतुः ५२४

६३ इतरेषामाचार्याणां मर्मविषये उपपत्तिः ।

५२५—अपरे पुनरत्रापि हेतुमाहु—पाणिपादच्छेदे हि सिराः संकोचमायान्ति । ततोऽल्पासृक्प्रवृत्तेर्जीवितम् । मर्मवधे त्वतिरक्तस्रुतितो वायुवैकृतेन च मरणम् । तस्मान्मर्माभिहतस्य तदङ्गमाशु संधिदेशाच्छेदनीयम् । अतिहतानां तु मर्मणां यथास्वं पूर्वं पूर्वं च कर्म ईषद् हते वा हतानामुत्तरोत्तरमेव ॥ ६३

५२५—अपरे इत्यादि सुबोधम् । तस्मान्मर्मण्यभिहतस्य तदङ्गं यस्मिन् मर्माश्रितं तत् संधिदेशाच्छेदनीयम् । मर्मणि छिन्ने संकुचिता सिरा रक्तं न मुञ्चत्यतो जीवितं न त्यजेत् । तेषां च मर्मणां सद्यःप्राणहरादिकं पञ्चविधं कर्माङ्कितम् । तत्रातिहतानां मर्मणामात्मीयं कर्म पूर्वं पूर्वं च भवति । उदुक्तं भवति—गुल्फादीनामभिहतानां स्वकीयं सद्यःप्राणहरत्वमेव तेषां च पूर्वासम्भवे । तथैवोत्क्षेपादीनामभिहतानां स्वं कर्म कालान्तरप्राणहरत्वं कदाचित्तु पूर्वमपि सद्यःप्राणहरत्वं भवति । उत्क्षेपादीनां स्वं कर्म विशल्यघ्नत्वं न तु पूर्वं सम्भवति । अथवा कालान्तरप्राणहरणमपि । कूर्चादीनामभिहतानां स्वं कर्म वैकल्यकरणम् । कदाचित्तु पूर्वमपि भवति कालान्तरप्राणहरत्वम् । विशल्यघ्नत्वं पूर्वमपि न सम्भवत्यसम्भवात् । कूर्चशिरःप्रभृतीनां चाभिहतानां स्वं कर्म रुजाकरणम् । कदाचित्तु पूर्वमपि भवति वैकल्यकरमित्युक्तमभिहतानां यथास्वं पूर्वं पूर्वं च कर्म । यदा तु तानि मर्माणीषत्क्षाण स्तोकनाभिघातेनाभिहतानि भवन्ति ते वा पर्यन्ते वाभिहतानि भवन्ति तदा तेषामुत्तरमेव । तेन सद्यःप्राणहराणामीषद् ते वाभिहतानामुत्तरं कर्म कालान्तरप्राणहरत्वम् । कालान्तरप्राणहराणामीषद् ते वाभिहतानामनन्तरमुत्तरं कर्म वैकल्यकरत्वम् । विशल्यघ्नत्वं न सम्भवत्यनन्तरमपि । विशल्यघ्नानामीषद्वाभिहतानामुत्तरं वैकल्यकरं कर्म भवति । वैकल्यकराणामीषद् ते चाभिहतानामुत्तरं कर्म रुजाकरणमित्युक्तं यथोत्तरमेवेति ५२५

६४ मर्माणि पुनर्मानभेदेन पञ्चविधानि ।

५२६—पुनश्च पञ्चधा भिद्यन्ते । तद्यथा—६४

५२६—तान्येव मर्माण्येव मानभेदेन पञ्चविधानि ५२६

६५ स्वाङ्गुलमानानि मर्माणि ।

५२७—उर्व्यः कूर्चशिरांसि विटपे कक्षाधरे च द्वादश स्वाङ्गुलोन्मितानि ॥ ६५

५२७—उर्व्यादीनि द्वादश मर्माणि स्वाङ्गुलमानानि चत्वारि चत्वारि द्वे, द्वे इति द्वादश ५२७

६६ षडङ्गुलानि मर्माणि ।

५२८—गुल्फौ मणिबन्धौ स्तनमूले च षडङ्गुलानि ॥ ६६

१५ °ताक्षाविट—क १६ °न्दरांसक—ग १७ °माद्विरात्यन्नानि । एक—क ख १८ हिलोहस—ग ख १९ °मुक्तमें°—ख २० क्षाधरौ च द्वा—क

५२८-गुल्फादीनि षड्त्र्यङ्गुलानि द्वे, द्वे, द्वे इति षट् ५२८

६७ त्र्यङ्गुलानि मर्माणि ।

**५२९-जानुनी कूर्परे च चत्वारि त्र्यङ्गुलानि ॥ ६७**

५२९-जानुद्वय कूर्परद्वय चेति चत्वारि त्र्यङ्गुलानि ५२९

६८ पाणितलसमितानि मर्माणि ।

**५३०-कूर्चौ गुदो बस्तिर्नाभिर्हृदय नीले मन्ये मातृका. सीमन्ताः शृङ्गाटकानि चैकोनत्रिंशत् पाणितलसमितानि ॥ ६८**

५३०-कूर्चादीन्येकोनत्रिंशत् स्वहस्ततलप्रमाणानि ५३०

६९ अर्धाङ्गुलमानानि मर्माणि ।

**५३१-शेषाणि षट्पञ्चाशदङ्गुलदलप्रमाणानि ॥ ६९**

५३१-शेषाणि षट्पञ्चाशदङ्गुलदलप्रमाणानि अङ्गुलदलमर्धाङ्गुलम् । तथा च धन्वन्तरिः पठति 'शेषाणि चाङ्गुलमितार्धसमानि देहे' इति ५३१

**टिप्पणी**—सु. शा ६-२९

७० मतान्तरेण मर्ममानानि ।

**५३२-अन्ये पुनराहुः-॥ ७०**

७१ व्रीहिप्रमाणानि मर्माणि ।

**५३३-व्रीहिप्रमाणानि क्षिप्राणि ॥ ७१**

७२ कलायप्रमाणानि मर्माणि ।

**५३४-कलायप्रमाणाः स्तनरोहितोत्क्षेपा. ॥ ७२**

७३ केचिन्मतेन तिलप्रमाणानि मर्माणीति कथनम् ।

**५३५-तथाऽन्ये तिलप्रमाणान्यपि मर्माणीच्छन्ति ७३**

५३२-स्वधीगम्य शेषम् ५३२-५३५

७४ तन्त्ररीति ।

**५३६-भवन्ति चात्र-॥ ७४**

५३६-भवन्ति चात्रेति श्लोका उच्यन्ते ५३६

७५ अक्षीणायुषा मर्मापघातो नोत्पद्यते ।

**५३७-मर्मण्यासेऽपि देहेऽस्मिन्नायुर्मर्माणि रक्षति ।**
**आयुष्याण्येव सेवेत सदा तस्माद्विचक्षणः ७५**

५३७-अस्मिन् देहे मर्मभि स्पर्शमात्रप्राणहरैर्व्याप्तेऽपि तानि मर्माण्यभिघातादिभ्य आयू रक्षत्यक्षीणायुषा हि मर्मोपतापो नोत्पद्यते । तस्माद्धेतोरायुष्याण्येव वस्तूनि सेवेत विचक्षण । तदेव विद्धमर्मावाधेभ्यो रक्षति ५३७

७६ स्वल्पोऽपि मर्माभिघातोऽतिशयेन बाधते ।

**५३८-मर्माभिघातःस्वल्पोऽपि प्रायशो बाधतेतराम् ।**
**रोगा मर्माश्रयास्तद्वत् प्रक्रान्ता यत्नतोऽपि च ॥**

५३८-यथा मर्मण्यभिघात स्वल्पोऽपि बाधतेतरामतिशयेन बाधते । तथा ये मर्माश्रिता रोगास्ते प्रयत्नेन प्रक्रान्ताश्चिकित्सितुमारब्धास्तद्वत् स्वल्पा अपि बाधन्तेतरामित्यर्थ । तस्माद्यत्नेन पालयेदिति तात्पर्यार्थ ५३८

७७ मर्मभग्नस्य मुमूर्षोर्लक्षणानि ।

**५३९-विक्षिप्यते भृश सीदन् भ्रान्त्यो भ्रमति वेपते ।**
**ऊर्ध्वं श्वसिति कृच्छ्रेण स्रस्तगात्रो मुहुर्मुहुः ७७**
**हृदयं दह्यते चास्य नैकस्थानेऽवतिष्ठते ।**
**मर्मोपघातान्मरणमेतैर्लिङ्गै. समश्नुते ॥ ७८**

५३९-मर्माणि भग्नस्य मुमूर्षोर्मरणलक्षणानि विक्षिप्यते भृश सीदन्नित्यादिनोच्यन्ते । मरणमश्नुते प्राप्नोतीति सबन्ध ५३९

७८ अतिरक्तस्रुतेरपि जीवितस्य हानि ।

**५४०-अमर्मविद्धोऽपि नरश्छेदभेदादिपीडितः ।**
**अतिनिस्सृतरक्तश्च सद्यस्त्यजति जीवितम् ७९**
**अतोऽन्यथा जीवति तु विद्धः शरशतैरपि ।**

५४०-न केवल तु मर्मविद्ध एव जीवित त्यजति यावदमर्मविद्धोऽपि रक्तस्यातिस्रुते सद्य एव जीवित जहाति । अतोऽन्यथा यथोक्तवैपरीत्ये मर्मव्यधे रक्तास्रुतौ च शरशतैरपि विद्धो जीवति ५४०

७९ मर्मविद्धचिकित्सा ।

**५४१-पुण्यवान्नियतायुश्च न कथञ्चिन्न जीवति ८०**
**तस्मादा चरमोच्छ्वासाच्चिकित्सेदेव यत्नत. ॥**
**तद्बन्धुमित्रानुमत. प्रत्याख्यायातुर भिषक् ८१**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां शारीरस्थाने मर्मविभागो नाम सप्तमोऽध्यायः ॥ ७ ॥**

५४१-तथा यश्च पुण्यवान् सुकर्मा यश्च नियतायु स न कश्चिन्न जीवति सर्वथा जीवतीत्यर्थ । नियतायुर्यस्य बलवता दैवेन कर्मणा च आयुर्नियतकाल कृतम्-तस्मात्पथाक्षीणायुर्जीवत्यतो मर्मविद्धमातुर प्रत्याख्याय आचरमोच्छ्वासाच्चिकित्सेत् । तस्यातुरस्य बन्ध्वादीनामनुमत सन् एतावता सिध्यभावेऽप्ययशो न लभत इति ५४१

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां शारीरस्थाने सप्तमोऽध्यायः ॥ ७ ॥**



# प्रकृतिभेदीय अष्टमोऽध्यायः ।

## ( उपोद्घात )

शरीरविचार । प्रकृत तस्य चावयवपरिच्छेद कृत । सम्प्रति दोषादिभेदेन प्रकृतिप्र ानार्थमध्यायारम्भ ।

१ प्रतिज्ञा ।

**५४२-अथात प्रकृतिभेदीय शारीर व्याख्यास्याम इति हस्माहुरात्रेयादयो महर्षय ॥ १**

२ सप्त प्रकृतय ।

**५४३-सप्त प्रकृतयो दोषै पृथक् ससर्गेण साम्येन च भवन्ति ॥ २**

५४३-सप्तप्रकृतिभ्यो दोषप्रकृतीना प्राधा यात् ता एवा दावुच्यन्ते-सप्त प्रकृतय इत्यादि । वातादिभि पृथक् तिस्र , ससर्गे । तिस्र , सन्निपातेनैका ५४३

३ प्रकृतीनामुत्पत्ति ।

**५४४-तत्र शुक्रार्तवसयोगकालेषु मातुश्चाहार विहारयोरेकोऽनेको वा यो दोषो भवत्याधिक्येन तेनाऽऽस्मरणाद्विपवल्लयामिवो पद्यमानस्य कृमार्विषेण सविषकृमेरिव वृश्चिकादेराशीविषस्येव वा स्वविषेण प्रकृतिजायते ॥ ३**

५४४-ननु च कदा वातादय प्रकृतीना कार ता या तीत्याह-तत्रेत्यादि । शुक्रादिष्वधिको य एव दोषा भवति पृथक् सयुक्तो वा तेनैव पुरुषस्य प्रकृति सपद्यते । गर्भाशयकाले यावद्गर्भाशयावस्थानम् । कथ पुरुषस्य प्रकृतिर्जायत इत्याह-यथा विषवल्ल्यामुत्पद्यमानस्य कृम विषेण प्रकृतिजायते । यथा वा सविषस्य कृमेवृश्चिकादेर्यथा वा आशीविषस्य सर्पस्य विषेणा ग्रमार ात्मकेनापि विषेण वृश्चिकादीना प्रकृतिभवत्येव दोषैरपि पुरुषस्य प्रतरवाह ५४४

४ शरीरोत्पत्तिहेतवो दोषा विरुद्ध ॥ अपि न परस्परोपमर्दका ।

**५४५-तस्मात्तन्मयतया शुक्रार्तवयोर्देहस्य भावि त्वात् प्राकृतत्वाच्च तावता तेन दोषेण न विहन्यते । तद्गुणैरेव चास्य शरीरमुपक्रियते । ततश्च तद्गुण प्रतिपक्षै सहसा न बाध्यते ॥ ४**

५४५-तस्मादित्यादि । त मयतया सत्र यासेदोषमय तया शुक्रार्तवयोस्तथाविधदैवगर्भपरिपाकवशेन देहस्यावस्य भावित्वात् तथैव च देहस्य प्रकृतिकृतत्वाद्वातादिना शुक्र शोणितस्य देहार भे अल्पापि या परिणाति सा न विहन्यते । तच्छुक्रशोणितमपि चाहारसमेव ततस्तद्गुणैर्बाजस्थदोषगुणै शरीरमुपक्रियते । न चास्य स्वारम्भकदोषविपरीतगुणैरा हारैर्विहारैश्च झटिति शरार बाध्यते ५४५

५ शुक्रशोणितसपातकाले विकृतिमति दोष उल्बणे सति गर्भासभव , तस्य वैकारिकत्व वा ।

**५४६-तस्या त्ववस्थाया विकृतिमति दोषे उल्बणे नैव गर्भ समवति । सभव एव वा विपद्यते । विकृता वा भवति ॥ ५**

५४६-यदा पुनस्तस्यामवस्थाया शुक्रशोणितसपातकाले विकृतिमद्दोष उद्धतो भवति, तदा गर्भो न समवत्येव । सभव काले एव वा व्यापद्यत विनश्यति । अथवा विकृतो भवति ५४६

६ वातादीना द्वैविध्यम् ।

**५४७-तथा च कश्चिदाहु -द्विविधा वातादय प्राकृता वैकृताश्च ॥ ६**

७ प्राकृतवातादीना स्वरूपम् ।

**५४८-तत्र प्राकृता सप्तविधाया प्रकृतेर्हेतुभूता शरीरकजन्मान ॥ ७**

८ धातुसज्ञका वातादय ।

**५४९-त शरीरधारणाद्धातुसज्ञा ॥ ८**

९ विकृताना वातादीना स्वरूपम् ।

**५५०-दोषारख्याना विकृताना बीजभूता । मुमूर्षो स्वरूपाच्चलन्ति ॥ ८**

१ प्रकृतौ त्रयाणा सानिध्येऽपि एकव्यपदेशे हेतु ।

**५५१-सर्वे ऽपि च देहे सन्निहितेषु प्रकृतावुल्बणेन व्यपदेश ॥ ९**

५४७-५५१-तथा चत्यादिना उक्तमेव पक्ष द्रढयति । सुबोधम् । प्राकृता शरीरकज मत्वाच्छरीरधार ेन धातुसज्ञा लभ ते । ते प्राकृता दोषसज्ञकाना वैकृताना वातादीना बीजभूता । त च प्राकृता यो न मुमूर्षस्तस्य स्वरूपात्र चलन्ति । यावज्जीवितमेतत्स्वरूपेरूपा इत्यर्थ । ये तु ज मन उत्तरकाल सभवन्ति ते वैकृता । यद्यपि च प्रकृत्यवस्थाया सर्वे वातादय सन्निहिता भवन्ति,तथापि य एव तेषामधि क्यस्तेनैव प्रकृतेव्यपदेश ५४७-५५१

११ वैकृताना प्राकृतेरकभूतत्वम् ।

**५५१-वैकृतास्तु गर्भादभिनिस्सृतस्याहाररसस्य मला सभवन्ति । प्राकृते ववरोहन्ति ॥ ११**

५५१-य च वैकृतास्ते यद्यपि गर्भादभिनि सृतस्याहार मला फेनभूते कफम् ' इत्यादिनोक्ता सभवन्ति, तथापि त मभूतास्तत्र्व प्राकृतेष्वेव वातादिष्ववरोहन्ति । सजातीयत्वादेकीभवन्तीत्यर्थ ५५१

---

२२ स्याम । स -क ख २३ भूताना मु -क ख २४ हारमलात्सभव त प्राक ° हाररसात्सभवत प्रा -ख २५ °कृतेष्वेवरोह -क ख

१२ वैकृतानां देहोपकारकत्वं देहदूषकत्वं च।

**५५२-ते कालादिवशेन स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृह्णन्ति दूषयन्ति च ॥ १२**

५५२-ते च वैकृता प्राकृतेरंशीभूता कालादिविशेषापेक्षया केनचित्स्वप्रमाणेन स्थिता देहमनुगृह्णन्ति। तथा वृद्धिक्षययोगात्तु देहं दूषयन्ति ५५२

१३ ओजसः प्रमाणम्।

**५५३-तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारं प्रासृतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाज ॥ १३**

५५३-ओजोऽपि तद्वदेव वातादिवत् स्वप्रमाणेन स्थितं देहमनुगृह्णाति वृद्धिक्षयाभ्यां युक्तं देहं दूषयति च। तच्चोजः परं मानेनाष्टबिन्दुप्रमाणं प्रासृतिकस्य मतम् ओजस आधारस्तदायत्तयोगक्षेमत्वान्मतम् ५५३

१४ वातप्रकृतिलक्षणम्।

**५५४-अथ स्वदोषगुणानुरोधाद्वातप्रकृतिरल्पतनुरूक्षस्तब्धाल्पाङ्गदन्तनखरोमनेत्रस्वरः शीतद्विडुद्बद्धपिण्डिकः सशब्दसन्धिगामी शीघ्रारम्भक्षोभग्रहणविस्मरणश्चलधृतिमतिगतिदृष्टिस्वभावसौहार्दस्तेनोऽनार्यो मत्सर्यजितेन्द्रियः प्रियगान्धर्वेतिहासहासविलासकलहमृगयोद्यानयात्रः स्निग्धोष्णमधुराम्ललवणान्नपानकाङ्क्षोपशयश्च भवति। अपि च**

**अल्पवित्तबलजीवितनिद्रः**
**क्षामवाग्धमनिसततगात्रः।**
**दुर्भगोऽतिबहुभुग्बहुभाषी**
**नास्तिकः स्फुटितकेशकराङ्घ्रिः ॥**
**किञ्चिदुन्मिषितदुर्मुखसुप्तस्-**
**त्रस्यति क्वथति खादति दन्तान् ॥**
**शुष्करूक्षविषमासु सरित्सु**
**व्योम्नि शैलशिखरेषु च याति ॥**

५५४-अथ प्रकृतीनां विशेषेण लक्षणमुच्यते अथेति। तत्र वातप्रकृतिः पुरुषः स्वस्य दोषस्य वातस्य गुणानुरोधात् कायस्य च कारणानुरोधाद्धेतो रूक्षत्वादिगुणयुक्तो भवति। स्तब्धान्यल्पानि चाङ्गादीनि यस्य स तथोक्तः। उद्बद्धे ह्रस्वकठिने पिण्डिके यस्य। जङ्घाया पश्चिमे भागे पिण्डाकृतिः मांसपिण्डिका। सशब्दैः सन्धिभिर्गच्छतीति सशब्दसन्धिगामी। गच्छतो जान्वादिसन्धिभिः शब्दो भवतीत्यर्थः। शीघ्र आरम्भादिर्यस्य स तथोक्तः। चला अनेकरूपा धृत्यादयो यस्य स तथोक्तः। मत्सरो गुण अस्यास्तीति मत्सरी। तथा अजितेन्द्रियः। तथा प्रियाणीष्टानि गान्धर्वादीनि यस्य स तथोक्तः। गान्धर्वं गेयमितिहासः पूर्ववृत्तम्। विलासो लीला। मृगया मृगवधक्रीडा। यात्रा पुरान्तरगमनम्। स्निग्धादिगुणमन्नपानमाकाङ्क्षते। तदेव चास्योपशेते सुखाय कल्पते। अपि चेति समुच्चये। अल्पानि वित्तादीनि यस्य स तथोक्तः। वित्तं धनम्। जीवितमायुः। धमनीभिः सावभिः सततं व्याप्तं गात्रं यस्य। दुष्टो भगो यस्य।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः ॥

बहु भाषते यः स बहुभाषी। नास्तिकः अदृष्टं नास्तीति मन्यते। तथा स्फुटिता केशादयो यस्य। अनुप्तश्च किञ्चिदुन्मिषितनेत्रः दर्शनसुखश्च भवति। प्रसुप्तश्च त्रासादियुक्तो भवति। क्वथनं मुखनासाभ्यां शब्दः। स्वप्ने च शुष्कादिगुणासु सरित्सु याति। व्योम्नि च शैलशिखरेषु च। इति वातप्रकृतिलक्षणानि ५५४

१५ पित्तप्रकृतिलक्षणम्।

**५५५-पित्तप्रकृतिरुष्णगौरगात्रस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलः शिथिलसन्धिबन्धमांसः करभकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्यः शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यङ्गक्षुत्पिपासो मेधावी दुर्भगः स्वादुतिक्तकषायशीताभिलाषोपशयश्च भवति। अपि च—**

**दयितमाल्यविलेपनमण्डनः**
**सुचरितः शुचिराश्रितवत्सलः॥**
**विभवसाहसबुद्धिबलान्वितो**
**भवति भीषु गतिर्द्विषतामपि ॥**
**धर्मद्वेषी स्वेदनः पूतिगन्धि-**
**र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।**
**सुप्तः पश्येत् कर्णिकारान् पलाशान्**
**दिग्दाहोल्काविद्युदर्कानलांश्च ॥ १५**

५५५-पित्तप्रकृतिलक्षणान्युच्यन्ते-उष्णेत्यादि। उष्णानि गौराणि च गात्राणि यस्य। ताम्राणि ताम्रवर्णानि नखादीनि यस्य। शिथिलाश्च सन्धिबन्धमांसा यस्य। तथा करभकपिलानि विरलानि मृदूनि च केशरोमाणि यस्य। मध्यबलो मध्यायुरल्पशुक्रोऽल्पव्यवायोऽल्पापत्यश्च। तथा शूरोऽभिमानवांश्च। तथा शीघ्राणि शीघ्रोत्पत्तीनि वल्यादीनि यस्य। वलयश्चर्मसंकोचाः। खलतिः शीर्णरोमत्वम्। पलितं केशशौक्ल्यम्। पिप्लुर्नीलकृष्णो मांसाङ्कुरः। मेधा प्रज्ञा विद्यते यस्य स मेधावी। स्वाद्वादिकमाकाङ्क्षति। तदेव चास्योपशेते। अपि चेति समुच्चये। दयितानि प्रियाणि माल्यादीनि यस्य। विभवादिभिरन्वितश्च भवति। शत्रूणामपि भीषु गतिस्त्राता। तथा प्रभूतोच्चारादियुक्तः। स्वप्ने च कर्णिकारादीन् पश्यति। पलाशकर्णिकारा लोहितपुष्पवृक्षाः। दिग्दाहो दिशां लौहित्येन दाह इव। इति पित्तप्रकृतिलक्षणानि ५५६

१६ कफप्रकृतिलक्षणम्।

**५५६-कफप्रकृतिस्तु दूर्वेन्दीवरशरकाण्डान्यतमवर्णः**

२६ °ल्पपित्तव°-क. २७ °तद्दृङ्मुख सु°-क, °तद्दृक्सु खसु°-ख. २८ °रावृतव°-क

१२ वैकृताना देहोपकारकत्व देहदूषकत्व च ।

**५५२-ते कालादिवशेन स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृह्णन्ति दूषयन्ति च ॥ १२**

५५२-ते च वक्रता प्राकृतरेकीभूता कालादिविशेषापेक्षया केनचित्स्वप्रमाणेन स्थिता देहमनुगृह्णन्ति। तथा वृद्धिक्षययोगात्तु देह दूषयन्ति ५५२

१३ ओजस प्रमाणम् ।

**५५३-तद्वदोजोऽपि पर हृदयस्थमष्टविन्दुप्रमाणमाधार प्रासृतिकस्य रसात्मकस्योजस क्षयवृद्धिभाज ॥ १३**

५५३-ओजोऽपि तद्वदेव वातादिवत् स्वप्रमाणेन स्थित देहमनुगृह्णाति वृद्धिक्षयाभ्या युक्तं देहं दूषयति च। तत्रोज पर मानेनाष्टविन्दुप्रमाण प्रासृतिकस्य मतत ओजस आधारस्तदायत्तयोगक्षेमत्वान्मतत. ५५३

१४ वातप्रकृतिलक्षणम् ।

**५५४-अथ स्वदोषगुणानुरोधाद्वातप्रकृतिस्तनुरूक्षस्तब्धाल्पाङ्गदन्तनखरोमनेत्रस्वर शीतद्विड्बद्धपिण्डिकः सशब्दसन्धिगामी शीघ्रारम्भक्षोभग्रहणविस्मरणश्चलधृतिमतिगतिदृष्टिस्वभावसौहार्दस्तेनोऽनार्यो मत्सर्यजितेन्द्रिय प्रियगान्धर्वेतिहासहासविलासकलहमृगयोद्यानयात्र स्निग्धोष्णमधुराम्ललवणान्नपानकाङ्क्षोपशयश्च भवति। अपि च**

**अल्पवित्तवलजीवितनिद्र-**
**क्षामवाग्धमनिसंततगात्र. ।**
**दुर्भगोऽतिवहुभुग्बहुभाषी**
**नास्तिक स्फुटितकेशकराङ्घ्रि ॥**
**किञ्चिदुन्मिषितदुर्सुप्तसुप्त-**
**स्त्रस्यति क्रथति खादति दन्तान् ॥**
**शुष्करूक्षविषमासु सरित्सु**
**व्योम्नि शैलशिखरेषु च याति ॥**

५५४-अथ प्रकृतीना विशेषेण लक्षणमुच्यते अथेति। तत्र वातप्रकृति पुरुष स्वस्य दोषस्य वातस्य गुणानुरोधात् कार्यस्य च कारणानुरोधाद्धेतो रूक्षत्वादिगुणयुक्तो भवति । स्तब्धान्यल्पानि चाङ्गादीनि यस्य स तथोक्त । बद्धे ह्रस्वकठिने पिण्डिके यस्य। जङ्घाया पश्चिमे भागे पिण्डाकृति मास पिण्डिका। सशब्दै सन्धिभिर्गच्छतीति सशब्दसन्धिगामी। गच्छतो जान्वादिसन्धिभि शब्दो भवतीत्यर्थ । शीघ्र आरम्भादिर्यस्य स तथोक्त । चला अनेकरूपा धृत्यादयो यस्य स तथोक्त । मत्सरो गुण अस्यास्तीति मत्सरी। तथा अजितेन्द्रिय । तथा प्रियाणीष्टानि गान्धर्वादीनि यस्य स तथोक्त । गान्धर्व गेयमितिहास पूर्ववृत्तम् । विलासो लीला। मृगया मृगवधक्रीडा। यात्रा पुरान्तरगमनम्। स्निग्धादिगुणमन्नपानमाकाङ्क्षते। तदेव चास्योपशेते सुखाय कल्पते। अपि चेति समुच्चये । अल्पानि वित्तादीनि यस्य स तथोक्त । वित्त धनम । जीवितमायु । धमनाभि स्नावभि. संतत व्याप्त गात्र यस्य। दुष्टो भगो यस्य।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशस श्रिय ।
वैराग्यस्याथ मोक्षस्य षण्णा भग इति स्मृति ॥

बहु भाषते य स बहुभाषी। नास्तिक अदृष्ट नास्तीति मन्यते। तथा स्फुटिता केशादयो यस्य। प्रसुप्तश्च किञ्चिदुन्मीलितनेत्र उन्मीलितमुखश्च भवति। प्रसुप्तश्च त्रासादियुक्तो भवति। क्रथन मुसलामादिशब्द । स्वप्ने च शुष्कादिगुणासु सरित्सु याति। व्योम्नि च शैलशिखरेषु च। इति वातप्रकृतिलक्षणानि ५५४

१५ पित्तप्रकृतिलक्षणम् ।

**५५५-पित्तप्रकृतिरुष्णगौरगात्रस्ताम्रनखनयनजिह्वौष्ठपाणिपादतल शिथिलसन्धिबन्धमास. करभकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्य. शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यङ्गक्षुत्पिपासो मेधावी दुर्भग स्वादुतिक्तकषायशीताभिलाषोपशयश्च भवति। अपि च—**

**दयितमाल्यविलेपनमण्डन**
**सुचरित शुचिराश्रितवत्सल. ॥**
**विभवसाहसबुद्धिबलान्वितो**
**भवति भीषु गतिर्द्विषतामपि ॥**
**धर्मद्वेषी स्वेदन पूतिगन्धि-**
**र्भूर्युच्चारक्रोधपानाशनेर्ष्य ।**
**सुप्त पश्येत् कर्णिकारान् पलाशान्**
**दिग्दाहोल्काविद्युदर्कानलांश्च ॥ १५**

५५५-पित्तप्रकृतिलक्षणान्युच्यन्ते-उष्णेत्यादि। उष्णानि गौराणि च गात्राणि यस्य। ताम्राणि ताम्रवर्णानि नखादीनि यस्य। शिथिलाश्च सन्धिबन्धमासा यस्य। तथा करभकपिलानि विरलानि मृदूनि च केशरोमाणि यस्य। मध्यबलो मध्यायुरल्पशुक्रोऽल्पव्यवायोऽल्पापत्यश्च। तथा शूरोऽभिमानवांश्च। तथा शीघ्राणि शीघ्रोत्पत्तीनि वल्यादीनि यस्य। वलयश्चर्मसंकोचा । खलति शीर्णरोमत्वम्। पलित केशशौक्ल्यम्। पिप्लुर्नीलक कृष्णो मासाङ्कुर । मेधा प्रज्ञा विद्यते यस्य स मेधावी। स्वाद्वादिकमाकाङ्क्षति। तदेव चास्योपशेते। अपि चेति समुच्चये। दयितानि प्रियाणि माल्यादीनि यस्य । विभवादिभिरन्वितश्च भवति। शत्रूणामपि भीषु गतिस्त्राता। तथा प्रभूतोच्चारादियुक्त। स्वप्ने च कर्णिकारादीन् पश्यति। पलाशकर्णिकारा लोहितपुष्पवृक्षा । दिग्दाहो दिशा लौहित्येन दाह इव। इति पित्तप्रकृतिलक्षणानि ५५६

१६ कफप्रकृतिलक्षणम् ।

**५५६ कफप्रकृतिस्तु दूर्वेन्दीवरशरकाण्डान्यतमवर्णः**

२६ °ल्पपित्तव°-क. २७ °तद्दुमुख सु°-क, °तद्वत्सु खसु °-ख. २८ °रावृतव°-क

समसुविभक्तस्निग्धस्थिरसुकुमारश्लिष्टमांससन्धिबन्धः परिपूर्णचारुगात्रः महोरुमहोरुबाहुर्व्यक्तसितासितप्रसन्नायतविशालपक्ष्मलाक्षः सिंहदुन्दुभिघनघोषः क्षुत्पिपासाशीतोष्णसहिष्णुर्बह्वोजोऽल्पशुक्रः स्वल्पापत्यश्चिरशापमानानुतापनो दृढमैत्रीवैरः प्रशस्तः सत्यवादी स्मृतिमान् धृतिमान् रसलुब्धो बाल्येऽप्यरोदनः कटुतिक्तकषायोष्णरूक्षस्वल्पाशनश्च भवति। अपि च-

> अल्पव्याहारचेष्टापानाशनेह
> प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः।
> श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-
> नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः॥
> ऋजुर्विपश्चित्सुभगः सलज्जो
> भक्तो गुरूणां दृढसौहृदश्च।
> स्वप्ने सपद्मान् सविहङ्गमालां-
> स्तोयाशयान् पश्यति तोयदांश्च॥

५५६–कफप्रकृतिलक्षणमुच्यते–दूर्वाग्रं यत्समानवर्णः। इन्दीवरं नीलोत्पलम्। तथा समानि सुविभक्तानि स्निग्धानि स्थिराणि सुकुमाराणि श्लिष्टानि च मांससन्धिबन्धानि यस्य। तथा परिपूर्णं चारु च गात्रं यस्य। महोरुः महाबाहुश्च। व्यक्तसितासिते प्रसन्ने आयते विशाले पक्ष्मले चाक्षिणी यस्य। सिंहादिसमानघोषः। क्षुदादिसहिष्णुः। बह्वोजस्त्वादियुक्तः। मानापमानमनुतापनं च चिरेण गृह्णाति यस्य। अल्परुद्भावम्। अल्पा व्याहारादयो यस्य। व्याहारो वाग्व्यापारः। ईहा कायिकी चेष्टा। प्राज्यं प्रभूतमायुर्वित्तं च यस्य। दीर्घदर्शी कार्यप्रागवित्। वदान्यो वल्गुभाषी। श्रद्धा विद्यते यस्यासौ श्राद्धः। गम्भीरः।

> यस्य प्रसादा(?)... क्रोधशोकभयादयः।
> भावस्था नोपलक्ष्यन्ते तद्गाम्भीर्यमिति स्मृतम्॥

स्थूललक्षः– योऽल्पं दातुं न शक्नोति स्थूललक्षः स उच्यते। सुहृद्यस्य भावः सौहृदं मैत्र्यम्। सुबोधम्। इति कफप्रकृतिलक्षणम् ५५६

१७ संसर्गप्रकृतिलक्षणम्।

५५७–संसर्गात् लक्षणसंकरः तु संसर्गप्रकृतिः॥ १७

५५७–त्रयाणां संसर्गप्रकृतीनामुभयप्रकृतिलक्षणं विज्ञेयम् ५५७

१८ समदोषप्रकृतिलक्षणम्।

५५८–सर्वगुणसमुदितः समदोषप्रकृतिः॥ १८

५५८–यस्तु सर्वैरेव गुणैः समुदितः स समदोषप्रकृतिर्ज्ञातव्यः। गुणशब्देन गर्हणीयवातादिप्रकृतिलक्षणपरित्यागः। तेषां दोषाधिक्यहेतुत्वात् ५५८

१९ नित्यातुराः प्रकृतयः।

५५९–तत्राद्यास्त्रयो नित्यातुराः दोषानुशयितप्रकृतित्वात्। विशेषतश्च द्वन्द्वप्रकृतयः। तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः॥ १९

५५९–तत्र सप्तसु प्रकृतिषु मध्ये आद्यास्त्रयो वातपित्तश्लेष्मजा दोषानुशयितत्वाद्धेतोर्नित्यातुराः। नित्यापक्रमणीया इत्यर्थः। अत एव दोषानुशयितत्वाद्धेतोः संसर्गप्रकृतयो विशेषतो नित्यातुराः। अतिशयेन नित्यत्वात् पथ्यादीनाम्। एतेषु पृथङ्मिश्रप्रकृतिषु योऽयमारोग्यव्यपदेशः स गुणमिश्रविकारकारित्वात्तथा यथा लोके रुक्करणस्वभावेष्वपि क्षुत्पिपासादिष्वारोग्यव्यपदेशः ५५९

२० नित्यातुराणां चिकित्सा।

५६०–तस्माद्विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत्। समसर्वरसेन सात्म्येन चान्यं यथर्तुविहितेन च॥ २०

५६०–तस्मात्तान् प्रकृतियुक्तान् प्रकृतिदोषविपरीतगुणेन दोषोपक्रमणीयोक्तेन विधानेनोपाचरेत्। अन्यं पुनः सर्वसमप्रकृतिकं समसर्वरसेन सात्म्येनोपाचरेदिति सम्बन्धः। ऋतुविहितयथाविधानेन च। इति वातादिभिः सप्त प्रकृतयः ५६०

२१ मानसदोषप्रकृतयः।

५६१–दोषवच्च गुणैरपि सत्त्वादिभिः सप्त प्रकृतयो भवन्ति। तास्तदभिनिर्वृत्तैरेव यथास्वं शौचादिभिर्जानीयात्॥ २१

५६१–न केवलं वातादिभिरेव दोषैः सप्त प्रकृतयो भवन्ति यावद्गुणैरपि सत्त्वरजस्तमोभिः सयुक्तैः पृथग्भूतैश्च सप्तैव प्रकृतयो भवन्ति। ताश्च सत्त्वादिप्रकृतयस्तदभिनिर्वृत्तैः सत्त्वाद्यभिनिष्पन्नैः शौचास्तिक्यादिभिर्लक्षणैर्जानीयात्। तत्र शौचेनास्तिक्येन शुक्लधर्मरुचित्वेन मतिमत्त्वेन च युक्तं सत्त्वप्रकृतिं विद्यात्। बहुभाषित्वेन मानित्वेन क्रुधा दम्भेन मात्सर्येण च युक्तं रजःप्रकृतिं विद्यात्। भयेनाज्ञानेन निद्रया आलस्येन विषादित्वेन च युक्तं तमःप्रकृतिं विद्यात्। लक्षणसंकरे च संसर्गप्रकृतीनध्यवस्येदिति गुणैः सप्त प्रकृतयः ५६१

टिप्पणी–च शा ४ ३६-५६

२२ जात्यादिविशेषेण सप्त प्रकृतयः।

५६२–तथा पुनः सप्त प्रकृतयो जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः। दृश्यन्ते हि पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः॥ २२

५६२–तथा जात्यादिविशेषेणापरमपि सप्तविधत्वं प्रकृतेर्भवति। यस्माद्दृश्यन्ते ते भावविशेषा जात्यादिनियताः। जात्या यथा–ब्राह्मणो मधुरप्रायाहारश्चिरसाहसिको बहुलभीतिः श्लाघ्यसत्त्वादियुक्तो भवति। एवं राजन्यादीनामपि यथासम्भवं प्रायोदर्शनेन योज्यम्। एवं कुलेनापि पुंसां विशेषो दृष्टः। तथा च केचित् कुलेनैव मद्यलोलुपाः। केचित् पिशितगुरुग्राम्यगृध्नवः। अपरे तु क्षारलवणजनित

जडिमानं सततमपि सोढुमसमर्थाः । केचित् पुनः प्ररूढेऽपि ग्रीष्मसमये तत्ताधाराधिकतरग्लोपदायेनरतीक्ष्णदीधितिपादानापि कालवद्गुणकलापानिवाभिमन्यन्त इत्येवमादि चिन्त्यम् । देशविशेषेण तु पुरुषाणा प्रसिद्धा एव विशेषा । एव कालवयोबलानामपि वाच्यम् । अत्यात्मसंश्रयो हि विशेषो य एकस्मिन्नेव शरीरे दृश्यते स्वभावविशेष । इति प्रकृतिसप्तकम् ५६२

२३ प्रकृतीनामपरिसंख्येयत्वम् ।

**५६३ सत्त्वादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्योन्यानुविधायित्वाच्च भेदाश्रयमसंख्येयं भवति । शरीरमपि सत्त्वादीननुरुध्यते । सत्त्वादयोऽपि शरीरम् ॥ २३**

५६३-आसा च प्रकृतीना सप्तविधाना सत्त्वादीना सयोगेन तरतमयोगाच्छरीरविशेषेभ्यो हेतुभ्योऽन्योन्यानुविधायित्वाद्भेदाश्रय भेद कारो भेदपारीणापत्तिः प्रकृतीनामसंख्येय भवति । यस्मात् सत्त्वादयोऽपि कार्यविशेषमपादनाय शरीरमनुरुध्यन्ते । तथा शरीरमपि सत्त्वादीन ५६३

टिप्पणी-च. शा ४ ३६

२४ सत्त्वादिभेदादनूकभेद ।

**५६४-सत्त्वाद्यसंख्यभेदावेशाच्च रूपस्वरचारित्रानुकरणमप्यनूकशब्दवाच्यमसंख्यभेद भवति । तदावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते । तस्माद्देवमानुपतिर्यक्प्रेतनारकाणां तत्तद्विशेषाणा च यथायथमेवानूकं पुरुषस्यान्ववेक्षेत ॥ २४**

५६४-तथा सत्त्वादीनामनन्तरोक्तेन प्रकारेणासंख्यो भेदस्तस्यावेशादन्यसंबन्धिना रूपादीनामनुकरण सादृश्यमसंख्यभेद भवति । तस्य च रूपाद्यनुकरणस्यानूक इति नाम । ननु सत्त्वादिभेदावेशस्य किं कारणमित्याह-तदावेशस्त्वित्यादि । अनन्तरेभ्यो जन्मभ्यो येयमभ्यासवासना तया जन्यते । तस्माच्च रूपाद्यनुकरण सत्त्वाद्यावेशाद्यतो देवादीनामानूक-रूपसत्त्वाद्यनुकरण पुरुषस्यान्ववेक्षेत ५६४

२५ वयसस्त्रैविध्यम् ।

**५६५-वयस्त्रिविधं बाल मध्यं वृद्ध च । तत्राषोडशाद्वर्षाद्बालम् । आ सप्ततेर्मध्यम् । ततो वृद्धम् ॥ २५**

५६५-वयस्त्रिविधमित्यादि सुबोधम् ५६५

२६ बाल्यम् ।

**५६६-तेष्वपि स्तन्याहारोभयवृत्त्या बालं त्रिविधम् । तस्मिन् देहप्रमाणवृद्धिः श्लेष्मोद्रिक्तश्च । तेन बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवन्ति २६**

५६६-तत्र बाल वयस्त्रिविधम् । क्षीरवृत्त्यान्नवृत्त्या क्षीरान्नवृत्त्या च । तस्मिन् बाले वयसि क्रमेण देहप्रमाणवृद्धिर्भवति । तेन वर्धमानत्वेन श्लेष्मोद्रेकेण च बालस्य स्नेहादीनि भवन्ति ५६६

२७ मध्य वयः ।

**५६७ मध्यमपि त्रिविधं यौवनं संपूर्णत्वमपरिहानिश्च । तस्मिन् पित्तोद्रेकः । तेन दीप्ताग्निना प्रज्ञाधिक्यपरिपाको व्यवसायश्च । तत्राऽऽत्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसंपूर्णत्वमत. परमपरिहानिः ॥ २७**

५६७-मध्यमपि त्रिविधमित्यादि सुबोधम । त्रिविधेऽपि मध्ये पित्तोद्रेकादिकम् । चत्वारिंशत परमपरिहानिर्न वृद्धिर्नाप्यपचय ५६७

२८ वृद्ध वय. ।

**५६८-वृद्ध तु शश्वत् क्षीयमाणधात्विन्द्रियादिगुणं वलीखलितिकासश्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्टमवसीदति । तस्मिन्मारुतोद्रेक । तेन स्थैर्यसारमाससन्ध्यस्थिता त्वक्पारुष्यमवनाम. कायस्य वेपथुः कासः श्वास. श्लेष्मसिंघाणकोदीरणं धातुक्षयश्च ॥ २८**

५६८-वृद्ध तु शश्वत् समन्तात् क्षीयमाणधात्वादिगुण वल्यादिभिरभिभूयमानमवसीदतीति सबन्ध । क्षीयमाणा पूर्वोक्ता वपु स्थैर्यादयो गुणा शश्वत्समन्तात् । वल्यश्चर्मसंकोचा । पलित केशरोम्णा शौक्ल्यम् । आदिग्रहणेनेवप्रकाराणा ग्रहणम् । तथाऽवसीदति यथा जीर्णं भवनमभिवृष्ट जलेन सिक्तम । तस्मिन वार्धके अथ शिथिल मारादिक भवति । साराणि वक्ष्यन्ते । कायस्यावनाम कुब्जत्वम् । वेपथु कम्प । श्लेष्मसिंघाणकौ नामान्तरा । तयोरुदीरणमिति सर्वं वातोद्रेकात् । इति त्रय ५६८

२९ बाल्याद्यवस्थाविषये मतान्तरोपन्यास ।

**५६९-अन्ये पुनराहु —२९**

५६९-अन्ये पुनराचार्या इदमाहु —५६९

३० बाल्यादीना क्रमाद्दशकेषु व्यपगम ।

**५७०-बाल्यं वृद्धिः प्रभा मेधा त्वक् शुक्राक्षिश्रुतीन्द्रियम् ।**
**दशकेषु क्रमाद्यात मन. सर्वेन्द्रियाणि च ॥ ३०**

५७०-क्रमाद्दशसु दशकेषु बाल्यादिदशक यातीति व्यपगच्छति । तत्र [ प्रथमे ] दशके बाल्य व्यपगच्छति । द्वितीये वृद्धि । तत पर न वर्धत इत्यर्थ । तृतीये प्रभा । चतुर्थे मेधा । पञ्चमे त्वक् व्यपगच्छति । अन्यथा भवतीत्यर्थ । षष्ठे शुक्रम् । सप्तमे अक्षीन्द्रियम् । अष्टमे श्रुतीन्द्रियम् । नवमे मन । दशमे सर्वेन्द्रियाणि ५७०

३१ वर्षशतजीविनो मनुष्याः ।

**५७१-एवं वर्षशतमायुष. प्रमाणमस्मिन् काले ॥ ३१**

५७१-एव स्थिते सवथाऽस्मिन् काले कलो वर्षशतमायुष. प्रमाणम् ५७१

३२ °धानत्वाच्च भेद्यमस°-क ख, ३३ °नुरुध्यन्ते स°-क ख ३४ °स्यान्वेक्षे°-क, °स्यान्वीक्षे°-ख. ३५ °ध्यमम् । त° क ख. ३६ तु श्व श्व क्षी°-क ख. ३७ °खलितका°-क ख ३८ श्वथासा°-क ख ३९ °थु कासश्वासश्लेष्म°-क. ख. ४० °याधान्ति म°-क. ख.

३२ कर्मविशेषाद्वयसो यूनाधिकभाव ।

**५७२–सन्ति पुन कर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्या ॥ ३२**

५७२–के चित्तु मनुष्या दैवस्य पौरुषस्य च कर्मणो विशेषा नाधिकवर्षशतजीविनोऽपि सन्ति ५७२

३३ न्यूनाधिकजीविना वयसस्त्रिधा विभाग ।

**५७३–तेषा यथोक्तै प्रकृतिविशेषैरायुष प्रमाणमुपलभ्य वयस्त्रिधा विभजेत् । अपि च—॥ ३३**

५७३–तेषामूनजीविनामधिकजीविना च वयस्त्रिधा विभजेत् । तेन पञ्चाशद्वर्षजीविनामपि शैशवयौवनवार्धक्यानि यथैव भा नयकल्पनया तथा विभक्तव्यायायुषा च । ननु इमे ऊनवर्षशतायुष, इमे शतवर्षमायुष, इमे अधिकवर्षसमायुष, इति कथ ज्ञायन्त इति चेदुच्यते—तेषा यथोक्तै प्रकृतिविशेषैरायुष प्रमाणमुपलभ्येति । उक्ता प्रकृतिविशेषा वाताद्यैरपि ... जारणादिभिन्न । तैर्हि प्रमाणमायुष परिज्ञायते । यथा—वातेन स्वल्पायुषो भवन्ति पित्तेन मध्यायुष, कफेन दीर्घायुष । एव संयोगेन तारतम्येन चायुषस्तारतम्यमप्यूह्य । तथा सात्त्विका दीर्घायुष, राजसा मध्यायुषस्तामसा स्वल्पायुष । तथा जातिकुलादिविशेषादायुषो विशेष प्रसिद्ध । अपि चेति समुच्चये–५७३

३४ अपुण्यवशादायुष प्रतिवत्सरस्य ह्रास ।

**५७४–वर्षे वर्षे क्षयं याति नृणां याते शते शते ।**

**आयुषोऽपुण्यबाहुल्याद्यदा यन्मानमिष्यते ॥३४**

५७४–नृणा पुरुषाणा यत्र यस्मिन् काले कृतयुगादौ दश वर्षशतादयो दशवर्षादयो वा यदायुषो मानमिष्यते तेन मानेन सवत्सरशते पूर्णे एक सवत्सरोऽपुण्यबाहुल्याद्वर्षस्य क्षय याति । तेनैतदुक्त भवति–यस्य यदा सवत्सरशतमायुष प्रमाण स एकेन सवत्सरेण न्यून वर्षशत जीवतीत्यर्थ । अनेन क्रमेण सहस्राधिकजीविना दशवर्षजीविनां च मानकल्पनया च क्षय आयुषो वाच्य. ५७४

३५ बलस्य त्रैविध्यम् ।

**५७५–बलमपि त्रिविध भवति । सहज, कालकृतं, युक्तिकृत च । तत्र सहज देहसत्त्वयो प्राकृतम्, कालकृतमृतुविभागज वय कृत च, युक्तिकृतं पुनराहारविहारोत्थमूर्जस्करयोगज च ॥ ३५**

५७५–न केवल पुरुषे वयस्त्रिविध यावत्सहजत्वादिभेदेन बलमपि त्रिविधम् । तत्र सहज देहसत्त्वस्वभावायातम् । कालकृत हेमन्ताद्यृतुप्रजनित वयोविशेषकृत च । युक्तिकृतमाहारादिविशेषजमूर्जस्करयोगज च । ऊर्जस्कर रसायनवाजीकरणादि ५७५

३६ बलवृद्धिकरा भावा ।

**५७६–तद्वृद्धिकरास्त्विमे च भावा भवन्ति । तद्यथा—बलवत्पुरुषे देशे जन्म तद्विधे च काले, सुखश्च कालयोगो बीजक्षेत्रगुणसपत् आहारसत्त्वसंपत्त्वस्वभावो यौवनं व्यायामो हर्षश्च ॥ ३६**

५७६–तस्य त्रिविधस्यापि बलस्य वक्ष्यमाणा भावा वृद्धिकरा । तद्यथा—यस्मिन् देशे पुरुषा बलवन्तो भवन्ति तत्र देश जन्म, यस्मिन् काले च बलवन्तो भवन्ति तस्मिन् काले जन्म, सुखश्च कालयोग समयोग । बीजगुणमाविकृतस्य परिपूर्णत्वादिकम् । क्षेत्रगुणो मातु स्वभावाहारादिविशेष । तथा जातस्य शरीरादिसपत्त्वस्वभावादिकमिति बलस्य वृद्धिहेतु ५७६

३७ देहस्थिता अष्टौ साराणि ।

**५७७–तथा साराण्यष्टौ त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वात्मकान्युत्तरोत्तरवराणि बलमानज्ञानार्थमुपदिश्यन्ते ॥ ३७**

५७७–अस्य च बलस्य मानविशेषपरिज्ञानाथ त्वगाद्यात्मकान्यष्टौ साराण्युक्तानि । तानि च यथोत्तरमन्याणि श्रेष्ठानि । तत्र त्वक्सारवान् बली भवति, ततो रक्तसारवान्, ततो मांससारवान्, ततो मेदस्सारवानित्येवमादि सत्त्व यावत् । त्वगेव सारमेव सर्वत्र योज्यम् । एतावता बलमानपरिज्ञानदर्शनेन भिषग्बल जानीयात् ५७७

३८ बलस्योपचयापचयाभ्या बलाबलकल्पना न कार्या ।

**५७८–अपि च— न सुस्थदेहमानदर्शनादेव भिषगयमुपचयेन महाशरीरत्वाद्वा बलवानय कृशत्वादल्पशरीरत्वाद्वाऽल्पबल इति । तथाऽयमप्यन्यथा दृष्ट गजसिंहे ॥ ३८**

५७८–शरीरमानदर्शने भिषग बल जानीयादिति मुह्येत् । अयमित्यादिना माहे हेतुरुच्यते । तदुभयमुपचयेन बलवत्त्व कृशत्वेन चाल्पबलत्वम् । गजसिंहयोर्यथा विपरीतेन दृष्टम् । सिंह कृशोऽप्यतिबलो गज स्थूलोऽप्यल्पबल इति ५७८

३९ सर्वसारसंपदुपेतस्य गुणा ।

**५७९–तत्र सर्वै सारैरुपेतो भवत्यतिबल परमगौरवयुक्त क्लेशक्षम सर्वारम्भेष्वात्मनि प्रत्ययवान्, कल्याणाभिनिवेशी, स्थिरशरीर, सुसमाहितगति, सानुनादस्निग्धगम्भीरमहास्वर, सुखैश्वर्यवित्तोपभोगसम्मानभाग्मन्दजरामय, प्रायस्तुल्यगुणविस्तीर्णापत्यो दीर्घायुश्च ॥ ३९**

५७९–तत्र सर्वसारसयुक्तोऽतिबलत्वादिगुणो भवति । प्रत्ययवान् नानारम्भेषु सभावितफल । कल्याणेषु दृष्टादृष्टेष्वभिनिवेशो यस्य । सहानुनादादिभिर्वर्तते स्वरो यस्य तथा सुखादिभाक् । ऐश्वर्य प्रभवनम् । मन्दौ जरामयौ यस्य । प्रायस्तुल्यरात्मसदृशैर्गुणैर्विस्तीर्णान्यपत्यानि यस्य । दीर्घायुश्च भवति ५७९

४० असारस्य असारयोग ।

**५८०–तद्विपरीतस्त्वसार । मध्यौ मध्यगु ॥ ४०**

५८०–या विद्यमानसवसार ... वैपरीत्ययुक्तो भवति सोऽ

---

४१ भोग समा -क ख,

सार । यस्य तु मध्यमानि साराणि स गुणैरपि मध्यो भवति ५८०

४१ शरीरावयवानामुत्सेधविस्तारायामपरिणाहा ।

५८१-(१)प्रमाण पुन. स्वांगुले । पादांगुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते,तिस्रोऽन्या क्रमेणोत्तरोत्तरं पञ्चमभागहीनास्तलखहीना वा । चतुरङ्गुलायताः पृथक् प्रपदपादतलपार्ष्ण्य पट्पञ्चचतुरङ्गुलविस्तृताश्चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जवामध्य च । चतुरङ्गुलोत्सेध पाद । अष्टादशायामा जघा ऊरुश्च । चतुरङ्गुलं जानु । त्रिंशदङ्गुलपरिणाह ऊरु. । (२) षँडायामौ मुष्कमेढ्रावष्टपञ्चपरिणाहौ । षोडशविस्तारा कटी पञ्चाशत्परिणाहा । दशागुलं वस्तिशिर. । द्वादशांगुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे । द्वादशोत्सेध त्रिकम् । अष्टादशोत्सेध पृष्ठम् । द्वादशक स्तनान्तरम् । द्व्यङ्गुल स्तैनपर्यन्तम् । चतुर्विशत्यङ्गुलविशाल द्वादशोत्सेधमुर.। द्व्यङ्गुलं हृदयम् । (३) अष्टकौ स्कन्धौ कक्षे च । षट्कावसौ। षोडशकौ प्रबाहू। पञ्चदशकौ प्रपाणी । द्वादशांगुलौ पाणी । तत्रापि पञ्चांगुला मध्यमागुलिः । ततोऽर्धांगुलहीने प्रदेशिन्यनामिके । सार्धत्र्यङ्गुलौ कनिष्ठिकागुष्ठौ । (४) चँतुरंगुलोत्सेवा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम् । (५) पञ्चागुलमास्यम् । चतुरंगुल पृथक् चिबुकौष्ठनासाद्व्यन्तरकर्णललाटम् । त्रिभागागुलविस्तारा नासापुटमर्यादा । द्व्यगुलायतमंगुष्ठोदरविस्तृत नेत्रम् । तत्र शुँक्लात्तृतीयाशं कृष्णम् । कृष्णान्नवमांशा मसूरदलमात्रा दृष्टि । षडंगुलोत्सेध द्वात्रिंशत्परिणाहं शिर इति । सर्व पुन शरीरमंगुलानि चतुरशीति ॥ ४१

५८१-अनन्तर शरीरावयवानामगुलादिना प्रमाणमुच्यते-आयामो दैर्घ्यम् । विस्तारो व्यास । परिणाह परिवर्तुलता । तत्र पादागुष्ठ तत्समीपे चागुली आयामेन द्व्यगुले । अन्यास्तिस्रोऽगुल्य क्रमेण द्व्यगुलस्य पञ्चमभागेन हीना प्रदेशिन्या मध्यमा ततोऽनामिका तत कनिष्ठेति । यथोत्तरार्थं । प्रपदादेत्रय प्रत्येकमायामेन चतुरंगुलम् । प्रपदमगुल्यनन्तर पादाग्र पादतलम् । पादमध्य पार्ष्णि खुडिकाभागस्तत्र च प्रपद विस्तारेण षडगुलम् । पादतल पञ्चागुलम् । पार्ष्णि चतुरगुला । द्वे चत्वारीति गुणानि । चतुर्दशायामेन पाद । परिणाह. पादपृष्ठात् पादतल यावत् । गुल्फजवामध्ये अपि परिणाहेन चतुर्दशागुले । पादस्योत्सेध क्षितितलात्प्रभृति गुल्फो यावत् स चतुरगुल । सुबोधम् । मुष्कावष्टागुलपरिणाहौ षडायामौ । मेढ्र. पञ्चपरिणाह षडायाम कटी मेढ्रमुष्कयोरुपरिभागे । दशागुल बस्तिशिर आयामेन मेढ्रमूलान्नाभिप्रदेशो यावत् । सुगमम् । त्रिकश्च कट्या पश्चात्सेधादुन्नतत्वम् । स्तनपर्यन्त स्तनपार्श्वम् । द्व्यगुल हृदयमिति । अत प्रभृति कनिष्ठिकागुष्ठावित्येवमन्तम । आयामो विज्ञेय । आस्य पञ्चागुल चिबुकादिक पृथक् प्रत्येक चतुरगुलमायामेन । दृष्ट्यन्तर दृष्टिमण्डलयोर्मध्यम् । नासापुटयोर्या मर्यादा मासमयी । त्रिभागागुलमगुलस्य तृतीयो भाग । तृतीयाशो नेत्रभागाच्छुक्लात् । मसूरदलमात्रा घनत्वेन ५८१

४२ समप्रमाणशरीरलक्षणम् ।

५८२-तदायामविस्तारमस समसुच्यते ॥ ४२

५८२-इत्युक्त समप्रमाण शरीर समामित्युच्यते ५८२

४३ अवयवपरिमाणस्य चातुर्विध्यम् ।

५८३—तत्र यथोक्तपरिमाणमिष्टमनिष्ट हीनमधिकं वा ॥ ४३

५८३-यथोक्तायामविस्तारोत्सेधेन समेन परिमाणमिष्टम । तथाऽत्यन्तदीर्घत्वादियुक्तमनिष्टम् । हीनाधिकप्रमाणावयवमनिष्टम् ५८३

४४ ह्रस्वदीर्घादिभेदेनाष्टौ शरीराणि ।

५८४ तँथाऽतिह्रस्वदीर्घगौरकृष्णरोमारोमस्थूल - कृश चेति ॥ ४४

४५ इष्टशरीरलक्षणम् ।

५८५—इष्ट च पुनर्महाशरीरदर्शनवदनहनुस्तनाग्रपृष्ठस्वरसुपचितोरुस्फिक्कटीवक्षोग्रीवातालुकसुभगगुण - पाणिपादचिबुककर्णललाटम्, सूक्ष्माच्छिदन्तनखांगुलिपर्वकेशम्, दीर्घागुलिसक्थिबाहूच्छ्वासेक्षितनेत्राजिह्मम्, विस्तीर्णास्याधरोष्ठजिह्वाललाटकर्णपीठवक्षोऽल्पमेढ्रग्रीवाकेशम्, स्निग्धत्वक्चकरजनयनदशनस्वनम्, स्थिरेन्द्रियत्वङ्नखकेशपार्श्वम्, गम्भीरनाभिसन्धिस्वरम्, गूढजत्रुपृष्ठवंशदन्तमूलम्, रक्तताल्वोष्ठनखनेत्रान्तमांसताम्रजिह्वाहस्तपादतलम्, कृष्णकेशभ्रूनेत्रपक्ष्मतारकम्, शुँक्लशुक्लमण्डलदशनचरितसुव्रतचित्तस्कन्धललाटोदरमुखनखपादम् नीचैर्वृद्धकर्णस्तननासाग्रचङ्क्रमणम्, घनस्कन्धकन्धरादन्तागुलित्वक्सौहार्दम्, तनुनखमध्यरोजिह्मम्,वृत्तस्फिग्ग्रीवानखम्, ससपृष्ठदन्तललाटोक्षितम्, तथाँनुपूर्वपूर्ववृत्तावूरू, दक्षिणावर्ता नाभि., प्रकृष्टान्तरौ स्तनौ भ्रुवौ च, कूर्माकृतयो नखा. पादौ च, ऋज्वास्य नासावशश्च, अनुल्बणे हनू वेपश्च, श्लक्ष्णं तालु जिह्वा च, नातिस्थूलकृशावोष्ठौ देहबन्धश्च, सस्पन्दं हृदय शखौ मन्ये च, सोष्मतालुपादोदर निःश्वासश्च, पृष्ठतोऽवनतौ रोमशौ च कर्णौ, ईषत्प्रलम्बिन्यौ भ्रुवौ, वैलिन सुश्लिष्टसन्ध्यर्धचन्द्राकृतिललाटमातपत्रोपम शिर., नैकमूला मृदव केशा, ६८ गूँढं च सिरास्थिसन्धि, प्रकृतियुक्तानि वातमूत्र-

४२ षडायामेन । मुष्क°-ग ४३ पर्यन्त च-क ४४ स्कन्धे क°-ग ४५ चतुरुत्से°-क ख ४६ शुक्लतृतीयाश - कृष्ण कृ°-क ख ४७ °था ह्रस्व°-ग ४८ °हाशिरोदश-क ख. ४९ °यनस्व°-क ख ५० °कृशुष्क म°-क ५१ °नुपूर्ववृ°-ग ५२ °लिभ सुश्लि°-ख ५३ °ढ सि°-ग

से वस्तूनि हरतीति तथोक्तः। कृष्णादिका छाया यम भिद्रवति यमस्यागच्छति। स समवर्तिनो वशगः। समवर्ता वैवस्वतः ६५०-६६२

२५ ग्रीवाललाटहृदयेषु प्रस्वेदे शैत्ये च रिष्टम्।

**६६३-ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम्।**
**उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः २५**

६६३-तस्य देवताः शरणं लोकान्तरस्यास्त्र नाम तन्नान्यच्छरणं तस्यत्यथः ६६३

२६ अणुज्योतिष्ट्वानेकत्वादौ रिष्टम्।

**६६४-योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा २६**

२७ बलिभुग्भिर्बलीनामभक्षणे रिष्टम्।

**६६५ बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते २७**

२८ नीर्निमित्त मधाद्याभादिलाभ रिष्टम्।

**६६ -निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम्।**
**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् २८**

२९ गुणदोपमय्या प्रकृतेरन्यथात्वे रिष्टम्।

**६६७-गुणदोपमयी यस्य स्वस्थस्य व्याधितस्य वा।**
**यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति २९**

३० भक्तिशीलादीनामहेतुका निवृत्तौ रिष्टम्।

**६६८-भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।**
**षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ३०**

३१ मत्तवद्गतिकम्पमोहे रिष्टम्।

**६६९-मत्तवद्गतिकम्पमोहा मासान्मरिष्यतः ॥ ३१**

३२ केशलुञ्चनवेदनाया अज्ञाने रिष्टम्।

**६७ -नश्यत्यजानन् यो हात् केशलुञ्चनवेदनाम् ३२**

३३ कण्ठामयादृते आहारस्य कण्ठाप्रापणे रिष्टम्।

**६७१-न याति यस्य चाहारः कण्ठं कण्ठामयादृते ३३**

३४ भृत्यानां प्रातिकूल्ये रिष्टम्।

**६७२-प्रेष्याः प्रतीपतां यान्ति प्रताकृतिरदीर्यते ३४**

३५ सततं निद्रायामनिद्रायां वा रिष्टम्।

**६७३-यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ३५**

३६ अश्रुभिर्वक्त्रप्लावने चरणस्वेदे, नक्षुषोराकुलत्वे च रिष्टम्

**६७४-वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ३६**
**चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः।**

३७ मनोरसा... प्रद्वेषे रिष्टम्।

**६७५-यैः पुरा रमते भावैररतिस्तैर्न जीवति॥ ३७**

टिप्पणी-वक्त्रमिति- वक्त्रमापूर्यतेऽश्रुभि' इति सुश्रुतपाठ (सू ३१ २३)

६६४ ६७५-अणुज्योतिः स्वल्पप्रभावः। अनेकाग्रो व्याक्षिप्तचित्तः। मदा कारणं विनैवविध। बलिभुजो वायसादयः। अतो वा मेधादितो विभ्रंशम्। यमक्षयं यमसद्म। गुणमयी प्रकृतिः सत्त्वादिजा। दोषमयी वातादिजा। ताश्चोक्ताः। परमवधिः षण्मासात्। षट् पृथग्भूता। मत्तवल्लादयो मासान्मरिष्यतो भवन्ति। लुञ्चनमपनयनम्। प्रेष्या भृतकाः। प्रतीपता प्रतिकूलत्वम्। प्रताकृतिः प्रतजातीय। उदीर्यते उच्यते। अकारणादश्रूणां वक्त्रमापूर्यते। पूरणयोगे षष्ठी। चरणौ स्विद्यतः। तैर्भावैररतिः सन् न जीवति। न विद्यते रतिर्यस्यासावरतिः ६६४-६७१

३८ पृष्टोऽपि भिषङ्मरणं न कथयन्न चिकित्सेच्च।

**६७६-कथयन्न च पृष्टोऽपि दु श्रवं मरणं भिषक्।**
**गतासोर्बहुमित्रस्य न चच्छेत् चिकित्सितुम्॥**

३९ परासोर्मृतानुबन्धात्क्रियावैफल्यम्।

**६७७-यमदूतपिशाचाद्यैर्यत् परासुरुपास्यते।**
**घ्नन्ति रौषधवीर्याणि तस्मात्तं परिवर्जयेत् ३९**

६७६ ६७७-*गतासामुमूर्षोः बहुम्यो मित्रेभ्यश्च भिषङ्मरणं न कथयेत्। न च तं गतासुं चिकित्सितुमिच्छन्। कुतश्चिकित्सितुं नच्छेदित्याह-यस्मात् परासुर्यमदूतादिभिरौषधवीर्याणि घ्नद्भिरुपास्यते। अतः परित्यजेत्। अन्यथा वैद्यो यशसा परिहीयते। तच्च द्रक्ष्यति ६७६-६७७

४० रिष्टारिष्टविज्ञाने चरकमतम्।

**६७८-अरिष्टं नास्ति मरणं, दृष्टरिष्टं च जीवितम्।**
**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनपुणात् ४०**

**चरकस्येति वचन—(इं २५)**

६७८—अरिष्टम्-रिष्टं विना नास्ति मरणम्। दृष्टे रिष्टे जीवितं नास्ति। इति चरकाचार्यानुमते। तत्र केचिच्चोदयन्ति-दृष्टे रिष्टेऽपि जीवितं, दृष्टे पि मरणमिति तान् प्रति चरकः समर्थयति। अरिष्ट इत्यादि यो निपुणो भिषङ् न भवति तस्यैतद् भ्रान्तिज्ञानमिति चरकस्य वचनम् ६७८

४१ रिष्टारिष्टज्ञाने सुश्रुतमतम्।

**(सू २८ ५) सुश्रुतेन तु पठ्यते।**

**६७९-ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत् किलामलैः।**
**रसायनतपोजप्यतत्परैश्च निवार्यते ४१**

६७९—सुश्रुतः पुनराह-यद्यपि रिष्टे ध्रुवं मरणं तथापि अमलैर्निर्मलैर्ब्राह्मणै रसायनादिपरैश्च तन्मरणं निवार्यते ६७९

४२ कृष्णात्रेयमतेन रिष्टानां द्वैविध्यम्।

**६८०-कृष्णात्रेयो द्विधा रिष्टं स्थिरास्थिरविभेदतः।**
**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत्।**
**तद्दोषाणां शमे शाम्येत्स्थायवश्यं तु मृत्यवे ४२**

६८ —कृष्णात्रेयोऽपि द्विविधं रिष्टमाह-स्थिरमस्थिरं च। दोषबाहुल्याज्जातमस्थिरम्। तच्चामरणम्। दोषाणां वातादीनाम् ६८०

४३ रिष्टविज्ञानप्रयोजनम्।

**६८१-आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम्।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ४३**

७७ *मुव्याकु—क ७८ *मराध्वंग—ख

इति वैद्यपति सिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्ग-सङ्ग्रहसंहितायां शारीरस्थाने विकृतेहाविज्ञानीयो नाम दशमोऽध्यायः ॥ १० ॥

६८१ रिष्टविज्ञानप्रयोजनमुच्यते। यधस्मादायुर्वेदफलमायुष. परिपालन कृत्स्न निरवशेषमायुषो जीवितपरिज्ञानवति भिषजि प्रतिष्ठित तस्मात्सर्वदेव परिज्ञान आदृतो भवेदिति ६८१

इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्ग-संग्रहव्याख्यायां शशिलेखायां शारीरस्थाने दशमोऽध्यायः ॥ १० ॥

# विकृतव्याधिविज्ञानीय एकादशोऽध्यायः ।

## ( उपोद्घातः )

चेष्टादीना स्वरूप दर्शयित्वा व्याधीना मारणात्मकाना लक्षणपरिज्ञानार्थमध्यायारम्भ ।

१ प्रतिज्ञा ।

**६८२-अथातो विकृतव्याधिविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः १**

२ हेत्वादिभिरतिमात्रैर्व्याध्युद्भवे रिष्टम् ।

**६८३ सर्वैर्यथास्वं हेतुप्राग्रूपरूपैरतिमात्रैर्यस्य व्याधिरुत्पद्यते ॥ २**

३ व्याधितमुखकरजरदनोदराश्रयाणि रिष्टानि ।

**६८४-व्याधितस्य वा यस्याशु मुखे पिप्लुव्यङ्गलेखातिलकालका । करजरदनेषु वा पुष्पाण्युदरे वा नानावर्णा. सिरा ॥ ३**

४ चक्षुर्नासिकाश्रयाणि रिष्टानि ।

**६८५-यस्य सुप्यतो नेत्रोपदेहो वर्त्मनासिकान्यतरश्वयथुर्वर्त्मस्रसो वा ॥ ४**

५ क्षुत्तृष्णयोर्बहुभिरप्यन्नपानैरप्यशान्तयो रिष्टानि ।

**६८६-यस्य क्षीणस्य क्षुत्तृष्णा वा हृद्यैर्बहुभिरप्यन्नपानैर्न शाम्यति ॥ ५**

६ मुखात्सफेनरक्तस्रुतौ कुक्ष्युरसो शूले च रिष्टम् ।

**६८७-यस्य सफेनमसृक् प्रसिच्यते । कुक्षिशूलं च।-उरसो वा॥-६**

७ मुखान्नीलपीतलोहितश्लेष्मनिर्गमे रिष्टम् ।

**६८८-यस्य श्लेष्मा नीलपीतलोहितो बहुशश्च ॥ ७**

८ ग्रीवावमर्द-जिह्वाशोष-कण्ठास्यगुदपाकरूपाणि रिष्टानि

**६८९-यस्य बलवान् ग्रीवावमर्दो जिह्वाशोष कण्ठास्यगुदपाकश्च ॥ ८**

९ आमाशयपरिकर्तिकातितृष्णाशकृद्भेदाश्रयाणि रिष्टानि ।

**६९०-यस्यामाशयोत्था परिकर्तिकातिऽतृष्णा शकृद्भेदश्च ॥ ९**

१० पक्वाशयोत्थपरिकर्तिकातृष्णातिमात्रगुदग्रहाश्रयाणि रिष्टानि ।

**६९१-यस्य पक्वाशयोत्था परिकर्तिकाऽतितृष्णातिमात्रश्च गुदग्रहः ॥ १०**

११ सज्ञानाशपूर्वक कण्ठे घुर्घुरकशब्दे रिष्टम् ।

**६९२-यस्यामपक्वाशयान्यतरमाश्रित्य संज्ञां च हत्वा वायु. कण्ठे घुर्घुरकं करोति ॥ ११**

**टिप्पणी**-घमार्जारादीना कोपादन्तर्गतशब्दो घुर्घुरा शब्द उच्यते ६९२

१२ तृष्णाभिवृद्धिहृच्छूलयो रिष्टम् ।

**६९३-यस्य क्षीणस्य तृष्णाभिवृद्धिर्हृदि शूलं च ॥ १२**

१३ सतृष्णयोर्हिध्मातीसारयोराध्मानातीसारयोर्वा रिष्टम् ।

**६९४-तथा हिध्मारक्तातिसारौ वाऽऽध्मानातीसारौ वा भृशं सतृष्णौ स परासुरिति ॥ १३**

६८३-६९४-यस्य सर्वैरित्यादे· स परासुरित्यनेन सबन्ध । यथास्व हेत्वादिभिरतिमात्रैरिति । ज्वरो हेत्वादिभि परिपूर्णस्तथा रक्तपित्तादिष्वपि वाच्यम । क्षीणस्य सत क्षुत् बहुनाप्यन्नेन न शाम्यति । तृट्वा बहुना पानेन । सफेनमसृक ष्ठीवनवत् मुखात् प्रसिच्यते । उरसो वा शूलमित्यनुवर्तते । श्लेष्मा प्रसिच्यत इत्यनेन च सबध्यते । ग्रीवावमर्दादिगुदपाकान्त युगपद्वर्तते । शकृद्भेदान्त वस्तु युगपत् । परिकर्तिकाद्यतिमात्रगुदग्रहान्त वस्तु युगपत् । पक्वाशयस्य छेदनमिव या वेदना सा परिकर्तिका । सज्ञा हत्वा अचेतन कृत्वा । घुर्घुरकमव्यक्तशब्दविशेषम् ६८३-६९४

१४ तन्त्ररीति ।

**६९५-भवति चात्र-॥ १४**

६९५-भवति चात्रेति समुच्चये—६९५

१५ ज्वररिष्टानि ।

**६९६-ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः॥**
**सप्रलापभ्रमश्वास. क्षीणं, शून, हतानलम् ॥**
**अक्षामं, सक्तवचनं, रक्ताक्षं, हृदि शूलिनम् ।**
**सशुष्ककास. पूर्वाह्णे योऽपराह्णेऽपि वा भवेत्॥**
**बलमांसविहीनस्य श्लेष्मकाससमन्वित. ।**

१६ रक्तपित्तरिष्टानि ।

**६९७-रक्तपित्तं, भृशं रक्तं, कृष्णमिन्द्रधनुष्प्रभम् ॥**
**तन्निहारिद्रहरितं रूपं रक्त प्रदर्शयेत् ।**
**रोमकूपप्रविसृतं कण्ठास्यहृदये सजत् ॥**

७९ °मः । स°-क. ८० °ह्वागोफ क°-ख. ८१ °श्वास क्षी°-क ८२ नम् । सशुष्क का°-ग.

वाससोऽरञ्जनं पूति वेगवच्चातिभूरि च।
वृद्धं पाण्डु ज्वरच्छर्दिकासश्वासातिसारिणम्॥

१७ कासश्वासारिष्टानि।

६९८–कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम्।

१८ राजयक्ष्मारिष्टानि।

६९९–यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम्॥

१९ छर्दिरिष्टानि।

७००–छर्दिर्वेगवती मूत्रशकृद्गन्धि सचन्द्रिका।
सास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी॥

२० तृष्णारिष्टानि।

७०१–तृष्णाऽपरोगक्षपितं बहिर्जिह्वं विचेतनम्।

२१ मदात्ययारिष्टानि।

७०२–मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम्॥

२२ अर्शोरिष्टानि।

७०३–अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम्।
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम्।

२३ अतीसाररिष्टानि।

७०४–अतीसारो यकृत्पिण्डमांसधावनमेचकैः।
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः॥
मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः।
अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः॥
कर्बुरः स्रवन् धातून् निष्पुरीषोऽथवाऽतिविट्।
तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः।
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम्।
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयन्।
सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः॥

२४ अश्मरीरिष्टानि।

७०५–अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम्।

६९६-७०५–ज्वर इत्यादि सुबोधम्। गम्भीरोऽन्तर्वेगः। दैर्घरात्रिको बहुकालप्ररूढः। अपराह्णे श्लेष्मकासमन्वित इत्यनेन सम्बन्धः। सतन्द्रः ... वाससोऽरञ्जनं धौतस्यापि। वृद्धं गतवयस्कं कम। रक्तपित्तं यक्तं। निहन्ति, तथा पाण्ड्वादियुक्तं कम। कासश्वासौ ज्वरादियुक्तम्। सहास ... यतत इति मांसविट् तथा पूयादिमती। अनुषङ्गिणी चिरप्रभवा। अन्येन रोगेण ज्वरादिना क्षपितम्। मेचकमनेकवर्णम्। मस्तुलुङ्गं कपालमज्जा। वेसवारः कुट्टितमांसम्। कर्बुरो वर्णविशेषः। शीर्णपायुवल्यादियुक्तमतीसारो निहन्ति। शीर्णा पायुवलयश्च यस्य तम्। मुक्तनालं स्रस्तगुदबन्धम्। सह तृडादिभिर्वर्तत इति स तथोक्तोऽतिसारः। प्रवाहिका–निरस्तानिका ६९६–७०५

२५ प्रमेहारिष्टानि।

७०६–मेहस्तृड्दाहपिटकामांसकोथातिसारिणम्।

२६ प्रमेहपिटकारिष्टानि।

७०७–पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्धगाः।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम्।
सर्वे च मांससङ्कोथदाहतृष्णामदज्वराः।
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमाः।

२७ गुल्मारिष्टानि।

७०८–गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः।
सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः।
कासपीनसहृल्लासश्वासातीसारशोफवान्॥

२८ उदरारिष्टानि।

७०९–विष्टम्भश्वसनहृल्लासशोफहिध्माज्वरभ्रमैः।
मूर्च्छाऽरुच्यतिसारैश्च जठरं हन्ति दुर्बलम्॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्।
विरेचनहृतानाहमानह्यन्तं पुनः पुनः॥

२९ पाण्डुरोगारिष्टानि।

७१०–पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनः॥

३० शोफारिष्टानि।

७११–तन्द्रादाहारुचिच्छर्दिमूर्च्छाध्मानातिसारवान्।
अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम्।
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि॥
राजीचितः स्रवञ्छर्दिज्वरश्वासातिसारिणम्।
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये॥
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः।
श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके॥
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत्।

७०६ ७११–तृडादिभिर्युक्तं मेहो हन्ति। मांसकोथो मांसकुथनम्। पिटका शराविकाद्या मर्मादिगाः। हृत्पृष्ठस्य प्राधान्यात् पृथगुक्तिः। मन्दोत्साहं प्रमेहिणं चैता घ्नन्ति। ताश्च पिटका मांसकोथादिभिः कारणैः सह विशेषेणपक्षया घ्नन्ति। मर्माणि हृदयकण्ठादीनि समन्ततो यास्तास्तथोक्ताः। ज्वरमुखमपि मूत्रमज्जादिभिर्बारम्भैर्हन्ति दुर्बलत्वादियुक्तं च पुरुषं हन्ति। उपस्थं मेढ्रम्। विरेचनहृतानाहं सन्तं पुनः पुनरानह्यन्तम्। पादाभ्यां प्रथमं प्रसृतः श्वयथुः पुमांसं हन्ति। मुखात् प्रसृतो नारीं हन्ति। न तु पुरुषम्। कुक्षिगुह्याभ्यां प्रसृत उभयं हन्ति पुरुषमपि नारीमपि। राजीभिश्चितः श्वयथुस्तथा स्रवन् छर्द्यादियुक्तं हन्ति। शोफस्यान्ते शोफे निवृत्ते ज्वरातिसारौ। ज्वरातिसारयोर्वा क्षये शोफः। एवंविधा ज्वरातिसारशोफाः सर्वस्यान्ताय जायन्ते। दुर्बलस्य पुंसो विशेषेणान्ताय जायन्ते। अतो मरणम् ७०६–७११

३१ मुखहस्तपादानां शोषे शोफे वा रिष्टम्।

७१२–आननं हस्तपादौ च विशेषाद्यस्य शुष्यतः।
शूयेते वा विना देहात्स मासाद्याति पञ्चताम्॥

---

८३ कर्बुर प्र–क ८४ 'पायुं बले क्षी'–क ८५ 'शयद। स–ग ८६ 'शन। त'–क ८७ 'स्तपाद च वि–ग

३२ अतिशयितोदरशोफयो रिष्टम्।

**७१३-उदरी यश्च शोफी वा स्वं न पश्यति मेहनम्।**
**यस्य वा जठरोन्नामात् परिधानं न तिष्ठति॥**

३३ विसर्परिष्टानि।

**७१४-विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान्।**
**भ्रमास्यशोफहृल्लासदेहसादातिसारवान्॥**

३४ कुष्ठरिष्टानि।

**७१५-कुष्ठ विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम्।**
**मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम्॥**

३५ वातरोगरिष्टानि।

**७१६-वायुः सुप्तत्वचं भुग्नं कम्पशोफरुजातुरम्।**

३६ वातरक्तरिष्टानि।

**७१७-वातास्र मोहमूर्च्छायमदास्वप्नज्वरान्वितम्॥**
**शिरोग्रहारुचिश्वाससंकोचस्फोटकोथवत्।**

३७ सद्योजीवितहरा विकाराः।

**७१८-शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः॥**
**घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम्।**

३८ क्षीणे आतुरे वातव्याध्यादयोऽष्टौ असाध्या।

**७१९-वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी॥**
**गुल्मी मेही च तान्क्षीणान्विकारेऽल्पेऽपि वर्जयेत्**

३९ त्रिपक्षायुष्कस्य रुग्णस्य लक्षणम्।

**७२०-बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः॥**
**यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति।**

४० वाताष्ठीलारिष्टानि।

**७२१-वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि॥**
**तृष्णयाऽनुपरीतस्य सद्यो मुष्णाति जीवितम्।**

७१२-७२१-यस्य देहो न तथा शुष्यति यथा हस्तपादस पञ्चता मरणाख्या मासाद्याति। पञ्चभूतानां पृथग्भावः पञ्चता। उदरीत्यादौ मासात्स न जीवतीत्यनुवर्तते। विसर्प इत्यादौ हन्तीति स्थितम्। तृड्वन्तमतीसारिण च कुष्ठ हन्ति। मदमूर्छाये वक्ष्येते। शिरोग्रहादिमत् वातास्र हन्ति। सर्वामयाश्च ज्वरादय शिरोरोगादिभिः कारणभूतैर्हन्ति। क्षीणस्वरधातुत्वादियुक्त वातव्याधिराक्षेपकादि। वातव्याधिना अपस्मारादिभिश्चार्तान् स्वल्पेऽपि विकारे क्षीणदेहान् सतो वर्जयेत्। सुबोधम्। तृष्णया परि समन्तादितो व्याप्तः परीतस्तस्य मुष्णातीति वाताष्ठीलेत्यनेन सबध्यते। अष्ठीलेव प्रस्तरमयी वायुना वाताष्ठीला ७१२-७२१

४१ मुमूर्षुलक्षणानि।

**७२२-शैथिल्य पिण्डिके वायुर्नीत्वा नासा च जिह्मताम्**
**क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितं(१)**
**नाभीगुदान्तरं गत्वा वंक्षणौ वा समाश्रयन्।**
**गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली॥(२)**
**मलान् वस्तिशिरोनाभि विबध्य जनयन् रुजम्**
**कुर्वन् वंक्षणयोः शूलं तृष्णां भिन्नपुरीषताम्(३)**
**श्वासं वा जनयन् वायुर्गृहीत्वा गुदवंक्षणौ।**
**वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः।**
**स्तिमितस्याततांक्षस्य सद्यो मुष्णाति जीवितं(४)**

७२२-नासा जिह्मा सकुचितेव। नाभीत्यादौ वायुरिदमिद कृत्वा सद्यो जीवित मुष्णाति। नाभीगुदस्यान्तर मध्यं गत्वा रुजा जनयन्। अथवा वक्षणौ समाश्रयन्। अथवा बली क्षीणे देहस्य पायुहृदये गृहीत्वा मलादीन् विबध्य रुजा जनयन् सद्यो मुष्णाति जीवितम्। मला दोषाः शकृदादयश्च। अथवा गुदवक्षण गृहीत्वा पायुवक्षणयोः शूल तृष्णा भिन्नपुरीपिता च कुर्वन्। श्वास वा जनयन्। अथवा मारुत पार्श्वकास्थीनामग्राणि वितत्य व्याप्योरश्च गृहीत्वा स्तिमितस्याततांक्षस्य पुरुषस्य सद्यो मुष्णाति जीवितम् ७२२

**७२३ सहसा ज्वरसंतापस्तृष्णामूर्च्छाबलक्षयः।**
**विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते॥(५)**

४२ श्लेष्मज्वररिष्टम्।

**७२४-गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम्।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम्॥(६)**

७२३-७२४ ज्वरसतापादि सहसा मुमूर्षोरेवोपजायते नान्यस्य। गोसर्गो यस्मिन् काले गावो भवनान्निस्सरन्ति रात्र्यन्त इति यावत्। लेपो मुखस्योपलेप ७२३-७२४

४३ मसूरिकारिष्टम्।

**७२५-प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः।**
**उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति(७)**

७२५-प्रवालगुलिका विद्रुमगुलिकास्ता इव भासन्ते। मसूरिका-मसूरिकाकृतिसघाता ७२५

४४ विस्फोटकरिष्टम्।

**७२६ मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः।**
**अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः**

७२६-मसूरविदल मसूरदलम्। अन्तर्वक्त्रा मध्यनिम्ना। किण कराटौ व्रणग्रन्थि। विस्फोटो ग्रन्थिः ७२६

४५ मुमूर्षुलक्षणानि।

**७२७ कामिलाक्ष्णोर्मुखं पूर्णं शंखयोर्मुक्तमांसता।**
**संत्रासश्चोष्णताङ्गे च यस्य तं परिवर्जयेत्(९)**

७२७-अक्ष्णो कामिलेत्यादिकं यस्य त परिवर्जयेत् ७२७

४६ असाध्यव्रणाः।

**७२८-अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम्।**
**चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः॥**
**शैवालकुक्कुटशिखाकुङ्कुमालमपोप्रभाः।**
**अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः॥**

८८ °च मन्न क°-क. ८९ °शु विलीयन्ते न चि°-क. ९० कामला°-क. ९१ °कुर्कदाशि°-क.

यो वातजो न शूलाय स्यान्न दाहाय पित्तज
कफजा न च पूयाय मर्मजश्च रुजे न य ॥
अचूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते ।
रूपं शक्तिध्वजादीनां सर्वांस्तान् वर्जयेद् व्रणान् ।

७२८-तथा त्वङ्मर्माश्रय विरुद्ध नाम्ना सद्यो म मर्मस्मात् शक्तियनुभावत् विसर्पवच्च त परिवर्जयेदिति सम्बन्धः । चन्दनादि । वा शेवलाग्निप्रभा अ तदाहादियुक्ता व्रणा मा मारायर । । यो वातज इत्यादिना व्रणो विशेषे । यत्र यस्मिन् व्रणे शक्तिध्वजस गचक्रादिमत्रधि रूपमकस्माद दृश्यत इत्येव सर्वान् व्रणान् वर्जयेत् ७२८

४७ भगन्दरारिष्टम् ।

७२९-वि मूत्रमारुतवह कृमिणं च भग दरम् ॥

७२९-विडादिवह कृमिण भगन्दर च वर्जयेत् ७२९

४८ मुमूर्षुलक्षणानि ।

७३०-घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥
दन्तैश्छि दन् नखाग्राणि तैश्च केशांस्तृणानि वा
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥
हृष्टरोमा सा द्रमूत्र शुष्ककासी ज्वरी च य ।
मुहुर्हसन् मुहु क्ष्वेलन् शय्यां पादेन हन्ति य
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।
ऊर्ध्वश्वास गतोष्मा । शूलोपहतवक्षणम् ॥
शर्म चानाधिगच्छ त बुद्धिमान् परिवर्जयेत् ।
विकारा यस्य वर्द्धन्ते प्रकृति परिहीयते ॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।
यमुद्दिश्यातुर वैद्य सपादयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥
विज्ञात बहुश सिद्ध विधिवच्चावचारितम् ।
न सिध्यत्यौषध यस्य नास्ति तस्य चिकित्सितम्
भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्यय ।
अकस्माद्वर्णगन्धादे स्वस्थोऽपि न स जीवति
निवाते से धन यस्य ज्योतिश्चाप्युपशाम्यति ।
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ॥
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ।

७३०-य आतुरो मुहुर्वक्त्रमपास्यत्यपाक्षिपति । जानु जानुना घट्टयन् पादावुद्यम्य च पातयन् । तदिति नखाग्रे । क्ष्वेलन् याहरन् । छिद्राणि कर्णनासादीनि स्रोतांसि विमृशन् । विकारा शारीरमानसा व्याधय । प्रकृति स्वभाव सहसा धु ाप्न झटिति यमातुरमुद्दिश्य वैद्य औषध सपादयितु यतमान सन् न शक्नोति । तस्यातुरस्य दुर्लभ जीवितम् । वर्णादिविपर्ययो ऽकस्मादौषधेऽन्ने वा । ज्योतिरग्नि । अमत्र भाजनम् ७३०

४९ आत्रेयमतेन रिष्टलक्षणम् ।

७३१-यञ्चर महसा रोगो दुर्वल परिमुञ्चति ॥
सशयप्राप्तमात्रेयो जीवित तस्य मन्यते ।

इति वैद्यपतिसिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्ग सग्रहसंहिताया शारीरस्थान विकृत व्याधिविज्ञानयो नाम एकादशोऽध्याय ॥ ११ ॥

७३१-य दुर्बल नर सहसा रोग परिमुञ्चति । तस्य नरस्यात्रेयो धन्वन्तरि सशयप्राप्त जीवित मन्यते । सशयप्राप्तमिति कदाचिज्जीवितमपि तस्य सभाव्यत इति प्रदर्शनार्थम् ७३१

इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्ग सग्रह व्याख्याया शशिलेखाया शारीरस्थाने एकादशोऽध्याय ॥ ११ ॥

# दूतादिविज्ञानीयो द्वादशोऽध्यायः ।

## ( उपोद्धात )

दूतादिविज्ञानीयमपि आयुष इन्द्रियापरिज्ञानायमुपयुज्यत इति तदध्यायारम्भ ।

१ प्रतिज्ञा ।

७३२-अथातो दूतादिविज्ञानीयमध्याय व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षय ॥ १

२ अध्यायप्रयोजनम् ।

७३३-निर्दिष्टरिष्टमातुराश्रयम् । दूतस्यापि तु जाति-वेष-भाषा-चेष्टित-देश-काला वैद्यस्य च तत्सङ्गम सकल्प-प्रस्थान-प्रयाण-प्रवेशा अहचारोऽपूर्वसभव स्वप्नदर्शनानि च रोगिण शुभाशुभ सूचयन्ति ॥ २

६३३-निर्दिष्टमित्यदिना शास्त्रकार स्वयमध्यायप्रयोजन कथयति । दूतजात्यादयोऽपि रोगिण शुभाशुभ सूचयन्तीति सम्बन्ध । जाति ब्राह्मणादिका । भाषा वचनम् । चेष्टित क्रिया । देश उष्णशीतादिको विकारसमानासमानस्तद्वत् कालोऽपि च । वैद्यस्य च तत्सङ्गमे य सकल्पस्तादिति दूतस्य यत्पद । प्रस्थान स्ववेश्मनो नि मनम् । प्रया । पथि । प्रवेश आतुरवेश्मनि । अहाणा चारो राशिगमनम् । अपूर्वसभवो वैद्यातुरसङ्गमे प्रथममयलेनोत्पत्तिरभूत पूर्वस्य शुभाशुभसूचक य ७३३

३ अशुभदूत नम् ।

७३४-तत्राऽऽतुराद्वर्णोत्तमोऽन्या त्रम पाप ड पण्डो मुण्डी जटिल स्त्री व्याधितोऽनेक ॥ ३

९२ शम वान -क ९३ ति च । अ -ख ९४ °स्याम । नि -च

४ अशुभदूतवेषादि ।

**७३५-जीर्णविवर्णमलिनच्छिन्नार्द्रैकवसनः, पङ्कतैलदिग्धो रक्तमाल्यानुलेपनो विकृताङ्गरूपकर्मा खरोष्ट्रमहिषवाहनो विक्लवः, श्वसन्, रुदन् ॥ ४**

५ अशुभदूतस्य भाषादि ।

**७३६-निष्ठुरामङ्गलाभिधायी, दूरादाह्वयमानः ॥ ५**

६ अशुभदूतस्य चेष्टितम् ।

**७३७-तृणलोष्टतुषाङ्गारभस्मतुपसीसास्थिकेशशिरोललाटनासिकास्यदन्तजिह्वाग्रीवानखानामिकाङ्गुलिस्तनजठरनाभिपृष्ठकटीमेहनजङ्घाकपालपललोपलमुसलशूर्पोपानन्मार्जनीशस्त्रवस्त्रान्तदशाकार्पासभग्नच्युतस्थकाष्ठयष्टीतुलारज्जुपाशचर्मवेणुरिक्तभाजनस्नेहभाजनधरः पादाभ्यां भुवं मुञ्चन्, विलिखन्, गृहीत्वा पक्वं फलमसारं वा तद्विधमन्यद्वा ॥ ६**

७ दूतागमनस्याप्रशस्तौ देशकालौ ।

**७३८-विकारतुल्यगुणे च देशे काले वा दूतो वैद्यमुपसर्पन्नशुभः ॥**

७३४-७३८-आतुरादित्यादेर्दूतो वैद्यमुपसर्पन्नशुभ इति संबन्धः । आतुरवर्णादुत्तमो वर्णो यस्य दूतस्य । यथा शूद्रस्य ब्राह्मणादीनां त्रयाणामन्यतमो दूतः । यथा वैश्यस्य ब्राह्मणक्षत्रियाभ्यामन्यतरस्तथा क्षत्रियस्य ब्राह्मण इति । अन्याश्रमो भिन्नाश्रमः । चत्वार आश्रमाः । ब्रह्मचारी गृहस्थो यतिर्वानप्रस्थ इति । पाषाण्डा लिङ्गिनः । षण्ढः क्लीबः । स्त्रीदूतः । अनेको युगपद्बहवो दूताः । जीर्णादिवसनः । विवर्णो विशिष्टवर्णः । विक्लवो भीरुः । निष्ठुरो रूक्षः । अमङ्गलाभिधायी दूरादाह्वयमानो वैद्यम् । तृणादिस्पृक् । अनामिकाङ्गुलिः कनिष्ठाया पूर्वा । मार्जनी-शोधनी । भग्नच्युतौ तथाविधौ भाण्डौ । तथा काष्ठादिधरः । पादाभ्यां भुवनतरपादीनि मुञ्चन् । अथवा पादाभ्यां विलिखन् । अथवा पक्वफलादि गृहीत्वा दूतो वैद्यमुपसर्पन्नशुभः । तद्विधमन्यत् छिन्नदुर्गन्धादि ७३४-७३८

८ दूतागमने शुभाशुभो देशः ।

**७३९-तद्यथा-घृतोदकादिद्रवसमीपस्थमतिशीतस्तब्धः प्रत्युषसि श्लेष्मामयेऽशुभः । पित्तामये तु शुभः । तथा सेतुभङ्गे छर्दिमेहातिसारादिष्वशुभः, सेतुबन्धे तु शुभः ॥ ८**

७३९-विकारतुल्यगुणौ देशकालौ तद्यथेत्यादिना दर्शयति-श्लेष्मामयेषु घृतोदकादिसमीपस्थ वैद्य दूत उपसर्पन्नशुभः । पित्तामयेषु शुभः । छर्द्यादिषु सेतुभङ्गे अशुभः । सेतुबन्धे शुभः । देशः उक्तः ७३९

९ दूतागमनेऽशुभा वेला ।

**७४०- तथा सन्ध्याह्नोभयसन्ध्यार्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राश्लेषामघामूलपूर्वासु चाशुभः ॥ ९**

७४०-तथेत्यादिना कालः उच्यते-उभयसन्ध्या पूर्वा चापरा च । नक्षत्रं महारोगदेशान्तरविवक्षया । यश्च दूतः सुप्तादिकं वैद्यमुपतिष्ठति तं दूतं वैद्यो नानुयायात् ७४०

१० दूतागमने अशुभं वैद्यचेष्टितम् ।

**७४१-यश्च वैद्यं सुप्तं नग्नं च भूमौ शयानमभ्यक्तं मुक्तकेशं दक्षिणाभिमुखं विक्लवं छिन्दन्तं भिन्दन्तमग्निपितृकार्यप्रवणमशस्तं चिन्तयन्तं कथयन्तं वोपतिष्ठति ॥ १०**

७४१-यो वा इत्यादिभिषग्विशेषणम् ७४१

११ दूतस्याशुभचेष्टितम् ।

**७४२-यो वा दिशं याम्यां प्रतिकृताञ्जलिर्विषमैकपादस्थः ॥ ११**

७४२-विषमो भूमावसम्यक्स्थित एकपादस्तेन तिष्ठति यः ७४२

१२ अशुभमातुरसंश्रयदूतवाक्यम् ।

**७४३-यस्मिन् व्याधिताश्रयं कथयति दूते भिषगशुभमिन्द्रियार्थमुपलक्षयेत् संकल्पयेद्वा तं च नानुयायात् ॥ १२**

७४३-यस्मिन् व्याधिताश्रयमातुरमुद्दिश्य दूते कथयत्यशुभमिन्द्रियार्थं शब्दस्पर्शादिकं भिषगनुभवति वा संकल्पयति वा तं दूतं नानुयायात् ७४३

१३ वैद्यस्य प्रयाणे रीतिः ।

**७४४-अतोऽन्यथा पुनः करुणापेशलेन मनसा सौमनस्यवता मातापितृसमेनातुरस्यात्यन्तमारोग्यमाशंसमानेन प्रयातव्यम् ॥ १३**

७४४-अतो यथोक्तादातुराद्वर्णोत्तम इत्यादिदर्शिताद्विपरीत्ये करुणापेशलत्वादियुक्तेन भिषजा आतुरं द्रष्टुं प्रयातव्यम् ।

१३ अष्टोत्तरशतं मङ्गलानि ।

**७४५प्रस्थानगमनप्रवेशेषु दधिमधुघृततिलाजपुष्पाक्षताः दुर्वाङ्कुरार्द्रार्थमुक्तामणिछत्रदूर्वाङ्कुरादर्शकन्याध्वजस्यन्दनार्द्रपदाक्षा नृपश्रीतरुभद्रपीठानि, सस्यानि, मत्स्यौ हयौ हंसचाषौ, वृषः, केसरी, दक्षिणावर्तशङ्खाब्जासिद्धार्थकारोचनाः स्वस्तिकस्तोरणम्, कच्चिका वेणवो वरवधूर्मदसिक्तगण्डो गजस्तोयलम्बोऽम्बुदः पूर्णकुम्भो हरिद्रास्त्रिरिन्द्रः फलान्यार्द्रमांसं सितं चामरं गौः सवत्साऽङ्गना पुत्रिणी, मानुषं वर्धमानं, सहस्रं नराणां, प्रयुक्तानि यानानि, धन्वन्तरिर्वामनो ब्राह्मणो भूमिरभ्युद्धृता, सिद्धमन्त्र वराहश्च तोयोत्थितस्त्रिर्णयन मधुसूदन-स्कन्द-पद्मासनाः, लोकपालाः सुराः, खं दिशोऽग्निः, सरांसि, स्रवन्त्य, समुद्राः मरुतो, ज्योतिषं, धर्मशास्त्राणि, तीर्थानि, काव्य, धर्मार्थकामामृतं वालखिल्यादयो, वेदवांश्च निधिः, कौस्तुभः, काञ्चनं, माणिभद्रः, सुमेरुः, प्रियङ्गु, प्रदीपो, वर्णामोदकौ, दितिरादितिररुन्धती**

९५ °थयन्त चोप°-क.

**ऋद्धि, सौवि तुर्मोकारागढ़ा, शची, देवसेना, स्वधा शौ तिलक्ष्मी , सरस्वत्यपत्य, क्षमा, स्वस्तिश दा वषटकार ओंकारपु नाह-धमक्रियाश्च तदष्टोत्तर मङ्गल ना शत दर्शनात्, स्पर्शनात्, कीत नाच्चाशुभानि व्यपाह्यार्थसिद्धिं दिश त्युत्तमाम्। अपि च—॥ १४**

७४५–वैश्यस्या यस्य च दध्यादिक मङ्गलानामष्टोत्तरशत दर्शनादिभ्योऽशुभानि यपोह्य उत्तमामर्थसिद्धिं दिशति। अक्षता यवा । स्य दन रथादि । अष्टापद चतुरङ्गफलक । अक्षा पाशा । श्रीतरुर्बिल्ववृक्ष । भद्रपीठं देवासन चतुष्कोणम्। स्वस्तिक आकारविशेष । काचका वेणवो ये वेणवो वायुना शब्दायन्ते । वरवधूरुत्तमा स्त्री । वधमान मल्लकविशेष । याना पश्चादानि प्रयुक्तानि । बोधवर न धन्व तरिभिन्नान्वित । वामनो य कश्चित् । तथा ब्राह्म । वराह सूकर तोयमध्यादुत्थित सन् । अमृत शब्द एव । मा मन्त्रो यक्षविशेष । दितिरसुरमाता । अदिति सुरमाता । देवसेना तत्सज्ञा । स्वधा पित म्। शान्ति धमस्य । अपत्य स्वस्य। क्षमा धमस्य । स्वस्तीत्यय शब्द । अपि चति समुच्चये ७४५

टि प णी—अस्मिन्सूत्रे एव पाठान्तराणि दृश्य ते–दुर्वाङ्कुर –दुर्वाङ्कुश ,अष्टापदाक्षा –अक्षापञ्चर वा ,धमाथ कामामृतम्–धमार्थकामा न्वितम्, ऋद्धि–बुद्धि , स्वधा–सुधा।

१५ प्रस्थानादिषु वामा पक्षिण ।

**७४६–पुन्नामान पक्षिणो वामो शिवा ॥ १५**

७४६–पुन्नामानो ये स्त्रीव्यञ्जना अपि पुरुषाभिधाना पुरुचापादयस्ते वामा शिवा शुभा प्रस्थानादिषु ७४६

१६ दक्षिणा प्राणिन ।

**७४७–शिवा श्यामा पिङ्गला कोकिलाऽरला छुच्छु द री सूकरी गृहगोधिकैकशफाश्च स्त्रीनामानो दक्षिणा । शि खी चपकश्येन ।जाजकपयश्च ॥ १६**

७४७–शिवादयो दक्षिणा शिवा इति सब ध । शिवा प्रसिद्धा । श्यामा। पिङ्गला । अरला चति पक्षिविशेषा । छुछु न्दरी ग धमूषिका । गृह गोधिका मुसली । एकशफा वडवादि । स्त्री नामान शिख्यादयश्च दक्षिणा शिवा । शिखी मयूर । चपक प्राणिविशेषस्तत्सज्ञक ७४७

१७ प्रवशे पशुपक्षि णामवस्थानम्।

**७४८–प्रवशे तु विपरीता ॥ १७**

७४८–ये वामा उक्तास्त प्रवश दक्षिणा शुभा ये च दक्षिणा उक्तास्ते प्रवेशे वामा ७४८

१८ प्रस्थानादिषु श्वसृ गालयोरवस्थानम् ।

**७४९–स्वत्र च दक्षिणाद्वाम मनमिष्टं श्वसृगाल यो ॥ १८**

१९ प्रस्थानादिषु मृगविहङ्गयोरवस्थानम ।

**७५०–विपरीत मृगविहङ्गयो ॥ १९**

७४९–मृगविहङ्गयोर्विपरीत वामाद्दक्षि णमनम्। सर्वत्र प्रस्थानादिषु ७५०

२० प्रस्थानादिषु दर्शनीया प्राणिन ।

**७५१–सवथापि दर्शनं भरद्वाजचाषभासनकुलानाम्**

७५१–सवथा सवप्रकार पुर पश्चात् प्रवशे प्रस्थाने चेत्ये वमादि भरद्वाजादीनां दर्शनम् ७५१

२१ कीतने एव प्रस्थानादिषु शिवा प्राणिन ।

**७५२ – शशसर्पगोधिगोधाजाविकसूकराणा तु कीतनमिष्टम् । न दर्शन विरुत वा ॥ २१**

७५२–शशादीनां कीतन पर्यायेणापि कीतनमेवेष। शस्त न दर्शनम् । दर्शन विरुत चैव नो कीर्तनमिति विपरी ताथ ७५२

२२ प्रस्थानादिषु ऋक्षवानरयो कीतनमनिष्टम् ।

**७५३–विपरीतमृक्षवानरयो ॥ २२**

२३ प्रस्थानादिषु सवथा अशिवा प्राणिन ।

**७५४–सर्वमपि त्वनिष्ट सरटकुक्कुटबिडालोलूका नाम् ॥ २३**

७५४–सरटादीनां सबन्धि सवमनिष्टदर्शन विरुत कीतन च ७५४

२४ व्याधिविशेषेण छेद भद रुद्ध प्रवतनादिशब्दानां प्राशस्त्यम् ।

**७५५–तथा अन्त्यवृद्ध्यादिषु छदन द इष्टो गुल्मोदरा दिषु भेदन दोऽस्तीसाररक्तपित्तादिषु रुद्धशब्दोऽश्मर्यु दरादिषु प्रवतनशब्द इति । एवमन्येऽपि ध्वनयो यो ज्या ॥ २४**

७५५–अ त्यादिषु छेदनशब्द इष्ट । गु ल्मादिषु भेदशब्द रक्तपित्ता तिसारादिनहोन वमनविर चनवस्त्यादीना ग्रह णम्। एवमन्ये ध्वनयो योज्या । यथा पा ण्डुरोगे शून शब्द । कासे क्षतशब्द । श्वासे छिन्न । यक्ष्मिण स्थित इत्यवमादि ७५५

२५ स्थिरादिशब्दाना ध यवादित्रा ॥ शब्दाना च प्राशस्त्यम् ।

**७५६–सर्वत्रैव च स्थिरस्थावरवद्धमानत्राताचलध्रुव क्षेमशिवादय शब्दा ध यवादित्रस्वराश्च श्रेष्ठा ॥ २५**

७५६–स्थिरादिश दा ध यानां च वादित्रा ॥ ध्वनय सवत्र श्रेष्ठा ७५६

२६ चिकित्साप्रतिषेधका शब्दा ।

**७५७–क्षतहतपतिताकारानहारच्छेदभददाहहाहा प्रतिषेधादिश दाश्चिकित्साप्रतिषधाय ॥ २६**

७५७–क्षतादय प्रस्तुतप्रतिषधाय भवन्ति । शब्दा इति क्षतादिभिरभिमम्बध्यते । तेन क्षता पि नाया मपि ग्रहणम् अ मा नो न प्रतिषधशब्दा । आदिग्रहणेन निवृ यादि पर्याया ॥ ग्रहणम् । अथवा प्रतिषध इत्यय शब्द आदि यषा शब्दाना ते प्रतिषेधादय प्रतिषेधप्रवर । इत्यर्थ ७५७

९६ मा शुभा –क ख ९६ मान मद –क ख ९७ शिखिमरलकरीकारयनगजा –क ९८ शिखिम ल्लूकआवण्ड श्वातनम –ख ९९ जाद्द्य –क ख १० रठपुष्कुरावि –क १०१ पुरावताद् –क ख

७६६-निद्रादौ दृष्ट स्वप्नोऽपि शुभाशुभश्चिरात् फल मपि च करोति। गोसर्गो रात्रे क्षय तस्मिन् सद्य फल महाफल च। शुभश्च स्वप्न स्वप्नान्तर निद्रयानुपहतो महत् फल ददाति सद्यश्च ७६६

३६ महत्फलजनक स्वप्नोपाया ।

७६७-निन्द्या च पुनरनुपहत प्रतीपैर्वा वचोभिर्दा नयमनियमादिभिर्वा ॥ ३६

७६७-तथा प्रतीपैद्र स्वप्नप्रतिकूलैर्वचोभिर्नोपहत । अथवा स सव स्वप्नो दानादिभिमहत् सद्यश्च फल ददाति। यम इन्द्रियाणा विषयेभ्यो निवृत्ति । नियम सद्वृत्तम । आदिग्रहणन मणिम त्रादाना ग्रहणम् ७६७

३७ ज्वरजनक स्वप्न ।

७६८-तत्र य प्रेतै सह मद्यं पिबन् शुनाऽऽकृष्यते, स हन्यते ज्वरेण ॥ ३७

३८ रक्तपित्तजनक स्वप्न ।

७६९-यो लाक्षारक्तामम्बरं पश्यति या वा रक्त देह । यवस्रो हसन्नाया ह्रीयते स रक्त पित्तेन ॥ ३८

३९ यक्ष्मजनक स्वप्न ।

७७०-यो याम्या दिश खरोष्ट्रमहिषवराहान्यतमेन स यक्ष्मणा ॥ ३९

४० गुल्मजनक स्वप्न ।

७७१-यस्य कण्टकिनी लता वशस्तालो वा हृदि जायते स गुल्मेन ॥ ४०

४१ शिरश्छदजनक स्वप्न ।

७७२-यस्य शिरसि म शिरोरोगेण वा शिरश्छदनेन

४२ कुष्ठजनक स्वप्न ।

७७३-यस्य नग्नस्य घृतावलिप्तस्याग्निमनर्चिष जुह्वतो जायन्ते पद्मा उरसि स कुष्ठेन ॥ ४२

४३ प्रमेहजनक स्वप्न ।

७७४-यश्चण्डालै सह स्नेह पिबति स प्रमेहे । ॥ ४३

४४ उन्मादजनक स्वप्न ।

७७५-या [१०४] रक्षोभि सह नत्यन् सु निमज्जति स उन्मादेन ॥ ४४

४५ अपस्मारजनक स्वप्न ।

७७६-यो मत्त सोऽपस्मारेण ॥ ४५

४६ नेत्ररोगजनक स्वप्न ।

७७७-यश्चन्द्रसूर्ययोरुपरागं पश्यति तस्य नेत्ररोग उपजायत ॥ ४६

४७ नेत्रविनाशजनक स्वप्न ।

७७८-यस्तयो पतन तस्य नेत्रविनाश ॥ ४७

७६८-७७८-तत्रेत्यादिना स्वप्नविशेषान् दर्शयति-सुबोधम्। प्रेता निकृष्टा भूतविशेषा। यस्य हृदि कण्टकालतादिक जायत स गुल्मेन ह यत इति सब ध । यस्य पुन कण्टकिलतादिक शिरसि जायते स शिरोरोगेण ह यते। शस्त्रेण कृत्त शिर च्छेदेन मरणभूतेन हन्यते । सर्वत्र तृतीया तद्ध यत इति सबध्यते । उपरागो राहुच्छायया तयोरिति च द्रसूर्ययो ७६८-७७८

४८ छर्दिजनक स्वप्न ।

७७९-य शष्कुलीरपूपान्वाऽभ्यवहृत्य प्रतिबुद्धश्छर्दयति ॥ ४८

७७९-शष्कुली तिलकृता छर्दयति तथैव यत् स्वप्ने जग्धम् ७७९

४९ स्वस्थातुरयोरिष्टफला स्वप्ना ।

७८०-यस्य शिरसि लतादयो जायन्ते वयासि च निलीयन्ते मौण्ड्य वा भवति, यो गृध्रोलूककाकाद्य प्रेतपिशाचरक्षोद्रविडान्ध्रस्त्रीचण्डालाद्यैर्वा परिवार्यते, दक्षिणाभिमुख वा स्त्रिया नृत्यन्त्याकृष्यते अन्तावसायिभिर्वा स्वय वा दिग्वासा याति शून्याटव्या वा कपिरथेन प्रेतै प्रव्रजितैर्वा परिष्वज्यते नग्ना ना रक्ता स्रज धारयति, पङ्कादिग्धो हसति, नृत्यति वा, वेत्रवनाद कतृणगहने रूक्ष यत, पतति वा पांसूपधानाया भुवि, वल्मीकभस्मश्मशानश्वभ्रायतनेषु वा पङ्ककूपकलुषोदकेषु वा मज्जति, स्रोतसा वा ह्रियते, रक्तकुसुमवना भूमि गुहांम धकाराचिता पापकमालय सबाध जननीं वा प्रविशति, मत्स्येन वा ग्रस्यते। श्मश्रुकर्म च यो गात्रवृद्धिं विवाहं चानुभवति शैल प्रासादात्पतत्यारोहति वा कूपेषु पाशुशाल्मली कोविदारकिंशुकपारिभद्रकान्या वा पराजीयते, बध्यते, छर्दयति विरिच्यते, हृष्यति, लभते वा हिरण्यलोहलवणतैलपिण्याककार्पासानश्नाति पक्वान्नं, पिबति मद्य,सह वाऽन्य याति,निर्भत्स्यते वा कुपितै पितृभि चन्द्रार्कताराप्रदीपदेवतानेत्रदशनान्यनुपततो नश्यतो वा पश्यति चक्षुर्वा बाहुमङ्ग वा विभिद्यमानं पुरुषान् वा नग्नान् कषायवाससोऽनार्यान् दण्डपाशहस्तान् कृष्णान् रक्ताक्षान् स्त्रिय वा कृष्णशुक्लदर्शना दीर्घकेशस्तनीं कालरात्रिरूपां ते व्याधिता पञ्चताम्। प्लुवन्ति स्वस्थास्तु जीवितसंदेहमिति। भवति चात्र-॥ ४९

७८०-लतादयो लतावशतालाद्य । वयासि पक्षिण, गृध्रादिभि परिवारणम् । आन्ध्रद्रविडौ दाक्षिणात्यजनपदनामनी। अन्तावसायिनश्च डोमादय । वन काष्ठविशेष । वल्मीकादिषु वा पतति। वल्मीक पिपीलिकास्थानम् । सबाध सकटम् । जननी माता वयो वृद्धियथा बाल्ये यौवन बाधक वा। यूपादीन् वा आरोहति। चन्द्रादीन् पततो नश्यतो वा य पश्यति। पक्वमत्स्यच्छष्कुल्यपूपादिकं दृष्ट्वा व्याधिता निश्चित पञ्चत्व प्राप्नुवन्ति। स्वस्थास्तु जीवित संदेहमिति।भवति चात्रेति पद्यार म त तरीति ७८

५० स्वप्नाना संप्राप्ति ।

७८१-मनोवहानां पूर्णत्वात् स्रोतसा प्रबलैर्मलै । दृश्य ते दारुणा स्वप्ना विनाशाभिमुखात्माभि

१०४ यो रक्षो-' अयग्रयो गपुस्तके नास्ति। १०५ तैर्गोध्न वाभ -क १०६ नत्य (याऽऽकृ'-क ख
१०७ 'ध्यत, वायसादिभिर्वा स्व -क ख १०८ गुहान्धक'-क

५१ शुभफलप्रद स्वप्न. ।

७८२-अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव य. पुनः ।
पश्येत् सौम्यं शुभं तस्य शुभमेव फल भवेत्

५२ प्रशस्ता स्वप्ना ।

७८३-देवान् द्विजान् गोवृषभान् जीवत सुहृदो नृपान्
साधून्यशस्विनोवह्निमिद्धं स्वच्छाञ्जलाशयान्
कन्या.कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः
नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम् ॥ ५३
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।
शुक्ला सुमनसो वस्त्रममेध्यालेपन फलम् ॥
शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।
आरोहेत् गोऽश्वयान च तरेन्नदह्रदोदधीन् ५५
पूर्वोत्तरेण गमनमगम्यागमन मृतिः ।
सबाधाग्निस्तुति. स्पर्शास्तारकाचलभास्वताम्
रोदनं पतितोत्थान द्विषेतां चावमर्दनम् ।
यस्य स्यादायुरारोग्य वित्त स बहुशोऽश्नुते

७८१-७८३-मनोवहानामित्यादि सुबोधम । देवानित्यादिना शुभा स्वप्ना उच्यन्ते । देवानित्यादेयं. पश्येदिति सबन्ध । तथा छत्रादीनि यो लभते शैलादींश्चारोहेत्, नद्यादींश्च तरेत्, पूर्वोत्तरगमनादिक च यस्य स्यात्स आयुरादिकमश्नुते । नराशनो राक्षस । उक्षित सिक्तम् । सुमनस पुष्पाणि । ह्रदो गम्भीर । अगम्या सकुल्यान्त्यजातिश्च । मृतिर्मरणम् ७८१-७८३

५३ अप्रशस्त स्वप्न ।

७८४-पितृदेवद्विजातीना क्रुद्धभीतकृशात्मनाम् ।
मलिनाम्बरपुष्पाणां दर्शनं न प्रशस्यते ॥ ५८

५४ पित्रादीना तुष्टाना दर्शन भाषण च स्वप्ने हितम् ।

७८५-तेषामेव तु तुष्टानां शुद्धपुष्पाम्बरात्मनाम् ।
दर्शनं शस्यते स्वप्ने तैश्च संभाषण शुभम् ॥ ५९

५५ स्वप्नदर्शने चिकित्सा ।

७८६-दृष्ट्वा स्वप्नान् दारुणान् शोभनान् वा
प्रात. स्नातः सर्षपानग्निवर्णान् ।
हुत्वा सावित्र्या सर्पिषाक्तांस्तिलान्वा
पूत. पापैर्मुच्यते व्याधिभिश्च ॥ ६०

७८४-७८६-पितृप्रभृतीना शुभानामपि क्रुद्धाद्यात्मना सता मलिनाम्बरपुष्पधारिणा च दर्शन नेष्यते । तेषामेव पित्रादीना तुष्टादिगुणाना दर्शन शस्यत इति सबन्ध । तैरिति तुष्टादिगुणै पित्रादिभि ७८४-७८६

५६ आरोग्यलक्षणम् ।

७८७-मङ्गलाचारसंपन्नैः परिवारस्तथातुरः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रह ॥ ६१
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ६२

७८७-मङ्गलाचारसपन्नादिकमारोग्यलक्षणम् । प्रभूताना द्रव्याणा संग्रहस्तथोक्त । सत्त्वलक्षणानि शौचास्तिक्यादीनि ७८७

५७ शारीरस्थानशब्दविवृत्ति ।

७८८-इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।
शरीरस्य तत. स्थानं शारीरमिदमुच्यते ॥ ६३

इति वैद्यपति सिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्ग संग्रहसहितायां शारीरस्थाने दूतादिविज्ञानीयो नाम द्वादशोऽध्याय. ॥ १२ ॥

७८८-स्थाननाम निरूप्यते । अस्मिन् स्थाने शरीरस्य जन्मन प्रभृति मरण यावद्यत. सम्यगुदाहृत प्रदर्शितम् । अत स्थान शारीरमुच्यत इति ७८८

इति श्रीमहामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां शारीरस्थाने द्वादशोऽध्याय ॥ १२ ॥

॥ इति शारीरस्थानं समाप्तम् ॥

१०९ °क्षित । य. प°-क. ख. ११० °तां चोपम°-क. १११ °सपत्नपरि°-ग. ११२ °दस्तदेवारोग्यल°-क.

द्वादशोऽध्याय ।

(७३२, च. ८ १२ ९, सु. सू २९ १ (७३३) सु. सू २९ ३,४ (७३४) च ३ १२ १६, सु स. २९ ५,६ (७३५) च. इ. १२ १८, सु म २९ ६,७,८,१२,१४ (७३६) सु सू २९ ९ (७३७) च इ १२ १९,२०, सु सू २९ ११,१२,१३ (७३८) च इ. १२ २५ (७३९) सु सू २९ २०,२१,२२ (७४०) च इ १२ ६८,६९. ७०, सु सू २९ १७,१८,१९ (७४१) च इ. १२ १०, ११,१२, सु सू २९ १५,१६.१७ (७४२) सु सू २९ १४ (७४३) च इ १२ २१ (७४४) सु सू १०३ (७४५) च इ १२ ७१-८०, सु सू २९ २७-३३ सु म २९ ३६ (७४७) सु म २९ ३६ (७४८) (७४९) सु स २९ ३६ (७५०) च इ १२ २९,३० (७५१) सु म २९ ३६ (७५२) सु सू २९ ३६,३७ (७५४) च इ १२ २९,३० (७५५) सु म २९ ४२,४३ (७५६) च इ १२ ७९ सु सू २९ ३०,३१ (७५७) च इ १२ २६, सु म २९ ४४, ४५ (७५८) च इ १२ २९,३०, सु म २९ ३४,३५ (७५९) च इ. १२ १९,२०, सु म २९ ४७,४८ (७६०) च इ १० ३३, सु सू २९ ५२ (७६१) सु सू ३२ ४ (७६२) सु म ३२ ४ (७६३) सु स ३२ ४, च इ १२ ३६,३७ (७६४) च. इ ५ ४३ (७६५) च इ ५ ४४ सु सू २९ ६७ (७६६) च इ ५ ४५ (७६७) च इ ५ ४५ (७६८) च इ ५ ९ सु. स २९.६८ (७६९) च इ ५ १०,११ (७७०) च इ ५ ८ (७७१) च इ ५. १३ सु सू २९ ६९ (७७२) सु. सू २९.६९ (७७३) च इ. ५ १४,१५ (७७४) च इ ५ १६.१७ (७७५) च इ ५ २०,२१ सु सू २९ ६८ (७७६) च इ ५ २२,२३ सु सू २९ ६८ (७७७) च इ. ४ १४ (७७८) च इ ५ ३५ (७७९) च इ ५ २५ सु सू २९ ७० (७८०) च इ ५ २७-४० (७८१) च इ ५ ४१ (७८२) च इ ५ ४६ (७८३) च इ १२ ८२-८६, सु सू २९ ७५-८१ (७८५) च इ १२ ८८ (७८६) सु म २९ ७१-७४ (७८७) च इ १२ ८०,८१,८७ (७८८) च शा ८ ६९

( ९६ षण्णवतितमपृष्ठादपकर्ष )

उक्ता सार्द्धास्त्रियो व्यामा. पुंसामन्त्राणि सूरिभि. ।
अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्दिशेत ८४
१२८-उण्डुकश्च कटी चापि त्रिक वस्तिश्च वङ्क्षणौ॥
कण्डराणा प्ररोह स्यान्मेढ्रोऽध्वा वीर्य्यमूत्रयो.॥
१२९-स एव गर्भस्याधान कुर्य्याद्गर्भाशये स्त्रिया ।
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता सा च कीर्तिता
१३०-तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता ।
वृषणौ भवत सारात्कफासृङ्मांसमेदसाम् ॥८७॥
१३१-वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ ।
गुदस्य मानं सर्वस्य सार्द्ध स्याच्चतुरङ्गुलम् ॥८८॥
१३२-तत्र स्युर्वलयस्तिस्र. शङ्खावर्तनिभास्तु ता
प्रवाहिणी भवेत्पूर्वा सार्द्धाङ्गुलमिता मता८९
१३३-उत्सर्जनी तु तदध सा सार्द्धाङ्गुलसम्मिता
तस्याध. संवरणी स्यादेकाङ्गुलसमा मता ॥९०
अर्द्धाङ्गुलप्रमाण तु बुधैर्गुदमुख मतम् । मलोत्सर्गस्य मार्गोऽय पायुर्देहे विनिर्मित. ॥ ९१ ॥
१३४-पुंसः प्रोथौ स्मृतौ यौ तु, तौ नितम्बौ च योषित ।
तयो. कुकुन्दरे स्याता, सक्थिनी त्वङ्गमष्टमम्
१३५-तदुपाङ्गानि च क्रमो जानुनी पिण्डिकाद्वयम्।
जङ्घे द्वे, घुटिके, पार्ष्णि तले, च प्रपदे तथा ।
पादाङ्गुल्यस्तत्र दश तासां नखा दश ॥ ९२ ॥
—भावप्रकाश पू खं. ३

## प्राणानिलस्य शरीरव्यापारः

१३६-नाभिस्थः प्राणपवन. स्पृष्ट्वा हृत्कमलान्तरम्४८
कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतम् ।
पीत्वा चाम्बरपीयुष पुनरायाति वेगतः ॥ ४९ ॥
प्रीणयन्देहमखिल जीवयञ्जठरानलम् ।
—शार्ङ्गधरसंहिता । प्रथम खं. अ. ५

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक-पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृतः

टिप्पण्या च परिष्कृतः

महामहोपाध्यायेन्दुविरचितशशिलेखाख्यव्याख्यया समेतश्च

श्रीमद्वाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः ।

## शारीरपरिशिष्टम् ।

— १ —

### सर्वभूतचिन्ताशारीरम् ।

१-अथातः सर्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥१

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

२-सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम । तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ॥ ३ ॥

३-तस्माद् व्यक्तान्महानुत्पद्यते तल्लिङ्ग एव तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते, स त्रिविधो वैकारिकस्तैजसो भूतादिरिति तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते, तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥ ४ ॥

४-तत्र, बुद्धीन्द्रियाणां शब्दादयो विषयाः कर्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि ॥ ५ ॥

५-अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः शेषाः षोडश विकाराः ॥ ६ ॥

६-स्वः स्वश्चैषां विषयोऽधिभूतं स्वयमध्यात्मम् अधिदैवतं तु—बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य वाचोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति ॥ ६ ॥

७-तत्र सर्व एवाचेतन एष वर्गः, पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति । सत्यपि चाचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति क्षीरादींश्चात्र हेतूनुदाहरन्ति ॥ ८ ॥

८-अत ऊर्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः । तद्यथा—उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभावपि नित्यौ, उभावप्यनपरौ, उभौ च सर्वगताविति एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति, बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्माणोऽप्रसवधर्माणो मध्यस्थधर्माणश्चेति ॥ ९ ॥

९-तत्र कारणानुरूपं कार्यमिति कृत्वा सर्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥ १०

वैद्यके तु—

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ॥
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥ ११ ॥
तन्मया नैव भूतानि तद्गुणान्येव चादिशत् ॥
तश्च तल्लक्षणं कृत्स्नो भूतग्रामो व्यजन्यत ॥ १२ ॥
तस्योपयोगाऽभिहितश्चिकित्सा प्रति सर्वदा ॥
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते

१०-यतोऽभिहितं—तत्सम्भवद्रव्यसमूहो भूतादिरुक्तः भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते, तथेन्द्रियार्थाः ॥ १४ ॥

## भवति चात्र

इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः ॥
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥१५

११-न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगता. क्षेत्रज्ञा नित्याश्च असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषप्रत्यापकान् हेतूनुदाहरन्ति, आयुर्वेदशास्त्रसिद्धान्तेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च, तिर्यग्योनिमानुषदेवेषु सचरन्ति धर्माधर्मनिमित्तम्, त एतेऽनुमानग्राह्या. परमसूक्ष्माश्चेतनावन्त शाश्वता लोहितरेतसो. सन्निपातेष्वाभिव्यज्यन्ते, यतोऽभिहितं--पञ्चमहाभूतशरीरिसमवाय. पुरुष इति, स एष कर्मपुरुषश्चिकित्साधिकृत. ॥ १६ ॥

१२-तस्य सुखदु.खे इच्छाद्वेषौ प्रयत्न प्राणापानावुन्मेषनिमेषौ बुद्धिर्मन.सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणा. ॥ १७ ॥

१३-सात्त्विकास्तु-आनृशस्य संविभागरुचिता तितिक्षा सत्य धर्म आस्तिक्य ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च ॥

१४-राजसास्तु-दुःखबहुलताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्ष. काम क्रोधश्च ॥

१५-तामसास्तु-विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्मशीलता निद्रालुत्वं चेति ॥ १८ ॥

१६-आन्तरिक्षास्तु-शब्द शब्देन्द्रिय सर्वच्छिद्रसमूहो विविक्तता च, ॥

१७-वायव्यास्तु-स्पर्श. स्पर्शेन्द्रिय सर्वचेष्टासमूह. सर्वशरीरस्पन्दनं लघुता च,

१८-तैजसास्तु-रूप रूपेन्द्रिय वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्य शौर्यं च, ॥

१९-आप्यास्तु-रसो रसनेन्द्रिय सर्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च, ।

२०-पार्थिवास्तु-गन्धो गन्धेन्द्रिय सर्वमूर्तसमूहो गुरुता चेति ॥ १९ ॥

२१-तत्र सत्त्वबहुलमाकाशं, रजोबहुलो वायु., सत्त्वरजोबहुलोऽग्निः, सत्त्वतमोबहुला आप., तमोबहुला पृथिवीति ॥ २० ॥

### श्लोकौ चात्र भवतः ।

२२-अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् ॥
स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते ॥ २१ ॥
२३-अष्टौ प्रकृतय. प्रोक्ता विकारा. षोडशैव तु ॥
क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयो. ॥ २२ ॥

इति श्रीसुश्रुतसंहितायां शारीरस्थाने सर्वभूतचिन्ताशारीरं नामाध्याय प्रथम. ।

— २ —

# गर्भोत्पत्तिः ।

२४-तत्र ( तयो. स्थावरजङ्गमयोर्मध्ये ) चतुर्विधो भूतग्राम संस्वेदजरायुजाण्डजोद्भिज्जसंज्ञः (सु. सू. १ ३०)।

२५-शुक्रार्तवसयोगो गर्भत्वमुपैति ( च )

२६-रक्तलक्षणमार्तवं गर्भकृच्च (सु. सू. १५ ७ )।

२७-तत्र स्त्रीपुंसयो. संयोगे तेजः शरीराद्वायुरुदीरयति, ततस्तेजोऽनिलसन्निपाताच्छुक्र च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्तवेन, ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भाशयमनुप्रतिपद्यते (सु शा ३ ४) ( अग्नीषोमीयत्वाद्गर्भस्य ) ।

२८-शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भ संज्ञा भवति ( च शा. ४ ५ )

२९-पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्ग. ऋतुकाले, यदा चानयोस्तथैव युक्ते च संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगत जीवोऽवक्रामति सत्त्वसम्प्रयोगात्तदा गर्भोऽभिनिवर्तते ( च. शा. ३ ३ )

३०-क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता यः कोऽसावित्येवमादिभिः पर्यायवाचकैर्नामभिरभिधीयते दैवसङ्गादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्यमाणः, गर्भाशयमनुप्रविश्यावतिष्ठते ( सु शा ३ ४ )

३१ तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् नेन्धन दृश्यते गच्छत्सत्त्वो गर्भाशयं तथा, कारणानुविधायित्वात्कार्याणां तत्स्वभावता नानायोन्याकृतीः सत्त्वो धत्तेऽतो द्रुतलोहवत् (अ. हृ शा १ ३ ४ )

३२-शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं 'गर्भ' इत्युच्यते, त चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्धयति, एव विवर्धित स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा 'शरीरम्' इति संज्ञां लभते ( सु शा ५.३ )

३३-इतरेषां ( पृथिवीवाय्वाकाशाना ) अप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात्परस्परानुग्रहात्परस्परानुप्रवेशाच्च ( सु. शा. ३ ३ )

३४-भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात् ( च. शा. २. ३१ )

વૃક્કૌ ગવિન્યૌ વસ્તિશ્ચ ।






३५-स्मात्ममातापितृसम्भवानि ।
भूतानि विद्यादश पदं च षड् ।
चत्वारि तत्रात्मनि संश्रितानि ।
स्थितस्तथात्मा च चतुर्षु तेषु ।
भूतानि मातापितृसम्भवानि ।
रजश्च शुक्रं च वदन्ति गर्भे ।
आप्याय्यते शुक्रमसृक् च भूतै-।
र्यैस्तानि भूतानि रसाद्भवानि ।
भूतानि चत्वारि तु कर्मजानि ।
न्यात्मा महीनानि विशन्ति गर्भम् (च शा २ ३३-३ )।

३६-रूपादि रूपप्रभव प्रसिद्ध (च शा २ ३६)

३७-गर्भस्तु खल्वन्तरिक्षवाय्वग्नितोयभूमिविकार श्चेतनाधिष्ठानभूत एवमनया युक्त्या पञ्चमहाभूत विकारसमुदायात्मको गर्भश्चेतनाधात्वधिष्ठानभूत स ह्यस्य षष्ठो धातुरुक्त (च शा ४ ६)

३८-देहग्रहणेऽपि प्रवर्तमान पूर्वतरमाकाशमेवा पादत्ते, तत क्रमेण व्यक्ततरगुणान् धातून् वाय्वादि काश्चतुर सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति (च शा ४ ८)

३९-बीजात्मकर्महाभूत सूक्ष्म सत्त्वानुगै स मातुश्चाहाररसजै क्रमात् कुक्षौ विवर्धते
(अ हृ शा १२)

४०-तत्र स्यात् स्यानि देहेऽस्मिन् अत्र शब्दो विचिन्तता
[illegible]
आस्या जिह्वा रसस्तत्र घ्राणस्थाप्यं पार्थिवम्
(अ हृ शा ३ ३ ४)

## - ३ -

## शारीरे केचन विशिष्टा अवयवा ।

### गुदम्

४१-असृज श्लेष्मणश्चापि य प्रसाद परो मत ।
त पच्यमान पित्तेन वायुश्चाप्यनुधावति ॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिन ॥
(सु शा ४ २६- २७)

उत्तरगुद चाधरगुद मातृज सम्भवति (च शा ३-१२)

अथ महत् छिद्रम् ( च शा ७ १२ )

४२-तत्र स्थूलान्त्रप्रतिबद्धमर्धपञ्चाङ्गुल गुदमाहु । तस्मिन् वलयस्तिस्रोऽध्यर्धाङ्गुलान्तरसम्भूता (१)प्रवाहणी (२)विसर्जनी (३)संवरणी चाति चतुरङ्गुलायता सर्वास्तिर्यगेकाङ्गुलोच्छ्रिता ॥
शङ्खावर्तनिभाश्चापि उपर्युपरि संस्थिता
गजतालुनिभाश्चापि वर्णत संप्रकीर्तिता ।
रोमान्तेभ्यो यवाध्यर्धो गुदोष्ठ परिकीर्तित
प्रथमा तु गुदौष्ठादङ्गुलमात्रे (सु नि अ २ ५,६,७ )

४३-( गुदं ) बहिर्मुख स्रोतस् ( सु शा ५ १० )

४४-पायु कर्मेन्द्रियम् ( च शा ७ ७)

—०—

### वस्ति

४५-असृज श्लेष्मणश्चापि य प्रसाद परो मत ।
त पच्यमान पित्तेन वायुश्चाप्यनुधावति ॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिन
(सु शा ४ २६, २७ )

४६ वस्तिस्तु स्थूलगुदमुष्कसेवनीशुक्रमूत्रवाहि नीना नाडीना मध्ये मूत्राधारोऽम्बुवहाना सर्वस्रोतसामुदधिरिवापगाना प्रतिष्ठा (च सि अ ९ ४ )

४७-सर्वेषा पुनर्मूत्ररोगाणामधिष्ठानं वस्ति । स समस्तमभिहित प्राक् (अ स शा ४८१) स चाधोमुखोऽपि मूत्रवहनाडीषु सूक्ष्ममुखसहस्रनिस्यन्देन मूत्रस्ये नापिरत नवो घट इवाप्सु निमग्नमुखोऽपि पार्श्वेभ्योऽम्भसा पूर्यते (अ स नि-अ ९)

४७ (अ)-नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुख
अलाबुरूपेण सिरास्नायुपरिग्रह

४७ (आ)-पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु या
तर्पयन्ति सदा मूत्र सरित सागर यथा
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासा सहस्रश
नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्
जाग्रत स्वपतश्चैव स निस्यन्देन पूर्यते
आमुखात् सलिले न्यस्त पार्श्वेभ्य पूर्यते नव ।
घटो यथा, तथा विद्धि वस्तिर्मूत्रेण पूर्यते
(सु नि ३ २१-२३ )

### गवीन्यौ

४७ (इ)-यदान्त्रेषु गवीन्योर्यद्वस्तावधिसंश्रितम्
एवा ते मूत्र मुच्यता बहिर्बालिति सर्वकम्

एष मन्त्र अथर्ववेदस्य प्रथमकाण्डे प्रथमानुवाके तृतीयासूक्ते मूत्ररोधप्रसङ्गे शरशलाकयामूत्रसंस्राव । प्रसङ्गा एष्यते। अस्य चेदं सायणभाष्यम्-

आन्त्रेषु उदरान्तर्गतपुरीतत्सु । अधिसप्तम्यर्थानुवाद् । यत् मूत्र संश्रित समवस्थित रोगवशात् बहिरनिर्गच्छन्निरुद्धमभूत् । तथा गवीन्यो आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ-इत्युच्यते। तयोरपि यत् मूत्र संश्रितम् । तथा वस्तौ-धनुराकारो मूत्राशयो वस्तिरुच्यते तत्रापि यत् मूत्र संश्रितमस्ति। ते सर्व अस्त्यानेषु निरुद्ध तत् मूत्र एव । एवम् यथापूर्वं मुच्यता निर्गच्छतु। निर्गमनप्रकारमेवाह सर्वकं सर्व तत् मूत्रम् बाल अनुकरणमेतत् दोऽयम् । इति-इवात्मकं शब्द कुर्वत् बहि शरीरात् बाह्यप्रदेशे मुच्यतामिति सम्बन्ध ।

## फुप्फुसः

४८शोणितफेनप्रभव फुप्फुसः ( सुश्रुत. शा ४ २५ )
( डल्हण-हृदयलग्नस्तनाधःस्थान. ) तत् (हृदयस्य) वामे फुप्फुसप्लीहौ ।

उदानवायोराधार फुप्फुस प्रोच्यते बुधैः
–शार्ङ्गधर प्रथमखण्ड अ ५ ४३

## हृदयम्

४८(अ)–चतुर्थे मासि सर्वाङ्गप्रत्यङ्गविभाग प्रव्यक्तो भवति । गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति, कस्मात्? तत्स्थानत्वात । तस्माद्गर्भश्चतुर्थे मास्याभिप्रायामिन्द्रियार्थेषु करोति ( सु. शा ३ १८ )

४९–सर्वाङ्गाभिनिर्वृत्तिर्युगपदिति धन्वतरिः तदुपपन्न सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तत्वाद्धृदयादीनाम् सर्वाङ्गानां ह्यस्य हृदयं मूलमधिष्ठान च केषाचिद्भावानाम् न च तस्मात्पूर्वाभिनिर्वृत्तिरेषां तस्माद्धृदयप्रभृतीनां सर्वाङ्गाना तुल्यकालाभिनिर्वृत्ति, सर्वे भावा ह्यन्योन्यप्रतिबद्धा , तस्माद्यथाभूतदर्शन साधु ( च. शा ६ २१. )

५०–अपरा चास्य मातु प्रसक्ता हृदये, मातृहृदय ह्यस्य तामपरामभिसंप्लवते सिराभि स्यन्दमानाभि ( च शा ६ २३ )

स तस्य रसोबलवर्णकर सपद्यते, स च सर्वरसवानाहारः स्त्रिया ह्यापन्नगर्भायास्त्रिधारस. प्रतिपद्यते–स्वशरीपुरष्टये, स्तन्याय, गर्भवृद्धये च । स तेनाहारेणोप ष्टब्धः वर्तयत्यन्तर्गतः ॥ च ६. २३

५१–हृदयं मातृजम् ( सु शा. ३. ३३ )

५२–हृदय चेतनाधिष्टानमेकम् ( च शा ७ ८ )

५३–शोणितकफप्रसादज हृदयम्, तदाश्रया हि धमन्य प्राणवहा तस्याधो वामत प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम च तद्धृदयं विशेषेण चेतनास्थान, अतस्तस्मिंस्तमसाऽऽवृते सर्वप्राणिन स्वपन्ति । ( सु॰ शा. ४. ३१ )

५४–पुण्डरीकेण सदृश हृदय स्यादधोमुखम्
जाग्रतस्तद्विकसति स्वपतश्च निमीलति ॥
(सु शा ४० ३१ ३२ )

५५–दिवा प्रबुध्यतेऽर्केण हृदय पुण्डरीकवत् ।
( चरक )

५६–हृदय बुद्धेर्मनसश्च स्थानम् ( सु शा ६ ३१)

५७–हृदये दश धमन्य. प्राणापानौ मनो बुद्धिश्चेतना महाभूतानि च नाभ्यामारा इव प्रतिष्ठितानि बहुभिश्च तन्मूलैर्मर्मसंज्ञकैः स्रोतोभिर्गगनमिव दिनकरकैर्व्याप्तमिदं शरीरम् । ( च सि ९ ४ )

५८–अर्थे दश महामूला. समासक्ता महाफला. ।
महच्चार्थश्च हृदय पर्यायैरुच्यते बुधैः ॥
षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।
आत्मा च सगुणश्चेतश्चिन्त्य च हृदि संश्रितम् ।
(च सू ३० ३,४)

५९–प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते
गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ।
तस्योपघातान्मूर्च्छायं भेदान्मरणमृच्छति ।
यद्धि तत स्पर्शविज्ञान धारि तत्तत्र संश्रितम् ।
तत परस्यौजस स्थान तत्र चैतन्यसग्रह. ।
हृदय महदर्थश्च तस्मादुक्त चिकित्सकैः ॥
तेन मूलेन महता महामूला मता दश ।
ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्तत.।
येनौजसा वर्तयन्ति प्रीणिता. सर्वदेहिन
यदृते सर्वभूताना जीवित नावतिष्ठति ।
यत सारमादौ गर्भस्य यत्तद्गर्भरसाद्रस ।
संवर्तमान हृदय समाविशति यत् पुरा ।
यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्
यच्छरीररसस्नेह प्राणा यत्र प्रतिष्ठिता.
तत्फला बहुधा वा ता. फलन्तीव महाफला ॥
(च सू ३० ५–११ )

६०–शिरोहृदयबस्त्यादिमर्माण्यस्था च सन्धय. ।
तन्निबद्धा शिरास्नायुकण्डराद्याश्च मध्यम·
( रोगमार्ग· अ ) ( हृदय सू १२.४७ )

६१–बुद्धिमेधाभिमानोत्साहैराभिप्रेतार्थसाधनात्साधक हृदयस्थ पित्तम् । (अ. सं सू २० )

## क्लोम ।

६२–उदकवहानां स्रोतसा तालु मूल क्लोम च ।
(च वि ५.१० )

६३–उदकवहे द्वे (स्रोतसी) तयोर्मूलं तालु क्लोम च।
(सु शा. ९.१२ )

६४–उदकवाहिनां ( स्रोतसा ) तालु मूल क्लोम च
(अ. स शा ५)

६५–पित्तानिलौ प्रवृद्धौ सौम्यान्धातूंश्च शोषयत.। रसवाहिनीश्च नाडीर्जिह्वामूलगलतालुक्लोम्न. संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ।
(च चि २२ ३,४ )

६६–प्रदुष्टानामिद विज्ञान जिह्वाताल्वोष्ठक्लोमशोष पिपासा चातिप्रवृद्धां दृष्ट्वा उदकवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् । (च वि. ५ १० )

६७–क्लोमजाया ( विद्रध्यां ) पिपासामुखशोषगलग्रहा । (च सू १७ १०१ )

६८–श्वासो यकृति हिक्का च पिपासा क्लोमजेऽधिका
(सु. नि ९ २२)

६९–श्वासो यकृति रोधस्तु प्लीन्युच्छ्वासस्य तृट् पुन. गलग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि ।
(अ सं नि ११ )

७०–अल्पप्रशोषी स्रस्ताङ्ग. सम्भृष्टपरुषच्छाविः । प्रसुप्तगात्रावयव शुष्कक्लोमगलानन ॥(सु उ ४१ २१)

७१–जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत् ।
(सु. उ ३९-१८२ )

७२-क्षुद्रवातो यदा कण्ठाध्यायामपरिघट्टितः
कण्ठे प्रपद्यते हिक्का तदा क्षुद्रा करोति सः
यतः प्रवर्तते पूर्वं ततः एव निवर्तते।
हृदयं क्लोम कण्ठं च तालुकं च समाश्रिता।
(च चि १७ ३४, ३७)

७३-विष्टकाणैर्या वर्गैर्मन्द समभिवर्धते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता।
(सु उ ५० १२)

७४-उरः कण्ठशिरः क्लोमपर्वाण्यामाशयो रसः।
मेदो घ्राणं रसनं च श्लेष्मस्थानानि। अत्राप्युरो विशेषेण।
(अ सं सू १२ ३)

७५-पञ्चदश कोष्ठाङ्गानि तद्यथा—नाभिश्च हृदयं च क्लोम च। यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधारश्चामाशयश्च पक्वाशयश्चोत्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपावहनं चेति।
(च शा ७ १०)

७६-पञ्चदश कोष्ठाङ्गानि तद्यथा—नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च इ० (भेलसंहिता शा ७)

७७-कोष्ठाङ्गानि स्थिता येषु हृदयं क्लोम फुप्फुसम्।
यकृत्प्लीहोण्डुक वृक्कौ नाभिडिम्बान्त्रबस्तयः।
(अ हृ शा ३ १२)

७८-मांसपेशिचया रक्तपद्माधारमधोमुखम्।
तस्य दक्षिणतः क्लोम यकृत् फुप्फुसमास्थितम्।
समानवायुनाध्मातात्फेनाद्देहाप्यपातितात्। किंचिद्
श्वितश्च स्तु जायते क्लोमसन्नितम्। (अरुणदत्त शा ३ १२)

७९-नाडीषु हृदयक्लोमनिबद्धास्वष्टादश (मधय)
(सु शा ५ २६)

८०-अष्टादश कण्डराणि निबद्धा हृदयक्लोम नाडीषु (मधय) (अ स)

८१-क हृदयबन्धनानि मनाड्यो मण्डलाः (सधय)
(सु शा ५ २७)

८२-हृदये चाक्षिकूटे च कण्ठे क्लोम्नि गुदे तथा।
ज्ञेया मण्डलसंधिस्तु भागेष्वेतेषु दन्तिन
(हस्त्यायुर्वेद ४ (० १६१)

८३-बाह्याभिघाताद्वातादिदोषप्रभवश्च तत्र हृदयं भिहते कासश्वासबलक्षयकण्ठशोषक्लोमापकर्षजिह्वानिर्गमशुष्कताउष्णापस्मारोन्मादप्रलापचित्तनाशादयः स्युः। (च सि ९ ७)

८४-शोणितकफप्रसादजं हृदयं तस्याधो वामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत्क्लोम च।
(सु शा ४ ३१)

८५-तस्य (हृदयस्य) वामपार्श्वे प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च। (अ स शा २९१)

८६-यकृद्धृदयपार्श्वे (पार्श्वे) च क्लोम वक्ष स्थितं विदुः। (हस्त्या शल्य ९ ११)

८७-तस्मात्क्रमेण जातस्य हृदयं जायतेऽग्रतः।
ततः सञ्जायते क्लोम यकृद् वृक्कौ ग्रयं तथा।
(हस्त्या० शा ९ ३०)

८८-यानि खल्वस्य गर्भस्य मातृजानि यानि चास्य मातृतः संभवन्ति तान्यनुव्याख्यास्यामः। तद्यथा त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधानं चामाशयश्च पक्वाशयश्चोत्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनं चेति मातृजानि।
(च शा ३ १०)

८९-स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा।
अत्यम्बुपानाद्धर्मोऽग्नौ मारुतः क्लोम्नि संश्रितः।
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः।
वर्धयेतां तृष्णां तस्य स्थानादुदकवाहिनः।
(च चि १३ ४३-४४)

* तदेतत्क्लोमस्थानविचारं बहवः काला जननानां सर्वेषामपि सम्यग्विमर्शं विधाय—

"मुखविवराभ्यन्तरे तालुसमीपे जिह्वामूलगले कण्ठनाड्याः निकटवर्तिभागे एव क्लोमाभिधोऽवयवः स्थितः इति" स्वकीयसिद्धान्तं क्लोमनिर्णयाख्ये प्रबन्धे भूतपूर्वा नि भा आ सम्मेलनाध्यक्षा वैद्यप्रधानमान्याः चार्येत्यादिबिरुदभाजः उप्पलसननिवासिनः कवडे इत्युपाह्वाः कृष्णशास्त्रिमहोदयाः प्रत्यपीपदन्।

## शिरः

९०-प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते। (च सू १७ १२)

९१-शिरसि इन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्यमिव गभस्तयः संश्रितानि (च सि ९ ४)

९२-मर्माणि बस्तिं हृदयं शिरश्च
प्राधान्यभूतानि वदन्ति तज्ज्ञाः।
प्राणाश्रयान् तानि पीडयन्तो
वातादयोऽसूनपि पीडयन्ति (चक्रपाणि च सि ९ ३)

९३-शङ्खौ कण्ठशिरोगुदम्।
हृदयं बस्तिनाभी च घ्नन्ति सद्यो हतानि वै (सु शा ९)

९४-ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः।
मूलप्रहारिणस्तस्माद्रोगान् शीघ्रतरं जयेत्।

९५-सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः
तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत्॥
(अ हृ उ २४ ५८-५९)

## नेत्रम्

९६-विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसंमितम्।
द्व्यङ्गुलं सर्वतः सार्धं भिषङ्नयनबुद्बुदम्॥
सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम्। सु उ १ १०
मण्डलानि च सन्धींश्च पटलानि च लोचने।
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च॥१४

९७-पक्ष्मवर्त्म श्वेतकृष्णदृष्टीनां मण्डलानि तु ।
अनुपूर्वं तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥ १५ ॥
९८-दृष्टिं चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारद ॥१२
नेत्रायामत्रिभागं तु कृष्णमण्डलमुच्यते ।
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदा ॥१३॥
९९-पक्ष्मवर्त्मगत. सन्धिर्वर्त्मशुक्लगतोऽपर ।
शुक्लकृष्णगतस्त्वन्य कृष्णदृष्टिगतोऽपर. ।
तत कनीनकगत षष्ठश्चापाङ्गग' स्मृत ॥ १६ ॥
१००-द्वे वर्त्मपटले विद्याच्चत्वार्यन्यानि चाक्षिणि
जायते तिमिरं येषु व्याधि. परमदारुण ॥ १७ ॥
तेजो जलाश्रितं बाह्य तेष्वन्यत् पिशिताश्रितम् ।
मेदस्तृतीय पटलमाश्रितं त्वस्थि चापरम् ॥१८॥
पञ्चमांशसम दृष्टेस्तेषां बाहुल्यमिष्यते ।
१०१-सिराणां कण्डराणां च मेदसः कालकस्य च१९
गुणा कालात् परः श्लेष्मा बन्धनेऽक्ष्णो सिरायुतः ।

१०२-पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात ।
आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे ॥
( सु उ १ ११ )
१०३ मसूरदलमात्रा तु पञ्चभूतप्रसादजम् ।
खद्योतविस्फुलिङ्गाभामिद्धां तेजोभिरव्ययै.
आवृता पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् ।
शितसात्म्यां नृणा दृष्टिमाहुर्नयनचिन्तका:
( सु उ. ७. ३, ४ )
१०४-नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवो पुच्छान्तयोरध.
तथोपरि भ्रुवोर्निम्नावावर्तौ तन्ध्य मेषु तु (अ हृ
शा. २, ७६ )
१०५-द्वे पादमध्ये पृथुसंनिवेशे
शिरेगते ते बहुधा च नेत्रे ।
तान्रक्षणोद्वर्तनलेपनादीन्
पादप्रयुक्तान्नयन नयन्ति (अ हृ उ १६, ६७ )

०

## -४-

## अष्टाङ्गशारीरम् ।

१०६-तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः ।
मस्तकादभिदीयन्ते शिष्या.! श्रृणुत यत्नत.॥६५
१०७-आद्यमङ्गं शिर. प्रोक्तं तदुपाङ्गानि कुन्तला' ।
तस्यान्तर्मस्तुलुङ्ग च ललाट भ्रुयुगं तथा ॥ ६६ ॥
१०८-नेत्रद्वयं तयोरन्तर्वर्तिते द्वे कनीनिके ।
दृष्टिद्वय कृष्णगोलौ श्वेतभागौ च वर्त्मनी ॥६७॥
१०९-पक्ष्माण्यपाङ्गौ, शङ्खौ, च कर्णौ तच्छष्कुली-
द्वयम् ।
पालिद्वय, कपोलौ, च नासिका च प्रकीर्तिता
॥ ६८ ॥
११०-ओष्ठाधरौ च, सृक्किण्यौ, मुख, तालु, हनु-
द्वयम् ।
दन्ताश्च दन्तवेष्टश्च, रसना, चिबुक गल ॥ ६९ ॥
१११-द्वितियमङ्ग ग्रीवा तु यया मूर्द्धा विधार्यते ।
तृतीय बाहुयुगल तदुपाङ्गान्यथ ब्रुवे ॥ ७० ॥
११२-तत्रोपरि मतौ स्कन्धौ, प्रगण्डौ भवतस्त्वध.।
कफोणियुग्मं तदध. प्रकोष्ठयुगलं तथा ॥ ७१ ॥
११३-मणिबन्धौ,तले,हस्तौ,तयोश्चाङ्गुलयो दश ।
नखाश्च दश ते स्थाप्या दश च्छेद्या प्रकी
र्तिता' ॥ ७२ ॥
११४-चतुर्थमङ्ग वक्षस्तु तदुपाङ्गान्यथ ब्रुवे ।
स्तनौ पुंसस्तथा नार्या विशेष उभयोरयम् ॥७३॥
११५-यौवनागमने नार्याः पीवरौ भवतः स्तनौ ।
गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ ॥ ७४ ॥
११६-हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम् ।
जाग्रतस्तद्विकसति स्वपतस्तु निमीलति ॥ ७५ ॥

११७-आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम् ।
अतस्तस्मिंस्तमोव्याप्ते प्राणिन प्रस्वपन्ति हि ७६
११८-चेतनास्थानमुत्तममिति । अयमभिप्राय.
"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रिय. ।
केशलोमनखाग्रान्नमलद्रवगुणैर्विना " ॥ ७७ ॥
इत्युक्तवता चरकेण सकलं शरीर चेतनास्था
नमुक्त तदपेक्षया हृदय विशेषतश्चेतनास्था.
नमिति ॥ ७५ ॥ ७६ ॥
११९-कक्षयोर्वक्षस सन्धी जत्रुणी समुदाहृते।
कक्षे उभे समाख्याते तयो. स्याता च वङ्क्षणौ७१
१२०-उदर पञ्चमञ्चाङ्ग षष्ठं पार्श्वद्वयं मतम् ।
सपृष्ठवंशं पृष्ठ तु समस्त सप्तम स्मृतम् ॥ ७८ ॥
१२१-उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नत.।
शोणिताज्जायते प्लीहा वामतो हृदयादध.॥७९॥
१२२-रक्तवाहिशिराणां स मूल ख्यातो महर्षिभि -
हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनज. ॥ ८० ॥
१२३-अधो दक्षिणतश्चापि हृदयाद्यकृत. स्थिति. ।
तत्तु रञ्जकपित्तस्य स्थान शोणितजं मतम् ॥८१॥
१२४-अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति ।
जलवाहिशिरामूलं तृष्णाऽऽच्छादनकृन्मतम् ८२
१२५-क्लोम-तिलकम्, एतत्तु वातरक्तजम् । अत्र
वृद्धवाग्भटोऽप्याह--
१२६-" रक्तादनिलसंयुक्तात्कालीयकसमुद्भवः "
इति ( अ. सं शा २९० )
१२७ मेद.शोणितयो. साराद् वृक्कयोर्युगल भवेत् ।
तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ॥ ८३ ॥

( ९० नवतितमं पृष्ठवमलोकनीयम् )

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक–पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृत्य संग्रहस्थमूलवचनप्रदर्शिन्या टिप्पण्या परिष्कृतम् ।

# अष्टाङ्गसंग्रहान्तर्गतम्

# अष्टाङ्गहृदयम् ।

तत्र

## शारीरस्थानम् ।

### गर्भावक्रान्तिः प्रथमोऽध्यायः ।

१–अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
२–शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः ।
गर्भः संपद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥
३–बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते ॥ २ ॥
४–तेजो यथाऽर्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नेन्धनं दृश्यते गच्छत्सत्त्वो गर्भाशयं तथा ॥ ३ ॥
५–कारणानुविधायित्वात्कार्याणां तत्स्वभावता ।
नानायोन्याकृतीः सत्त्वो धत्तेऽतो द्रुतलोहवत् ॥४
६–अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री तयोः साम्ये क्लीबः
७– शुक्रार्तवे पुनः ॥५॥
वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।
८–वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ६ ॥
९–मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥७॥
१०–पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥९॥
११–वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ।
बीजासमर्थं रेतोऽस्रम्
स्वलिङ्गैर्दोषजं वदेत् ॥ १० ॥
१२–रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥११॥
१३–कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम् ।
१४–कुर्याद्वातादिभिर्दुष्टे स्वौषधम्
१५– कुणपे पुनः ॥१३॥
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ।
पाययेत्सर्पिरथवा विपक्वमसनादिभिः ॥ १२ ॥
१६–पलाशभस्माश्मभिदा ग्रन्थ्याभे
१७– पूयरेतसि ।
परूपकवटादिभ्याम्
१८– क्षीणे शुक्रकरी क्रिया ॥१४॥
१९–स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ।
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥१५॥
२० संशुद्धो विट्प्रभे सर्पिर्हिङ्गुसेव्यादिसाधितम् ।
पिबेत्
२१– ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥१६॥
२२–पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत् ।
२३–गुह्यरोगे च तत्सर्वं कार्यं सोत्तरबस्तिकम् ॥ १७ ॥
२४–शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भाय
२५– आर्तवं पुनः ॥ १८ ॥
लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।
२६–शुद्धशुक्रार्तवं स्वस्थं सरक्तं मिथुनं मिथः ॥ १९ ॥
स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितबस्तिकम् ।
नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २० ॥
नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ।
२७–क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २१ ॥
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।
२८–पद्मं संकोचमायाति दिनेऽतीते यथा तथा ॥२२॥

**टिप्पणी** अथाष्टाङ्गहृदयमूलवचनानि संग्रहस्थानि प्रदर्शयाम । तत्र ( ) एतच्चिन्हान्तर्गता अङ्का हृदयशारीरस्था. तद्बहिर्भूतास्तु संग्रहशारीरस्था इति बोद्धव्यम् । सोऽयमुपक्रम समन्वयाभ्यासिनामतीवोपकाराय स्यादिति मन्ये ।
( १ ) ७५ ( २ ) ७६ ( ३ ) ७६ ( ४ ) ७६ ( ५ ) ७७ ( ६ ) ७८ ( ७ ) ७९ ( ८ ) ८० ( ९ ) १०, ( १० ) ३, ४, ५ ( ११ ) २३ ( १२ ) २४ ( १३ ) २५ ( १४ ) २६ ( १५ ) ३४ ( १६ ) ३५ ( १७ ) ३६ ( १८ ) २२ ( १९ ) ४० ( २० ) ३७ ( २१ ) ३८ ( २२ ) ३९ ( २३ ) ४० ( २४ ) ६–९ ( २५ ) २० ( २६ ) २२ ( २७ ) ४२ ( २८ ) ४३

ऋतावतीते याति सा शुक्र नात प्रतीच्छति।
२९–मासनोपचित रक्तं धमनीभ्यामृतौ पुन ॥२३॥
इषत्कृष्णं विग धं च वायुर्योनिमुखादुदत्।
३०–तत पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥ २४
मृजाल काररहिता दर्भसंस्तरशायिनी।
क्षैरेयं यावक स्तोक कोष्ठशोधनकर्षणम् ॥२५॥
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी।
३१–चतुर्थेऽह्नि तत स्नाता शुक्लमाल्याम्बरा शुचि २६
इच्छ ती भर्तृसदृश पुत्रं पश्येत्पुर पतिम्।
३२–ऋतुस्तु द्वादश निशा पूर्वास्तिस्रोऽत्र निन्दिता २७
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका।
३३–उपाध्यायोऽथ पुत्रीय कुर्वीत विधिवद्विधिम् ॥२८
नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम्।
३४–अवन्ध्य एवं सयोग स्यादपत्यं च कामत ॥२९॥
३५–सन्तान्याहुरपत्यार्थं दम्पत्यो सङ्गतिं रह ।
३६–दुरपत्यं कुलाङ्गारो गोत्रे जात महत्यपि ॥ ३० ॥
३७–इच्छेतां यादृशं पुत्रं तद्रूपचरिताश्च तौ।
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३१ ॥
३८–कर्मान्ते च पुमान् सर्पि क्षीरशाल्योदनाशित ।
प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥३२॥
आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वत ।
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३३ ॥
३९–'आहिरसि आयुरसि सर्वत प्रतिष्ठासि, धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेति
'ब्रह्मा बृहस्पतिर्वि णु सोम सूर्यस्तथाऽश्विनौ।
भगोऽथ मित्रावरु णौ वीरं ददतु मे सुतम्।' इति
४०–सान्त्वयित्वा ततोऽन्योन्यं संविशेतां सुमानितौ।
४१–उत्ताना तन्मना योषित्तिष्ठेदङ्ग सुसंस्थितै ॥३४॥
तथा हि बीज गृह्णाति दोषै स्वस्थानमास्थितै ।
४२– लिङ्गं तु सद्योगर्भाया योन्या बीजस्य सङ्ग्रह ३५
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुब धनम्।
हृदयस्प दनं तन्द्रा तृड ग्लानिर्लोमहर्षणम् ३६
४३–अ यक्त प्रथमे मासि सप्ताहात्कललीभवत्।
गर्भ पुंसवनान्यत्र पूर्वं व्यक्त प्रयोजयेत् ॥ ३७
४४–बली पुरुषकारो हि दैवम प्यतिवर्तते।
४ –पुष्ये पुरुषक हैम राजत वाऽथवाऽऽयसम् ॥ ३८
कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत्
४६–गौरद ण्डमपामार्गजीवकर्षभसैर्यकान् ॥३९॥
पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तश ।
४७–क्षीरेण श्वेतबृहतीमूल नासापुटे स्वयम् ॥ ४०
पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया।
४८–पयसा लक्ष्मणामूल पुत्रोत्पादस्थितिप्रदम् ॥ ४१

नासयाऽऽस्येन वा पीतं वटशुङ्गाष्टक तथा।
४९–ओषधीर्जीवनीयाश्च बाह्या तरुपयोजयेत् ॥ ४२
५०–उपचार प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक्।
नवनीतघृतक्षीरै सदा चैनामुपाचरेत् ॥ ४३
अतिव्यवायमायास भारं प्रावरण गुरु।
अकालजागरस्वप्नकठिनोत्कटकासनम् ॥ ४४
शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम्।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भि भोजनम् ४५
रक्त निवसनं श्वभ्रकूपेक्षां मद्यमामिषम्।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ४६
तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमात्।
एभिर्गर्भ स्रवेदाम कुक्षौ शुष्येन्म्रियेत वा ४७
वातलैश्च भवेद्गर्भ कु जा धजडवामन ।
पित्तलै खल ति पिङ्ग श्वित्री पाण्डु कफात्मभि
स्तस्माद्भावा भावांस्तु स्त्री मृदुसुखरतीर्ण्णरापथर्जयेत्।
५१–द्वितीये मासि कलल द्धन पेश्यथवाऽर्बुदम् ४९
पुस्त्रीक्लीबा क्रमात्तेभ्य
५२– तत्र व्यक्तस्य लक्षणम्।
क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचक ५०
जम्भा प्रसेक सदनं रोमराज्या प्रकाशनम्।
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ५१
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिका
५३–मातृ । तस्य हृदयं मातुश्च हृदयेन तत् ५२
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम्।
५४–दद्यादप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५३
५५–श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा।
५६– व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ५४
मूर्द्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गज म च।
सममेव हि मूर्द्धाद्यैर्ज्ञानं च सुखदु खयो ॥ ५५
५७–गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ५८
५८–चतुर्थे व्यक्तताङ्गानां
५९– चेतनायाश्च पञ्चमे।
६०–षष्ठे स्नायुसिरारोमबल व र्णनखत्वचाम् ५७
६१–सर्वं सर्वाङ्गसंपूर्णो भावै पुष्यति सप्तमे।
६२–गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिता ।
कण्डू विदाह कुर्वन्ति गर्भिण्या किक्किसानि च
६३–नवनीतं हितं तत्र कोल ाम्बुमधुरौषधै ।
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ५९
च दनोशीरकल्केन लिम्पेदूरस्तनोदरम्।
श्रेष्ठया वैणहरिणशशशोणितयुक्तया ॥ ६०
अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत्।
पटोलनिम्बमञ्जिष्ठासुरसैः सेचयेत्पुन ६१

(२९) ४४ (३०) ४५ (३१) ४६ (३२) ४८-५४ (३३) ५५ (३७) ४७ (३८) ५६ (३९) ५७
(४०) ५८ (४१) ५९-६० (४२) ८१ (४३) ६३ (४४-४५) ५ ८ अ + +,+ (४६-४८) ६२ (४९) ६३
(५०) ६४, १२९ १३३ (५१) ८६ (५२) ८२ (५३) ९ -९१ (५४) ९२ (५५) ९३ (५६)
८६-८९ (५७) १०५-१०६ (५८) ९५ (५९) ९६ (६०) ९७ (६१) ९७ (६२) १४४ (६३) १४५

दार्वीमधुकतोयेन मूर्जां च परिशीलयेत् ।
६४-ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।
शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत् ६३
६५-क्षीरपेया च पेयाऽत्र सघृताऽन्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ६४
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।
शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धव ६५
६६-तस्मिंस्त्वेकाहयातेऽपि काल. सूतेरतः परम् ।
वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ६६
६७-शस्तश्च नवमे मासि स्निग्धो मासरसौदन. ।
बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ६७
६८-तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ।
६९-वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम् ६८
७०-निःस्नेहाङ्गी न नवमान्मासात्प्रभृति वासयेत् ।
७१-प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ६९
पुन्नामदौर्हृदप्रश्नरता पुंस्त्वप्रदर्शिनी ।
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ७०
पुत्रं सूतेऽन्यथा कन्या या चेच्छति नृसङ्गतिम् ।
नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या ७१
७२-क्लीब तत्संकरे तत्र मध्यं कुक्षे. समुन्नतम् ।
७३-यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ॥
७४-प्राक् चैव नवमान्मासात्सा सूतिगृहमाश्रयेत् ।
देशे प्रशस्ते सम्भारैः सम्पन्न साधकेऽहनि ७३
७५-तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।
७६-अद्यश्वःप्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ७४
अधोगुरुत्वमरुचि. प्रसेको बहुमूत्रता ।
वेदनोरूदरकटीपृष्ठहृद्बस्तिवङ्क्षणे ७५
योनिभेदरुजातोदस्फुरणस्रवणानि च ।
आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ॥ ७६
७७ अथोपस्थितगर्भां ता कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ॥
पाययेत्सघृतां पेयां
७८ तनौ भूशयने स्थिताम् ।
आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ७८
अधोनाभेर्विमृद्नीयात्कारयेज्जृम्भचङ्क्रमम् ।
गर्भ. प्रयात्यवागेवं
७९- तल्लिङ्गं हृद्विमोक्षतः ॥ ७९
आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ।
आव्योऽभित्वरयन्त्येनां
८०- खट्वामारोपयेत्तत.॥ ८०

अथ सपीडिते गर्भे योनिमस्याः प्रसारयेत ।
मृदु पूर्वं प्रवाहेत वाढमाप्रसवाच्च सा ॥ ८१
हर्षयेत्ता मुहुः पुत्रजन्मशब्दजलानिलैः ।
८१-प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः।
८२-धूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ।
हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ८२
सुवर्चलां विशल्यां वा
८३- जराय्वपतनेऽपि च ॥ ८३
कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ८४
कटीमाकोटयेत्पार्ष्ण्या स्फिजौ गाढं निपीडयेत ।
तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपय. ८५
भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ।
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥८६॥
कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थाना बिल्वजेनाऽऽसवेन वा॥८७
शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकाचित्रकैः ।
सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ८८ ॥
तैलं सिद्धं हितं पायौ योन्या वाऽप्यनुवासनम् ।
शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ ८९ ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ९०
कुशला पाणिनाऽक्तेन हरेत्कॢप्तनखेन वा ।
८४-मुक्तगर्भापरा योनिं तैलेनाङ्गं च मर्दयेत् ॥९१॥
८५ मक्कल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत् ।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ९२ ॥
धान्याम्बु वा गुडव्योषत्रिजातकरजोन्वितम् ।
८६-अथ बालोपचारेण बाल योषिदुपाचरेत् ॥९३॥
८७-सूतिका क्षुद्वती तैलाद्घृताद्वा महतीं पिबेत् ।
पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदकम् ॥९४
वातघ्नौषधतोयं वा, तथा वायुर्न कुप्यति ।
विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रम ॥९५॥
स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ।
पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥
जीर्णे स्नाता पिबेत्पेया पूर्वोक्तौषधसाधिताम् ।
त्र्यहादूर्ध्वं विदार्यादिवर्गक्वाथेन साधिता ॥९७॥
हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाऽथवा ।
सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम् ॥९८॥
द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत् ।
८८-यत्नेनोपचरेत्सूतां, दुःसाध्यो हि तदामयः॥९९॥
गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः ।
८९-एवं च मासादध्यर्धान्मुक्ताहारादियन्त्रणा ।
गतसूताभिधाना स्यात्पुनरार्तवदर्शनात् ॥१००॥

( ६४ ) ९८, ९९, १००, १०१ ( ६५ ) १४६ ( ६६ ) १०२ ( ६७ ) १४६ ( ६८ ) १४७ ( ६९ ) १४९ (७०-७२) १४७, १०८ (७३) सु शा ४, ३४ ( ७४ ) १५० ( ७५ ) १५१ ( ७६ ) १५२ ( ७७ ) १५३ (७८) १५४, १५७ ( ७९ ) ५६ ( ८० ) १६० ( ८१ ) १६४ ( ८२ ) १६५ ( ८३ ) १६६ ( ८४ ) १७० ( ८५ ) १६७ ( ८६ ) १६९ ( ८७ ) १७० ( ८८ ) १७१-१७२ ( ८९ ) १७३

## गर्भव्यापद्द्वितीयोऽध्याय ।

९०-अथाऽतो गर्भव्यापदं शारीरं व्याख्यास्याम ।
इति ह स्माहुरात्रेयादयो महर्षय ।

९१-गर्भिण्या परिहार्याणा सेवया रोगतोऽपि वा ।
पुष्पे दृष्टेऽथवा शूले बाह्यान्त स्निग्धशीतलम् ॥१॥
सेव्याम्भोजहिमक्षीरिवल्ककल्काज्यलेपितान् ।
धारयेद्योनिबस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥२॥

९२-शतधौतघृताक्तां वा तदम्भस्यवगाहयेत् ।
ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥
लिह्यात् क्षीरघृतं खादेच्छृङ्गाटककसेरुकम् ।
पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्सकम् ॥४॥
शृतेन शालिकाकोलीद्विबलामधुकेक्षुभि ।
पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ॥ ५ ॥
रसैर्वा जाङ्गलै

९३- शुद्धिवर्ज्यं चाऽस्मात्तमाचरत् ।

९४-असम्पूर्णत्रिमासाया प्रत्याख्याय प्रसाधयेत ॥ ६
आमान्वय च

९५- तत्रष्ट शीत रूक्षोपसंहितम् ।
उपवासो घनोशीरगुडूच्यरलुधान्यका ॥ ७ ॥
दुरालभापर्पटकचन्दनातिविषाबला ।
क्वथिता सलिले पान तृणधान्यादिभोजनम् ॥८
मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ।

९६-गर्भे निपातिते तीक्ष्णं मद्यं सामर्थ्यत पिबेत् ॥९
गर्भकोष्ठविशुद्ध्यर्थमार्तिविस्मरणाय च ।
लघुना पञ्चमूलेन रूक्षां पेयां तत पिबेत् ॥१०॥
पेयाममद्यपा कल्के साधितां पाञ्चकोलिके ।
बिल्वादिपञ्चकक्वाथे तिलोद्दालकतण्डुलै ॥११॥
मासतुल्यदिनान्येवं पेयादि पतिते क्रम ।
लघुरस्नेहलवणो दीपनीययुतो हित ॥१२॥
दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ।
स्नेहान्वयस्त्वयश्चोर्ध्वं बल्यदीपनजीवना ॥ १४ ॥

९७-सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।
वृद्धिमप्राप्नुवन् गर्भ कोष्ठे तिष्ठति सस्फुर ॥१४
उपविष्टकमाहुस्त, वर्धते तेन नोदरम् ।

९८-शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ।
वाते क्रुद्धे कृशं शुष्यन् गर्भो नागोदर तु तत् ।
उदर वृद्धमत्यर्थ हीयते स्फुरण चिरात् ॥ १६ ॥

९९-तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतै ।
घृतक्षीररसै सम्पूर्णमगर्भांश्च खादयेत् ॥ १७ ॥
तैरेव च सुतृप्ताया क्षोभणं यानवाहनै ।

१००-लीनाख्ये निःस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजा
रसा बहुघृता देया माषमूलकजा अपि ।
बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत् १९
समेद्यमांसं मधु वा कट्यभ्यङ्गं च शीलयेत् ।
हर्षयेत्सततं चैनामेवं गर्भ प्रवर्धते ॥ २० ॥

१०१-पुष्टोऽन्यथा वर्षगणै कृच्छ्राज्जायेत, नैव वा ।

१०२-उदावर्तं तु गर्भिण्या स्नेहैराशुतरां जयेत् ॥२१॥
योग्यैश्च बस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ।

१०३-गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥२२॥
मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशान्वयम् ।
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लम २३
अरति स्रस्तनेत्रत्वमावीनामसमुद्भव ।

१०४-तस्या कोष्णाम्बुसिक्ताया पिष्ट्वा योनौ प्रलेपयेत
गुडं किण्वं सलवणं तथान्त पूरयेन्मुहु ।
घृतेन कल्कीकृतया शाल्मलीमतसिपिच्छया ॥२५॥
मन्त्रयोगैर्जरायूक्तैर्मूढगर्भो न चेत्पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥२६॥
हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।
हस्तेन शक्यं तेनैव

१०५- गात्रं च विषमं स्थितम् ॥२७॥
आञ्छनोत्पीडसंपीडविक्षेपोत्क्षेपणादिभि ।
आनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥२८॥

१०६-हस्तपादशिरोभिर्यो योनिं भुग्न प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदं च य ॥२९॥
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हत ।

१०७-मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥३०
वृद्धिपत्रं हि तीक्ष्णाग्रं न योनावबचारयेत् ।
पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥३१
कक्षोरस्तालुचिबुकप्रदेशेऽन्यतमे तत ।
समालम्ब्य दृढं कर्षेत्कुशलो गर्भशङ्कुना ॥३२॥
अभिन्नशिरसं त्वक्षिकूटयो र्गण्डयोरपि ।
बाहुं छित्वांससक्तस्य वाताध्मातोदरस्य तु ॥३३
विदार्य कोष्ठमन्त्राणि बहिर्वा सं निरस्य च ।
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥३४॥
यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डश ।
तत्तच्छित्वाऽऽहरेत्सम्यग्रक्षेन्नारीं च यत्नत ॥३५

१०८-गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिल ।
तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥३६॥

१०९-छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना, न चोपेक्ष्य क्षणमप्यस्तजीवित ॥३७

११०-योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम् ।
पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत् ॥३८॥

( ९० ) १७५ ( ९१ ) १७६ ( ९२-९३ ) १७७-१७९ ( ९४ ) १८०-१८१ ( ९५ ) १८२ ( ९६ )
१८३ ( ९७ ) १८४, १८५ ( ९८ ) १८६ ( ९९ ) १९१ ( १०० ) १९६-१९७ ( १०१ ) १८७ ( १०२ )
१९८-१९९ ( १०३ ) २०१ ( १०४ ) २०९, २११, २१२ ( १०५ ) २१३ ( १०६ ) २१४ ( १०७ ) २१५
( १०८ ) २०२, २०३, २०४ ( १०९ ) २०६ २०५ ( ११० ) २०४

१११-अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ।
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥३९॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥४०॥
दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकान् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥४१॥
कटुकातिविषापाठाशाकत्वग्घिङ्गुतेजिनीः ।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥
त्रिरात्रमेव, सप्ताहं स्नेहमेव ततः पिबेत् ।
सायं पिबेदरिष्टं च तथा सुकृतमासवम् ॥४३॥
शिरीषककुभक्वाथपिचून् योनौ विनिक्षिपेत् ।
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥४४
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।
रसो दशाहं च परं लघुपथ्याऽल्पभोजना ॥४५॥
स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ।
ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च
११२-बलामूलकषायस्य भागाः षट् पयसस्तथा ।
यवकोलकुलत्थानां दशमूलस्य चैकतः ॥४७॥
निष्क्वाथभागो भागश्च तैलस्य तु चतुर्दशः ।
द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ॥४८॥
सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः ।
कालानुसार्याशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥
अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः ।
शताह्वाशूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः ॥५०
पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।
सूतिकाबालमर्मास्थिहतक्षीणेषु पूजितम् ॥५१॥
ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ।
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥
११३-बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ५३
११४-मधुकं शाकबीजं च पयस्या सुरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥५४
वृक्षादनी पयस्या च लता चोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥५५
बृहतीद्वयकाश्मर्यक्षीरिशृङ्गत्वचो घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं बला ।
सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥५७
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।
११५ कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ॥५८॥
मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ।
नवमे सारिवाऽनन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।
अथवा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥
११६-अवस्थितं लोहितमङ्गनाया
वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।
गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः
स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥
११७-गर्भं जडा भूतहृतं वदन्ति
मूर्तैर्न दृष्टं हरणं यतस्तैः ।
ओजोशनत्वादथवाऽन्यवर्ष्यै-
र्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥



## अङ्गविभागस्तृतीयोऽध्यायः ।

११८-अथातोऽङ्गविभागं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
११९-शिरोऽन्तराधिर्द्वौ बाहू सक्थिनीति समासतः ।
षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥
१२०-शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः ।
खानिलाग्न्यम्बुभुवाम्

१२१- एकगुणवृद्ध्यन्वयः परे ॥२॥
१२२-तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता
वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥
आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।
१२३-मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम् ॥ ४ ॥
१२४-पैतृकं तु स्थिरं शुक्रधमन्यस्थिकचादिकम् ।
१२५-चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५॥
१२६ सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम् ।
१२७-रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥
१२८ सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः ।
१२९-राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सरम् ॥ ७ ॥
१३०-तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता ।
१३१-इति भूतमयो देहः
१३२- तत्र सप्त त्वचोऽसृजः ॥ ८ ॥
पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव ।
१३३-धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमूष्मणा ॥९॥
श्लेष्मस्नायवपराच्छन्नः कलाख्यः काष्ठसारवत् ।
१३४-ताः सप्त

(१११) २१६ (११२) २१७ (११३) २१८ (११४) २१९ (११५) २२० (११६) १५, १६ (११७) १७, १८, १९ (११८) २२१ (११९) २२२ (१२०) २३२ (१२१) २३२ (१२२) २३३-२३६ (१२३) २३८ (१२४) २३९ (१२५) २४० (१२६) २४१ (१२७) २४२ (१२८) २४३ (१२९) २४४ (१३०) २४५ (१३१) २४७ (१३२) २४९ (१३३) २६५ (१३४) २६६

१३५- सप्त चाधारा रक्तस्याद्य क्रमात् परे ॥ १० ॥
कफामपित्तपक्वाना वायोर्मूत्रस्य च स्मृता ।
१३६-गर्भाशयोऽष्टम स्त्रीणा पित्तपक्वाशयान्तरे ॥११॥
१३७-कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम फुफ्फुसम् ।
यकृत्प्लीहोण्डुक वृक्कौ नाभिडिम्भान्त्रबस्तय ॥१२
१३८-दश जीवितधामानि शिरोरसनव धनम् ।
कण्ठोऽस्त्र हृदय नाभिर्वस्ति शुक्रौजसी गुदम् १३
१३९-जालानि कण्डराश्चाङ्गे पृथक् षोडश निर्दिशेत् ।
षट् कूर्चा सप्त सीवन्यो मेढ्रजिह्वाशिरोगता ॥१४
शस्त्रेण ता परिहरेच्चतस्रो मांसरज्जव ।
१४०-चतुर्दशास्थिसघाता , सीम ता द्विगुणा नव ॥१५
१४१-अस्थ्ना शतानि षष्टिश्च त्रीणि दन्तनखै सह ।
१४२-धन्वन्तरिस्तु त्रीण्याह सन्धीना च शतद्वयम् १६
दशोत्तर
१४३- सहस्रे द्वे निजगादात्रिन दन ।
१४४-स्नाय्वा नवशती
१४५- पञ्च पुसा पेशीशतानि च ॥ १७ ॥
१४६ अधिका विशति स्त्रीणा योनिस्तनसमाश्रिता ।

१४७-दश मूलसिरा हृत्स्थास्ता सर्व सर्वतो वपु ॥१८
रसात्मक वहन्त्योजस्तन्निबद्ध हि चेष्टितम् ।
१४८-स्थूलमूला सुसूक्ष्माग्रा पत्ररेखाप्रतानवत् ॥१९
भिद्यन्ते तास्तत सप्त शता यासा भवन्ति तु ।
१४९-तत्रैकैक च शाखाया शत, तस्मिन्न वेधयेत् ॥ २०
१५०-सिरा जाल धरा नाम तिस्रश्चाभ्यन्तराश्रिता ।
१५१-षोडशद्विगुणा श्रोण्या तासा द्वे द्वे तु वङ्क्षणे २१
द्वे द्वे कटीकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ता ।
१५२-पार्श्वयो षोडशैकैकामूर्ध्वगा वर्जयत्तयो ॥२२॥
१५३-द्वादशद्विगुणा पृष्ठे पृष्ठवशस्य पार्श्वयो ।
द्वे द्वे तत्रोर्ध्वगामि या न शस्त्रेण परामृशेत् ॥२३
१५४-पृष्ठवज्जठरे तासा मेहनस्योपरि स्थिते ।
रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥२४॥
१५५-चत्वारिंशदुरस्यासा चतुर्दश न वेधयेत् ।
स्तनरोहितत्तन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥
अपस्तम्भाख्ययोरेका तथाऽपालापयोरपि ।
१५६-ग्रीवाया पृष्ठवत्तासा नीले मन्ये कृकाटिके ॥२६॥
विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ।
१५७-हन्वा षोडश तासा द्वे सन्धिबन्धनकर्मणी ॥२७॥
१५८-जिह्वाया हनुवत्तासामधो द्वे रसबोधने ।
द्वे च वाच प्रवर्तिके
१५९- नासाया चतुरुत्तरा ॥२८॥
विशतिर्गन्धवेदिन्यौ तासामेका च तालुगाम् ।
१६०-षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥
द्वे द्वे, अपाङ्गयोर्द्वे च तासा षडिति वर्जयेत् ।
नासानेत्राश्रिता षष्टिर्ललाटे स्थपनीश्रिताम् ३०
तत्रैका, द्वे तथाऽऽवर्तौ, चतस्रश्च कचान्तगा ।
सप्तैव वर्जयत्तासाम्
१६१- कर्णयो षोडशात्र तु ॥ ३१ ॥
द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिता ।
द्वे शङ्खसन्धिगे तासाम्
१६२- मूर्ध्नि द्वादश तत्र तु ॥३२
एकैका पृथगुत्क्षेपसीम ताधिपतिस्थिताम् ।
इत्यवेध्याविभागार्थं प्रत्यङ्ग वर्णिता सिरा ॥३३॥
अवध्यास्तत्र कात्स्न्येन देहेऽष्टानवतिस्तथा ।
सकीर्णा ग्रथिता क्षुद्रा वक्रा सन्धिषु चाश्रिता
१६३-तासा शताना सप्ताना पादोऽस्त्रं वहते पृथक् ।
वातपित्तकफैर्दुष्ट शुद्ध चैव स्थिता मला ॥३५॥
शरीरमनु ह्रन्ति पीडय त्य यथा पुन ।
१६४-तत्र श्यावारुणा सूक्ष्मा पूर्णरिक्ता क्षणात्सिरा
प्रस्पन्दिन्यश्च वातास्र वह त
१६५- पित्तशोणितम् ।
स्पर्शोष्णा शीघ्रवाहिन्यो नीलपीता कफ पुन ३७
१६६-गौर्य स्निग्धा स्थिरा शीता
१६७- ससृष्ट लिङ्गसङ्करे
१६८-गूढा समस्थिता स्निग्धा रोहिण्य शुद्धशोणितम्
१६९-धम या नाभिसबद्धा विशतिश्चतुरुत्तरा ।
१७०-ताभि परिवृतो नाभिश्चक्रनाभिरिवारक ॥३९॥
ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।
१७१-स्रोतासि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम्
१७२-स्तनौ रक्तपथश्चेति नारीणामधिक त्रयम् ।
१७३-जीवितायतना य त स्रोतास्याहुस्त्रयोदश ॥४१॥
प्राणधातुमलाम्भोन्नवाहीनि
१७४- अहितसेवनात् ।

तानि दुष्टानि रोगाय, विशुद्धानि सुखाय च
१७५-स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च
स्रोतासि दीर्घाण्याकृत्या प्रतानसदृशानि च॥४३॥

(१३५) २८१ (१३६) २८२ (१३७) २८३ (१३८) ३०१ (१३९) ३०३-३०७ (१४०) ३०८-३०९ (१४१) ३१ (१४२) ३१५ (१४४) ३२१ (१४५) ३२८ (१४६) ३३२ (१४७) ३५५ (१४८) ३५६ (१४९) ३६३ (१५०) ३६४ (१५१) ३६५ (१५२) ३५२ (१५३) ३६७ (१५४) ३६८ (१५५) ३६९ (१५ ) ३७० (१५७) ३७१ (१५८) ३७२ (१५९) ३७३ (१६०) ३७४ (१६१) ३७५ (१६२) ३७६ (१६३) ३७७ (१६४) ३७८ (१६५) ३७९ (१६६) ३८० (१६७) ३८१ (१६८) ३८२ (१६९) ३८३ (१७०) ३८४-३८५ (१७१) ३९१ (१७२) ३९२ (१७३) ३९३ (१७४) ४१४ (१७५) ४५५

१७६ आहाराश्च विहारश्च यः स्याद्दोषगुणैः समः ।
धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥४४॥
१७७-अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥४५
१७८-बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।
द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥
१७९-व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ।
प्रलापशूलविण्मूत्ररोधा मरणमेव वा ॥ ४७ ॥
१८० स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥४८॥

१८१-अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।
दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥
१८२-तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ।
सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥
आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये ।
स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥५१
भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यध. ।
बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबल ।
दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥५३॥
यदन्न देहधात्वोजोबलवर्णादिपोषणम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादय. ॥ ५४ ॥
१८३-अन्न कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ।
द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम् ॥५५॥
सन्धुक्षितः समानेन पचत्यामाशयस्थितम् ।
औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम्
१८४-आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
फेनीभूतं कफं, यातं विदाहादम्लता ततः ॥
पित्तमामाशयात्कुर्याच्च्यवमानं, च्युतं पुन ।
अग्निना शोषित पक्व पिण्डित कटुमारुतम् ॥ ५८
१८५-भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्त्यनु
यथास्वं ते च पुष्णन्ति पक्त्वा भूतगुणान् पृथक्।
पार्थिवा. पार्थिवानेव शेषाः शेषांश्च देहगान्
१८६-किट्टं सारश्च तत्पक्वमन्नं संभवति द्विधा ।
तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥६१
१८७-सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभि. ।
१८८-रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ६२
अस्थ्नो मज्जा तत शुक्रं शुक्राद्गर्भ प्रजायते।
कफः पित्त मला. खेषु प्रस्वेदो नखरोम च ६३
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः।
१८९-प्रसादकिट्टौ धातूनां पाकादेवं द्विधर्च्छत ॥६४॥
परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा ।
१९०-केचिदाहुरहोरात्रात्षडहादपरे, परे ॥ ६५ ॥
मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ।
सन्तता भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥६६
वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।
प्राय करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ।।६७
१९१-व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।
युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥
क्षिप्यमाण स्ववैगुण्याद्रसः सज्जति यत्र सः ।
तस्मिन्विकार कुरुते खे वर्षमिव तोयदः
१९२-दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ।
अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ॥७०॥
१९३-अन्नस्य पक्ता सर्वेषां पक्तॄणामधिपो मत. ।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मका ७१ ॥
तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।
पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थिति. ७२
१९४-समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।
पित्ताभिमूर्च्छिते तीक्ष्णो मन्दोऽस्मिन्कफपीडिते
१९५ समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ।
१९६-य पचेत्सम्यगेवान्नं भुक्त सम्यक् समस्त्वसौ ७४
१९७-विषमोऽसम्यगप्याशु सम्यग्वाऽपि चिरात्पचेत् ।
१९८-तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ७५
१९९-मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ।
कृत्वाऽऽस्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ७६
२००-सहजं कालजं युक्तिकृतं देहबलं त्रिधा ।
तत्र सत्त्वशरीरोत्थं प्राकृत सहजं बलम् ॥ ७७ ॥
वयस्कृतमृतूत्थं च कालजं, युक्तिजं पुनः ।
विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥
२०१-देशोऽल्पवारिद्रुनगो जाङ्गल. स्वल्परोगद ।
आनूपो विपरीतोऽस्मात् समः साधारणः स्मृतः
२०२ मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् ॥८० ॥
रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्धितम् ।
२०३-पृथक्स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ॥८१॥
२०४-द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः॥
२०५-समधातोरिद मानं विद्याद्वृद्धिक्षयावत ॥ ८२ ॥

२०६-शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ८३

(१७६) ४५६ (१७७) ४५७ (१७८) ४५८ (१७९) ४१५ (१८०) ४१६ (१८१) ४२७-४२८ (१८२) २७२ (१८३) ४२९ (१८४) ४३० (१८५) ४३१ (१८६) ४३२-४३७ (१८७) ४३५ (१८८) ४३८-४४४, ४६० (१८९) ४३३ (१९०) ४५९ (१९१) ४३६,४४६ (१९२) ४२३ (१९३) ४२४, ४५३ (१९४) अ. सं सू. १४. (१९५) ४४८ (१९६) ४४९,४५३ (१९७) ४५० (१९८) ४५१ (१९९) ४५२ (२००) ५७५ (२०१) अ. स सू ३४, अ स. कल्पस्था. अ. ८. (२०२) ३४१ (२०३) ३४२-३४३

२०७-विमुत्वादाशुकारित्वाद्बलित्वाद् यकोपनात् ।
स्वात न्त्र्याद्बहुरोगत्वाद्दोषाणा प्रबला निल ८४
२०८-प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मका स्फुटितधूसरकेशगात्रा ।
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा
सौहाददृष्टिगतयोऽतिबहुप्रलापा ॥ ८५ ॥
अल्पवित्तबलजीवितनिद्रा
सन्नसक्तचलजर्जरवाच ।
नास्तिका बहुभुज सविलासा
गीतहासमृगयाकलिलोला ॥ ८६ ॥
मधुराम्लपटूष्णसात्म्यकाङ्क्षा
कृशदीर्घाकृतय सशब्दयाता
न दृढा न जितेन्द्रिया न चार्या
न च कान्तादयिता बहुप्रजा वा ॥ ८७ ॥
नेत्राणि चैषा खरधूसराणि
वृत्ता यचारूणि मृतोपमानि
उन्मीलितानीव भवन्ति सुप्ते
शैलद्रुमास्ते गगन च यान्ति ॥८८॥
अधन्या मत्सराध्माता स्तेना प्रोद्बद्धपिण्डिका ।
श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिका ॥८९॥
२०९-पित्त वह्निर्वह्निज वा यदस्मा-
त्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्ष ।
गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्र
शूरो मानी पिङ्गकेशोऽल्परोमा ॥९०॥
दयितमाल्यविलेपनम ण्डन
सुचरित शुचिराश्रितवत्सल ।
विभवसाहसबुद्धिबलान्वितो
भवति भीषु गतिर्द्विषतामपि ॥९१॥
मेधावी प्रशिथिलसन्धिब धमांसो
नारीणामनभिमतोऽल्पशुक्रकाम ।
आवास पलिततरङ्गनीलिकाना
भुङ्क्तेऽन्न मधुरकषायतिक्तशीतम् ॥९२॥
घर्मद्वेषी स्वेदन पूतिगन्धि-
र्भूर्युच्चारक्रोधपानाशनेर्ष्य ।
सुप्त पश्येत्कर्णिकारान्पलाशान्
दिग्दाहोल्काविद्युदर्कानलांश्च ॥९३॥
तनूनि पिङ्गानि चलानि चैषा
त नूल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा
राग व्रजन्त्याशु विलोचनानि ॥९४॥
मध्यायुषो मध्यबला पण्डिता क्लेशभीरव ।
व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिका ॥९५॥

२१०-श्लेष्मा सोम श्लेष्मलस्तेन सौम्यो
गूढस्निग्धश्लिष्टसन्ध्यस्थिमांस ।
क्षुत्तृड्दु खक्लेशधर्मैरतप्तो
बुद्ध्या युक्त सात्त्विक सत्यसन्ध ॥९६॥
प्रियङ्गुदूर्वाशरकाण्डशस्त्र-
गोरोचनापद्मसुवर्णवर्ण ।
प्रलम्बबाहु पृथुपीनवक्षा
महाललाटो घननीलकेश ॥९७॥
मृद्वङ्ग समसुविभक्तचारुदेहो
बह्वोजोरतिरसशुक्रपुत्रभृत्य ।
धर्मात्मा वदति न निष्ठुर च जातु
प्रच्छन्न वहति दृढ चिर च वैरम् ॥९८॥
समदद्विरदेन्द्रतुल्ययातो
जलदाम्भोधिमृदङ्गसिंहघोष ।
स्मृतिमानभियोगवान्विनीतो
न च बाल्येऽप्यतिरोदनो न लोल ॥९९॥
तिक्त कषाय कटुकोष्णरूक्ष-
मल्प स भुङ्क्ते बलवांस्तथाऽपि ।
रक्तान्तसुस्निग्धविशालदीर्घ-
सुव्यक्तशुक्लासितपक्ष्मलाक्ष ॥१००॥
अल्पव्याहारक्रोधपानाशनेह
प्राज्यायुर्वित्तो दीर्घदर्शी वदान्य ।
श्राद्धो गम्भीर स्थूललक्ष क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्र कृतज्ञ ॥ १०१ ॥
ऋजुर्विपश्चित्सुभग सलज्जो
भक्तो गुरूणा स्थिरसौहृदश्च ।
स्वप्ने सपद्मान्सविहङ्गमाला-
स्तोयाशयान्पश्यति तोयदांश्च ॥ १०२ ॥
ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिप ।
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषै ॥ १०३
२११-प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदय ।
२१२-शौचास्तिक्यादिभिश्चैव गुणगुणमयीवदत् ॥१०४
२१३-वयस्त्वाषोडशाद्बाल तत्र धात्विन्द्रियौजसाम् ।
वृद्धिरासप्ततेर्मध्य तत्रावृद्धि पर क्षय ॥ १०५ ॥
२१४-स्व स्व हस्तत्रय सार्ध वपु पात्र सुखायुषो ।
न च यद्युक्तमुद्रिक्त स्थिरैर्निर्दिष्टैर्नजै ॥१०६॥
अराममशासितस्थूलदीर्घत्व सविपर्यय ।
२१५-सुस्निग्धा मृदव सूक्ष्मा नैकमूला स्थिरा कचा
२१६-लला टमुन्नत श्लिष्टशङ्खमर्धे दुसनिभम् ।
२१७-कर्णौ नीचोन्नतौ पश्चा महान्तौ श्लिष्टमांसलौ १०८
२१८-नेत्रे व्यक्तासितासिते सुबद्धघनपक्ष्मणी ।
२१९-उन्नतामा महोच्छ्वासा पीनर्जुनासिका समा १०९

( २०४ ) ३४४,३४५ ( २०५ ) ३४७ (२०६) ५४३-५४४ ( २०७ ) च सू १२ ८ सु नि १ ५-९ ( २०८ ) ५५४ ( २०९ ) ५५५ ( २१० ) ५५६ ( २११ ) ५५७,५५८ ( २१२ ) ५६४ ( २१३ ) ५,५-१७ ( २१४) ५८१-५८४ ( २१५-२३४ ) ५८५

२२०-ओष्ठौ रक्तावनुद्वृत्तौ
२२१- महत्यौ नोल्बणे हनू ।
२२२-महदास्यं
२२३-घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताः समाः॥११०
२२४-जिह्वा रक्ताऽऽयता तन्वी
२२५- मांसलं चिबुकं महत् ।
२२६-ग्रीवा ह्रस्वा घना वृत्ता
२२७- स्कन्धावुन्नतपीवरौ ॥ १११ ॥
२२८-उदर दक्षिणावर्तगूढनाभि समुन्नतम् ।
२२९-तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥११२॥
दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ।
२३०-गूढवंशं बृहत्पृष्ठ
२३१- निगूढाः सन्धयो दृढाः ॥११३॥
२३२-धीरः स्वरोऽनुनादी च
२३३- वर्ण. स्निग्धः स्थिरप्रभः ।
२३४-स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि॥११४
२३५-उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ।
आयामज्ञानविज्ञानैर्वर्धमानं शनैः शुभम् ॥११५
इति सर्वगुणोपेते शरीरे शरदां शतम् ।
आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः॥११६
२३६-त्वग्रक्तादीनि सत्त्वान्तान्यग्राण्यष्टौ यथोत्तरम् ।
बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ११७
२३७ सारैरुपेत. सर्वै. स्यात्परं गौरवसंयुत. ।
सर्वारम्भेषु चाशावान्सहिष्णुः सन्मतिः स्थिरः
२३८-अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते ।
सत्त्ववांस्तप्यमानस्तु राजसो नैव तामसः ११९
२३९-दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः ।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः १२०

## मर्मविभागश्चतुर्थोऽध्यायः ।

२४०-अथाऽतो मर्मविभागं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षय. ।
२४१-सप्तोत्तरं मर्मशतम्
२४२- तेषामेकादशादिशेत् ।
पृथक्सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि १
पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च ।
२४३-मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् २
तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ।
२४४-अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ३
२४५-तस्योर्ध्वं व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत् ।
२४६-गुल्फसन्धेरध. कूर्चशिर शोफरुजाकरम् ॥ ४ ॥
२४७-जङ्घाचरणयो. सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत्
२४८-जङ्घान्तरे त्विन्द्रबस्तिर्मारयत्यसृज' क्षयात् ५
२४९-जङ्घोर्वो. सङ्गमे जानु खञ्जता तत्र जीवतः ।
२५०-जानुनस्त्र्यङ्गुलादूर्ध्वमाण्यूरुस्तंभशोफकृत्॥६॥
२५१-उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसङ्क्षयात् ।
२५२-ऊरुमूले लोहिताक्ष हन्ति पक्षमसृक्क्षयात् ७
२५३-मुष्कवङ्क्षणयोर्मध्ये विटपं पण्ढताकरम् ।
२५४-इति सक्थ्नो-
स्तथा बाह्वो-
२५५- मणिबन्धोऽत्र गुल्फवत्
कूर्परं जानुवत्कौण्य
२५६- तयोर्विटपवत्पुन ।
कक्षाक्षमध्ये कक्षाधृक् कुणित्व तत्र जायते॥९॥
२५७-स्थूलान्त्रबद्ध. सद्योघ्नो विड्वातवमनो गुदः।
२५८-मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसग. ॥१०॥
एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ।
ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च स ॥११॥
मूत्रस्राव्येकतो भिन्नो व्रणो रोहेच्च यत्नत ।
२५९-देहामपक्वस्थानानां मध्ये सर्वसिराश्रय' ॥१२॥
नाभिः, सोऽपि हि सद्योघ्नो
२६०- द्वारमामाशयस्य च ।
सत्त्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥१३॥
२६१-स्तनरोहितमूलाख्ये व्यङ्गुले स्तनयोर्वदेत् ।
ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयो. क्रमात्
२६२-अपस्तम्भावुर. पार्श्वे नाड्यावनिलवाहिनी ।
रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति १६
२६३-पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ।
अधोऽसकूटयोर्विद्यादपालापाख्यमर्मणी ॥ १६ ॥
तयो' कोष्ठेऽसृजा पूर्णे नश्येद्घातेन पूयताम् ।
२६४-पार्श्वयो' पृष्ठवंशस्य श्रोणीकर्णौ प्रतिष्ठिते ॥१७॥
वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते ।
तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति ॥१८॥
२६५--पृष्ठवंश ह्युभयतो यौ सन्धी कटिपार्श्वयो ।
जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥१९॥
चेष्टाहानिरध.काये स्पर्शाज्ञानं च तद्वधात् ।
२६६--पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥२०॥
आशयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।
अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं तत. ॥२२॥

( २३५ ) ५८६ ( २३६) ५७७ ( २३७ ) ५७९ ( २३८ ) ५८७ ( २३९ ) ५८८ ( २४० ) ४६३ ( २४१ ) ४६४ ( २४२ ) ४६५ ( २४३ ) ४६६ ( २४४ ) ४६७ ( २४५ ) ४६८ ( २४६ ) ४६९ ( २४७ ) ४७० ( २४८ ) ४७१ ( २४९ ) ४७२ ( २५० ) ४७३ ( २५१ ) ४७४ ( २५२ ) ४७५. (२५३) ४७६ ( २५४ ) ४७७ ( २५५ ) ४७८ ( २५६ ) ४७९ ( २५७ ) ४८० ( २५८ ) ४८१ ( २५९ ) ४८२ ( २६० ) ४८३ ( २६१ ) ४८४-४८५ ( २६२ ) ४८६. ( २६३ )४८७ ( २६४) ४८८ ( २६५) ४८९ ( २६६) ४९०

२६७-पार्श्वा तरनिबद्धौ च मध्य जघनपार्श्वयो ।
तिर्यगूर्ध्व च निर्दिष्टौ पार्श्वसन्धी तथा वधात्
रक्तपूरीतकोष्ठस्य शरीरान्तरसम्भव ।
२६८-स्तनमूलार्जव भागे पृष्ठवशाश्रये सिरे ॥ २३ ॥
बृहत्यौ, तत्र विद्धस्य मरण रक्तसक्षयात् ।
२६९-बाहुमूलाभिसम्बद्धे पृष्ठवंशस्य पार्श्वयो ॥२४॥
अंसयो फलके बाहुस्वापशोषौ तयोर्वधात् ।
२७०-ग्रीवामुभयत स्नाव्नी ग्रीवाबाहुशिरोन्तर २५
स्कन्धासपीठसब धावसौ बाहुक्रियाहरौ ।
२७१-कण्ठनाडीमुभयत सिरा हनुसमाश्रिता २६
चतस्रस्तासु नीले द्वे म ये द्वे ममणी स्मृते ।
स्वरप्रणाशवैकृत्य रसाज्ञान च तद्वधे ॥ २७ ॥
२७२-कण्ठनाडीमुभयतो जिह्वानासागता सिरा ।
पृथक् चतस्रस्ता सद्यो घ्नन्त्यसू मातृकाह्वया
२७३ कृकाटिके शिराग्रीवासन्धी तत्र चल शिर ।
२७४-अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥२९॥
२७५-फणावुभयतो घ्राणमार्गे श्रोत्रपथानुगौ ।
अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥३०॥
२७६-नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवो पुच्छा तयोरध ।
तथापरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ३१ ॥
२७७-अनुत्कर्णे ललाटान्ते शङ्खौ सद्योविनाशना ।
२७८-केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ, स्थपनी पुन ३२
भ्रुवामध्ये, त्रयऽप्यत्र शल्ये जीवदनुद्धृत ।
स्वय वा पातित पाकात्सद्यो नश्यति तूद्धृते ३३
२७९-जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।
तालुन्यास्यानि चत्वारि स्रोतसा, तेषु मर्मसु
विद्ध शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ।
कपाले सन्धय पञ्च सीमन्तास्तियगूर्ध्वगा ३५
२८० भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति ।
२८१-आन्तरो मस्तकस्योर्ध्व सिरासन्धिसमागम ॥३६
रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ।
२८२-विषम स्पन्दन यत्र पीडिते रुक् च मर्म तत् ॥३७
२८३-मांसास्थिस्नायुधमनीसिरासन्धिसमागम ।
स्यान्मर्मेति च तेनाऽत्र सुतरा जीवित स्थितम्॥
बाहुल्येन तु निर्देश षोढैव मर्मकल्पना ।
प्रा ॥यतनसामा यादेकय वा ममणा मतम् ॥३९
२८४-मांसजानि न्दो गुद यतलहत्स्तनराहिता ।
२८५-शङ्खौ कटीकतरुण नितम्बावसयो फले ॥४०॥
अस्थ्न्यष्टौ
२८६-　　स्नावममाणि त्रयोविंशतिराणय ।

कूर्चकूर्चशिरोऽपाङ्गक्षिप्रोत्क्षेपासवस्तय ॥४१॥
२८७-गुदापस्तम्भविधुरश्रृङ्गाटानि नवादिशत् ।
मर्माणि धमनीस्थानि
२८८-　　　　सप्तत्रिंशत्सिराश्रया ॥४२॥
बृहत्यौ मातृका नीले मन्य कक्षाधरौ फणा ।
विटपे हृदय नाभि पार्श्वसन्धी स्तनान्तरे ॥४३॥
अपालापौ स्थपन्यू यश्चतस्रो लोहितानि च ।
२८९-सन्धौ विंशतिरावर्तौ मणिबन्धा कुकुन्दरौ ॥४४
सीमन्ता कूर्परा गुल्फा कृकाट्या जानुनी पति ।
२९०-मांसमर्म गुदाऽन्येषा स्नाम्नि कक्षाधरा तथा ॥४५
विटपौ विधुराख्य च, श्रृङ्गाटानि सिरासु तु ।
अपस्तम्भावपाङ्गौ च धमनीस्थ न तैं स्मृतम् ४६
२९१-विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनु ।
पाण्डुत्वमिन्द्रियाज्ञान मरण चाशु मांसजे ॥४७
२९२-मज्जान्वितोऽच्छो विच्छिन्नस्रावो रुक्
चास्थिममणि ।
२९३-आयामाक्षेपकस्तम्भा स्नावजेऽभ्यधिक रुजा ४८
यानस्थानासनाशक्तिर्वैकल्यमथवाऽन्तव ।
२९४-रक्त सरा दफनो / धमनीस्थे विचतम ॥४९॥
२९५-सिरामर्मव्यधे सान्द्रमजस्र बहसृक्स्रवत् ।
तत्क्षयात्तड्भ्रमश्वासमोहहिध्माभिर तक ॥५०॥
२९६-वस्तु नूकरिवाकीर्णे रूढे च कुणिखञ्जता ।
बलचेष्टाक्षय शोष पर्वशोफश्च सन्धिज ॥५१॥
२९७-नाभिशङ्खाधिपापानहृच्छृङ्गाटकवस्तय ।
अष्टौ च मातृका सद्यो निघ्नन्त्येकान्नविंशति ५२
सप्ताह परमस्तेषा काल कालस्य कर्षणे ।
२९८-त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धय ॥५३॥
कटीतरुणसीम तस्तनमूले न्द्रबस्तय ।
क्षिप्रापालापबृहतीनितम्बस्तनराहिता ॥५४॥
कालान्तरप्राणहरा मासमासार्धजीविता ।
२९९-उत्क्षेपा स्थपनी त्रीणि विशल्यघ्नानि तत्र हि ५५
वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन् ।
शल्यापाय विनिर्गच्छन् श्वासात्कासाच्च ह त्यसून्
३००-पणावपाङ्गौ विधुरे नीले मन्ये कृकाटिके ।
असासफलकावर्तविटपावाकुकुन्दरा ॥५७॥
सजानुलोहिताक्षाणिकक्षाधरकूर्चकूर्परा ।
वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥५८॥
हरन्ति तान्यपि प्राणान् कदाचिदभिघातत ।
३०१-अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकरा ॥५९॥

(२६७) ४९१ (२६८) ४९२ (२६९) ४९३ (२७०) ४९४ (२७१) ४९५ (२७२) ४९६ (२७३) ४९७ (२७४) ४९८ (२७५) ४९९ (२७६) ५००,५०२ (२७७) ५०१ (२७८) ५ ३ ५०४ (२७९) ५०६ (२८०) ५ ५ (२८१) ५०७ (२८२) ५०८ (२८३) ५११ (२८४) ५१२ (२८५) ५१५ (२८६) ५१४ (२८७) +++ (२८८) ५१३ (२८९) ५१६ (२९०) +++ (२९१) ४६६ ४७१ ४८०,४८५ (२९२) ४८८ ४९०,४९३ ५ १ (२९३) ४६७ ४६८ ४६९,४७६ ४७९,४८२,४८ ४९४,४९८ ५ ३ (२९४) +++ (२९५) ४७४ ४७५,४८२,४८३,४८४,४८६,४८७,४९१,४९२,४९५ ४९६ ४९९,५ ,५०४,५ ६ (२९६) ४७ ,४७८, ४७२,४७८,४८९,४९७,५ २,५०५,५०७ (२९७) ५१८ (२९८) ५१९ (२९९) ५२० (३००) ५२१ (३०१) ५२२

३०२-तेषां विटपकक्षाधृगुर्व्यं कूर्चसिरांसि च ।
द्वादशाङ्गुलमानानि
३०३- द्व्यङ्गुले मणिबन्धने ॥६०॥
गुल्फौ च स्तनमूले च
३०४- त्र्यङ्गुलं जानुकूर्परम् ।
३०५-अपानबस्तिहृन्नाभिनीलाः सीमन्तमातृकाः॥६१॥
कूर्चशृङ्गाटमन्याश्च त्रिंशदेकेन वर्जिता ।
आत्मपाणितलोन्मानाः
३०६- शेषाण्यर्धाङ्गुलं वदेत् ॥६२॥
पञ्चाशत्षट् च मर्माणि
३०७- तिलव्रीहिसमान्यपि ।
३०८-इष्टानि मर्माण्यन्येषाम्
चतुर्धोक्ताः सिरास्तु या.६३
तर्पयन्ति वपु. कृत्स्न ता मर्माण्याश्रितास्तत. ।
तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसङ्क्षये ॥६४॥
वृद्धश्चलो रुजस्तीव्रा. प्रतनोति समीरयन् ।
तेजस्तदुद्धतं धत्ते तृष्णाशोषमदभ्रमान् ॥६५॥
स्विन्नस्रस्तश्लथतनुं हरत्येन ततोऽन्तकः ।
३०९-वर्धयेत्सन्धितो गात्रं मर्मण्यभिहते द्रुतम् ॥६६॥
छेदनात्सन्धिदेशस्य सङ्कुचन्ति सिरा यतः ।
जीवितं प्राणिना तत्र रक्ते तिष्ठति तिष्ठति ॥६७
३१०-सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ।
प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥६८॥
असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।
तस्मात्क्षाराविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत्६९
३११-मर्माभिघात स्वल्पोऽपि प्रायशो बाधतेतराम् ।
रोगा मर्माश्रितास्तद्वत्प्रक्रान्ता यत्नतोऽपि च ७०

## विकृतिविज्ञानीयः पञ्चमोऽध्यायः ।

३१२-अथाऽतो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः ।
३१३-पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदय ।
यथा भविष्यतो लिङ्ग रिष्टं मृत्योस्तथा ध्रुवम् ॥१
३१४-अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ।
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥२॥
३१५-केचित्तु तद्द्विधेत्याहु॰ स्थाय्यस्थायिविभेदत. ।
दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥३॥
स दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे ।
३१६-रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥४॥
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्तत ।
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥५॥
३१७-केशरोम निरभ्यङ्गं यस्याऽभ्यक्तमिवेक्ष्यते ।
३१८-यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥६॥
जिह्मे विस्तृतसङ्क्षिप्ते सङ्क्षिप्तविनतभ्रुणी ।
उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥७॥
कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ।
३१९-नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥८
उच्छूना स्फुटिता म्लाना
३२०- यस्यौष्ठो यात्यधोऽधर ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥९
३२१-दन्ता सशर्करा श्यावास्ताम्रा पुष्पितपङ्किता.।
सहसैव पतेयुर्वा
३२२- जिह्वा जिह्मा विसर्पिणी ॥१०॥
शूना शुष्का गुरु श्यावा लिप्ता सुप्ता सकण्टका।
३२३-शिर शिरोधरा वोढुं पृष्ठं वा भारमात्मन ॥११॥
३२४-हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।
३२५-यस्यानिमित्तमङ्गानि गुरूण्यतिलघूनि वा ॥१२॥
३२६-विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।
३२७-उत्सिक्तं मेहनं यस्य वृषणावतिनि सृतौ ॥१३॥
अतोऽन्यथा वा यस्य स्यात्
३२८- सर्वे ते कालचोदिताः ।
३२९-यस्याऽपूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा१४
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ।
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥१५॥
प्लवते प्लवमानस्य षण्मासं तस्य जीवितम् ।
३३०-हरिताभा सिरा यस्य रोमकूपाश्च संवृताः॥१६॥
सोऽम्लाभिलाषी पुरुष. पित्तान्मरणमश्नुते ।
३३१-यस्य गोमयचूर्णाभं चूर्ण मूर्ध्नि मुखेऽपि वा ॥१७
सस्नेहं मूर्ध्नि धूमो वा, मासान्त तस्य जीवितम्
३३२ मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवा १८
मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ।
३३३-जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति१९
खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।
३३४-यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् २०
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।
३३५ अकस्माद्युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ॥२१॥
तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।
३३६-यस्य स्फुटेयुरङ्गुल्योऽनाकृष्टा न स जीवति २२
३३७-क्षवकासादिषु तथा यस्याऽपूर्वो ध्वनिर्भवेत् ।
३३८-ह्रस्वो दीर्घोऽति वोच्छ्वासः पूति सुरभिरेव वा२३
३३९-आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुष. ।

( ३०२ ) ५२७ ( ३०३ ) ५२८ ( ३०४ ) ५२९ ( ३०५ ) ५३० ( ३०६ ) ५३१ ( ३०७ ) ५३५ ( ३०८ ) ३७७,४१८,४१५ ( ३०९ ) ५२५ ( ३११ ) ५३८ ( ३१२ ) ५८८ अ ( ३१३ ) च. इ २।३,, ( ३१४ ) ६७८ ( ३१५ ) ६८० ( ३१६ ) ५८९,५९०,५९१,५९२ ( ३१७ ) ६०४ ( ३१८ ) ६०५ ( ३१९ ) ६०६ ( ३२० ) ६०७ ( ३२१ ) ६०८ ( ३२२ ) ६०९ ( ३२३ ) ६११ ( ३२४ ) ६१२ ( ३२५ ) ६१६ ( ३२६ ) ६१५ ( ३२७ ) ६१३ ( ३२८ ) ६२६ ( ३२९ ) ६२७ ( ३३० ) ६२८ ( ३३१ ) ६२९ ( ३३२ ) ६३० ( ३३३ ) ६४९ ( ३३४ ) ६३१ ( ३३५ ) ५९२-५९३ ( ३३६ ) ६२० ( ३३७ ) ६२१ ( ३३८ ) ६१९ ( ३३९ ) ६२२

मध्यवक्षणादौ वा वपा न तस्य जीवितम् ॥२४

३४०-भवन्त्यङ्गरसास्वाद ूदकामक्षिकादय ।
त्यजन्ति वाऽतिविरस्यात्साऽपि वर्षं न जीवति२५

३४१ सततोष्मसु गात्रेषु शैत्यं यस्योपपद्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेद स्तम्भोऽप्यहेतुक

३४२-यो जातशीतपिटिक शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्त स प्रेताधिपगोचर ॥२७॥

३४३-उरस्यूष्मा भवेद्यस्य जठरे चाऽतिशीतता ।
भिन्नं पुरीष तृष्णा च यथा प्रेतस्तथैव स ॥२८॥

३४४-मूत्रं पुरीष निष्ठ्यूत शुक्रं चाप्सु निमज्जति ।
निष्ठ्यूत बहुवर्णं वा यस्य मासात्स म्रियते ॥२९

३४५-घनीभूतमिवाकाशमाकाशमिव यो घनम् ।
अमूर्तमिव मूर्तं च मूर्तं चामूर्तवत्स्थितम् ॥३०
तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।
अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम् ॥३१॥
जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।
रूप व्याकृति तद्वच्च य पश्यति स नश्यति ॥३२

३४६-सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।
ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम् ३३

३४७-मेघतोयौघनिर्घोषवीणापणववेणुजान् ।
शृणोत्यन्यांश्च य शब्दानसतो न सतोऽपि वा ॥

३४८-निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।

३४९-तद्वद्ग न्धरसस्पर्शान् म न्यते यो विपर्ययात् ॥३५॥

३५०-सर्वशो वा न यो यश्च दीपग न्ध न जिघ्रति ।

३५१-विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसा

३५२-य पांसुनेव कीर्णाङ्गो योऽङ्ग घात न वेत्ति वा ।

३५३-अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥३७॥
जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ।

३५४-हीनो दीन स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा

३५५-सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।

३५६-स्वरस्य दुर्बलीभाव हानिं वा यस्य वर्णयो ॥३९॥
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।

३५७-अपस्वर भाषमाणं प्राप्त मरणमात्मन ॥४०॥
श्रोतार चास्य शब्दस्य दूरत परिवर्जयेत् ।

३५८-संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥४१॥
छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव स ।

३५९-आतपादर्शतोयादौ या संस्थानप्रमाणत ॥४२॥
छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुन ।
वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥४३॥
भवेद्यस्य प्रतिच्छाया छिन्ना भिन्नाऽधिकाऽऽकुला
विशिरा द्विशिरा जिह्मा विकृता यदि वाऽन्यथा
तं समासादायुर्षं विद्यात्र चेदुपनिमित्तजा ।

३६०-प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्यते कन्यका ४५

३६१-खादीनां पञ्च पञ्चानां छाया विविधलक्षणा ।
नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ४६
वातात्रजाऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥४७॥
शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।

३६२-स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी
वायवी रोगमरणक्लेशाय,

३६३- अन्या सुखोदया ।

३६४-प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता ४९
रक्ता पीता सिता श्यामा हरिता पाण्डुराऽसिता

३६५ तासां या स्युर्विकासिन्य स्निग्धाश्च विमलाश्च या
ता शुभा

३६६- मलिना रूक्षा संक्षिप्ताश्चासुखोदया ।

३६७-वर्णमाक्रामति छाया प्रभा वर्णप्रकाशिनी ॥५१॥
आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।

३६८-नाच्छाया नाप्रभ कश्चिद्विशेषाश्चिह्नयन्ति तु
नृणां शुभाशुभोत्पत्तिं काले छायाप्रभाश्रया ।

३६९-निष्पन्नित्य य पादौ च्युतांसः परिसर्पति ॥५३॥

३७०-हीयते बलत शश्वद्योऽन्नमश्नन् हितं बहु ।

३७१-योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट्

३७२-योऽल्पाशी वा कफार्तो दीर्घं श्वसिति चेष्टते ।

३७३-दीर्घमुच्छ्वस्य यो ह्रस्वं नि श्वस्य परिताम्यति ॥५५
ह्रस्वं च य प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।

३७४-शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ
या ललाटात्सुतस्वेद श्लथसन्धानबन्धन ।

३७५-उत्थाप्यमान संमुह्येद्यो बली दुर्बलोऽपि वा॥५७

३७६-उत्तान एव स्वपिति, य पादौ विकरोति च ।

३७७-शयनासनकुड्यादौ योऽसद्देव जिघृक्षति ॥५८॥

३७८-अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ ।

३७९-उत्तरौष्ठं परिलिहन् फूत्कारांश्च करोति य ॥५९

३८०-यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ।

३८१-भिषग्भेषजपानान्नगुरुमित्रद्विषश्च य ॥६०॥
वशगा सर्वं एवैते विज्ञेया समवर्तिन ।

३८२-ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥६१॥

(३४०) ६२३ (३४१) ६२४ (३४२) ६२७ (३४३) ६३२ (३४४) ६३३ (३४५) ६४० (३४६) ६४१ (३४७) ६४२ (३४८) ६४३ (३४९) ६४४ (३५०) ६४५ (३५१) ६४६ (३५२) ६४७ (३५३) ६४८ (३५४) ६१७ (३५५) ६१८ (३५६) ६३४ (३५७) ६३५ (३५८) च - ७,७ (३५९) ६०२ ७ ह ७ ९ (३६०) ६०१ (३६१) ५९४ (३६२) ५९५ (३६३) ५०६ (३६४) ५९७ (३६५) ५९८ (३६६) ५९९ (३६७) ६०० (३६८) ७ ह ७ १७ (३६९) ६५० (३७०) ६११ (३७१) ६५२ (३७२) ६५३ (३७३) ६५४ (३७४) ६५१ (३७५) ६५६ (३७६) ६५७ (३७७) ६५८ (३७८) ६५९ (३७९) ६६० (३८०) ६६१ (३८१) ६६२ (३८२) ६६३

उष्णोऽपर. प्रदेशश्च शरण तस्य देवताः ।
३८३-योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥६२
३८४-बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।
३८५-निर्निमित्त च यो मेधां शोभामुपचय श्रियम् ६३
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ।
३८६-गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥६४
यात्यन्यथात्व प्रकृति' षण्मासान्न स जीवति ।
३८७-भक्ति. शील स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ६५
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यत' ।
३८८-मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः॥६६॥
३८९-नश्यत्यजानन् षड्हात्केशलुञ्चनवेदनाम् ।
३९०-न याति यस्य चाहार' कण्ठं कण्ठामयादृते ॥ ६७
३९१-प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।
३९२-यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ६८
३९३-वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यत' ॥६९॥
३९४-यैः पुरा रमते भावैररतिस्तैर्न जीवति ।
३९५-सहसा जायते यस्य विकार. सर्वलक्षण ॥७०॥
निवर्तते वा सहसा सहसा स विनश्यति ।

३९६-ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिक.७१
सप्रलापभ्रमश्वास. क्षीण शूनं हतानलम् ।
अक्षाम सक्तवचनं रक्ताक्ष हृदि शूलिनम् ॥ ७२
सशुष्ककास पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् ।
बलमासविहीनस्य श्लेष्मकाससमन्वितः॥ ७३
३९७-रक्तपित्तं भृशं रक्त कृष्णमिन्द्रधनुःप्रभम् ।
ताम्रहारिद्रहरितं रूप रक्त प्रदर्शयेत् ॥७४॥
रोमकूपप्रविसृत कण्ठास्यहृदये सजत् ।
वाससो रञ्जन पूति वेगवच्चातिभूरि च॥७५॥
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम् ।
३९८-कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥७६
३९९-यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।
४००-छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका ॥७७॥
सास्नविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ।
४०१-तृष्णाऽन्यरोगक्षपित बहिर्जिह्व विचेतनम् ॥७८॥
४०२-मदात्ययोऽतिशीतार्त क्षीण तैलप्रभाननम् ।
४०३-अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥७९
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम् ।
४०४-अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥८०॥

तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ।
मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः ॥८१॥
अतिरक्तासितस्निग्धपूत्यच्छवनवेदनः ।
कर्बुर प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट् ॥
तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ।
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम् ॥८३
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत् ।
सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥८४॥
४०५-अश्मरी शूनवृषण बद्धमूत्रं रुजार्दितम् ।
४०६-मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥८५॥
४०७-पिटिका मर्महृत्पृष्ठस्तनांसगुदमूर्धगा. ।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥८६॥
सर्व च मांससङ्कोथदाहतृष्णामदज्वरैः ।
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥८७॥
४०८-गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।
सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः॥८८
कासपीनसहृल्लासश्वासातीसारशोफवान् ।
४०९-विण्मूत्रसङ्ग्रहश्वासशोफहिध्माज्वरभ्रमैः ॥८९॥
मूर्छाच्छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ।
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥९०॥
विरेचनहृतानाहमानह्यन्तं पुनः पुन' ।
४१०-पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥९१
४११-तन्द्रादाहारुचिच्छर्दिमूर्छाध्मानातिसारवान् ।
अनेकोपद्रवयुत. पादाभ्यां प्रसृतो नरम् ॥९२॥
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।
राजीचित स्रवंश्छर्दिज्वरश्वासातिसारिणम् ॥९३
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिन ॥९४॥
श्वयथुर्यस्य पादस्थ परिस्रस्ते च पिण्डिके ।
सीदत. सक्थिनी चैव त भिषक् परिवर्जयेत् ९५
४१२-आननं हस्तपाद च विशेषाद्यस्य शुष्यत ।
शूयेते वा विना देहात्स मासाद्याति पञ्चताम् ९६
४१३-विसर्प' कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान् ।
भ्रमास्यशोषहृल्लासदेहसादातिसारवान् ॥९७॥
४१४-कुष्ठ विशीर्यमाणाङ्ग रक्तनेत्र हतस्वरम् ।
मन्दाग्निं जन्तुभिर्जुष्ट हन्ति तृष्णातिसारणम् ९८
४१५-वायुः सुप्तत्वच भुग्न कम्पशोफरुजातुरम् ।
४१६ जातास्त्र मोहमूर्च्छायमदास्वप्नज्वरान्वितम् ॥ ९९

( ३८३ ) ६६४ ( ३८४ ) ६६५. ( ३८५ ) ६६६ ( ३८६ ) ६६७ ( ३८७ ) ६६८ ( ३८८ ) ६६९ ( ३८९ ) ६७०. ( ३९० ) ६७१, ( ३९१ ) ६७२. ( ३९२ ) ६७३ (३९३)६७४, ( ३९४ ) ६७५, ( ३९५ ) ७३०, ७३१ ( ३९६ ) ६९६, ( ३९७ ) ६९७ (३९८) ६९८ ( ३९९ ) ६९९ ( ४०० ) ७०० ( ४०१ ) ७०१ ( ४०२ ) ७०२ ( ४०३ ) ७०३. ( ४०४ ) ७०४. ( ४०५ ) ७०५ (४०६) ७०६ ( ४०७ ) ७०७ ( ४०८ ) ७०८. ( ४०९ ) ७०९. ( ४१० ) ७१०. ( ४११ ) ७११. ( ४१२ ) ७१२. ( ४१३ ) ७१४ ( ४१४ ) ७१५. ( ४१५ ) ७१६ ( ४१६ ) ७१७.

शिरोग्रहारतिश्वाससङ्कोचस्फोटकोथवत् ।
४१७-शिरोरोगारतिश्वासमोहविड्भेदतृड्भ्रमैः ॥१००॥
घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम् ।
४१८-वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥१०१
गुल्मी मेही च तान् क्षीणान् विकारेऽल्पकेऽपि वर्जयेत् ।
४१९-बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥१०२॥
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ।
४२०-वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि १०३
तृष्णयाऽनुपरीतस्य सद्यो मुष्णाति जीवितम् ।
४२१-शथिल्य पिण्डिके वायुर्नीत्वा नासां च जिह्मताम्
क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम्
नाभीं गुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन्॥
गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।
मलान् बस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम्
कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ।
श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणम् ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्याततक्षस्य सद्यो मुष्णाति जीवितम्॥
४२२-सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥१०९॥
४२३-गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥११०॥
४२४-प्रवालगुलिकाभासा यस्य गात्रे मसूरिका ।
उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति १११
४२५-मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।
अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ॥
४२६-कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।
सन्त्रासश्चोष्णताऽङ्गे च यस्य तं परिवर्जयेत् ११३
४२७-अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।
यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ॥
कफजो न च पूयाय मर्मजश्च रुजे न यः ।
अचूर्णश्चूर्णकीर्णाभो यत्राऽकस्माच्च दृश्यते ॥११५
रूपं शक्तिध्वजादीनां सर्वांस्तान् वर्जयेद् व्रणान् ।
४२८-विमूत्रमारुतवहं कृमिणं च भवेद् व्रणम् ॥११६॥
४२९-घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ११७
दन्तैश्छिन्दन्नखाग्राणि तैश्च केशांस्तृणानि च ।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥
हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ॥
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।
मृत्यवे सहसाऽऽतस्य तिलकव्यङ्गपिप्लवः ॥१२०
मुखे, दन्तनखे पुष्पं, जठरे विविधाः सिराः ।
ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवक्षणम् ॥१२१॥
शर्म चाऽनधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ।
विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥१२२॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।
यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ॥१२३॥
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ।
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् १२४
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम्।
भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥१२५
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ।
निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति १२६
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम्॥१२७
४३०-यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥१२८॥
४३१-कथयन्नेव पृष्टोऽपि दुःप्रवं मरणं भिषक् ।
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम्॥
४३२-यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ।
घ्नन्ति नौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥१३०॥
४३३-आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।
रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक्॥१३१॥
४३४-मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम्॥१३२॥

## दूतादिविज्ञानीयः षष्ठोऽध्यायः ।

४३५-अथाऽतो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥
४३६-पाखण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
४३७-त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥१॥
दीनं भीतं द्रुतं त्रस्तं रूक्षामङ्गलवादिनम् ।
शस्त्रिणं दण्डिनं षण्डं मुण्डश्मश्रुं जटाधरम् ॥२॥
अमङ्गल्याह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।
अनेकं व्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् । ३॥
तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम् ।
खराष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम् ॥४॥

(४१७) ७१८ (४१८) ७१९ (४१९) ७२० (४२०) ७२१ (४२१) ७२२ (४२२) ७२३ (४२३) ७२४ (४२४) ७२५ (४२५) ७२६ (४२६) ७२७ (४२७) ७२८ (४२८) ७२९ (४२९) ७३० * च इ १ १४ (४३०) ७३१ (४३१) ६७६ (४३२) ६७७ (४३३) ६८१ (४३४) *** (४३५) ७३२ (४३६)—(४३७) ७३४-७३६

नातुरं गच्छेद्भिषग्दूतमाह्वयन्तं च दूरत. ।
४३८-अशस्ताचिन्तावचने नग्ने छिन्दाति भिन्दति ॥५॥
जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।
सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ॥६॥
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ।
४३९-विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥७॥
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ।
४४०-स्पृशन्तो नाभिनासास्यकेशरोमनखद्विजान् ॥८॥
गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः ।
कार्पासबुससीसास्थिकपालमुशलोपलम् ॥९॥
मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान् ।
रज्जूपानत्तुलापाशमन्यद्वा भग्नविच्युतम् ॥१०॥
तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ।
४४१-तथाऽर्धरात्रे मध्याह्ने सन्ध्ययोः पूर्ववासरे ॥ ११
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ।
भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापित्र्यनैर्ऋते ॥१२॥
४४२-यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥१३॥
तद्यथा विकलः प्रेत' प्रेतालङ्कार एव वा ।
छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा १४
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुल. क्रूरो यद्वाऽन्यदपि तादृशम् ॥
तत्सर्वमहितो वाक्यं वाक्यकालेऽथवा पुनः ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥१६॥
४४३-हाहाक्रन्दितमुत्क्रुष्टमाक्रुष्टं स्खलनं क्षुतम् ।
४४४-वस्त्रातपत्रपादत्रव्यसनं व्यसनीक्षणम् ॥१७॥
चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥१८॥
पथच्छेदोऽहिमार्जारगोधासरठवानरै. ।
४४५-दीप्तां प्रति दिशं वाच क्रूराणा मृगपक्षिणाम् १९
कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ।
सर्षपाणां वसातैलतृणपङ्केन्धनस्य च ॥२०॥
क्लीबक्रूरश्वपाकानां जालवागुरयोरपि ।
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥२१॥
नि.सारस्य व्यवायस्य कार्पासादेररेरपि ।
शयनासनयानानामुत्तानानां तु दर्शनम् ॥२२॥
न्युब्जानामितरेषां च पात्रादीनामशोभनम् ।
४४६-पुंसंज्ञा. पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणा. शुभा'
प्रदक्षिणं खगमृगा यान्तो, नैवं श्वजम्बुकाः ।
४४७-अयुग्माश्च मृगाः शस्ता.,
४४८- शस्ता नित्यं च दर्शने ॥ २४॥
चाषभासभरद्वाजनकुलच्छागबर्हिणः ।
४४९-अशुभं सर्वथोलूकबिडालसरटेक्षणम् ॥२५॥
४५०-प्रशस्ता. कीर्तने कोलगोधाहिशशजाहकाः ।
न दर्शने न विरुते, वानरर्क्षावतोऽन्यथा ॥२६॥
४५१-धनुरैन्द्रं च लालाटमशुभं, शुभमन्यतः ।
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥
४५२-दध्यक्षतादि निर्गच्छद्वक्ष्यमाणं च मङ्गलम् ।
वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥२८॥
दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तम्
४५३ अतोऽन्यथा ।
करुणाशुद्धसन्तानो यत्नतस्तमुपाचरेत् ॥२९॥
४५४-दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।
यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥३०॥
दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्षयोः ।
रत्नेभपूर्णकुम्भानां कन्याया' स्यन्दनस्य च ॥३१
नरस्य वर्धमानस्य दैवतानां नृपस्य च ।
शुक्लानां सुमनोवालचामराम्बरवाजिनाम् ॥३२
शङ्खसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।
भूमेः समुद्धृतायाश्च वह्ने. प्रज्वलितस्य च ॥३३॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवाया स्त्रिया अपि ॥
जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां बद्धस्यैकपशोस्तथा ।
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥३५॥
गन्धः सुसुरभिर्वर्ण. सुशुक्लो मधुरो रस. ।
गोपतेरनुकूलस्य स्वरस्तद्वद्गवामपि ॥३६॥
मृगपक्षिनराणां च शोभिना शोभना गिरः ।
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुति. ॥३७॥
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः॥३८॥
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ।
४५५-इत्युक्त दूतशकुन,
स्वप्नानूर्ध्वं प्रचक्षते ॥३९॥
४५६-स्वप्ने मद्य सह प्रेतैर्य. पिबन् कृष्यते शुना ।
स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥४०॥
४५७-रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ।
सोऽस्रपित्तेन
४५८- महिषश्ववराहोष्ट्रगर्दभैः ॥४१

( ४३८ ) ७४१. ( ४३९ ) ७३८. ( ४४० ) ७३७. ( ४४१ ) ७४०. ( ४४२ ) ७४३. ( ४४३ ) ७५७. ( ४४४ ) च. इ. १२, २७, २८. ( ४४५ ) ७५८, ७५९. ( ४४६ ) ७४६, ७४७, ७५०, ७४९. ( ४४७)--( ४४८ ) ७५१ ( ४४९ ) ७५४ ( ४५० ) ७५२, ७५३, ( ४५१ ) च. इ १२.९( ४५२ ) ७६०. ( ४५३ ) ७४४. ( ४५४ ) ७४५. च. इ. १२. ७१-८०. ( ४५६ ) ७६८. ( ४५७ ) ७६९ ( ४५८ ) ७७०.

यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ।
४५९-लता कण्टकिनी वंशस्तालो वा हृदि जायते ४२
यस्य तस्याशु गुल्मेन
४६०- यस्य वह्निमनर्चिषम् ।
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥४३॥
पद्मं स नश्येत्कुष्ठेन
४६१- चण्डालैः सह यः पिबेत् ।
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥४४॥
४६२-उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ।
४६३-अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥४५
४६४-यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्तते मुखे ॥४६॥
४६५-अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन् ।
न जीवति
४६६- अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ४७
४६७-सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ।
४६८-मूर्ध्नि वंशलतादीनां सम्भवो वयसां तथा ॥४८
निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ।
तथा प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनैः ॥४९॥
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ।
श्वभ्रश्मशानशयनं पतनं पांसुभस्मनोः ॥५०॥
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ।
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥५१॥
वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ।
पक्वान्नस्नेहमध्वाशः प्रच्छर्दनविरेचने ॥५२॥
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ।
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ॥५३॥
हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ।
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम् ॥५४॥
पतनं वा विनाशो वा भेदनं पर्वतस्य च ।
कानने रक्तकुसुमे पापकर्मनिवेशने ॥५५॥
चितान्धकारसम्बाधे जननीं यः प्रवेशनम् ।
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ॥५६॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ॥५७
कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ५८
४६९-मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः ।
दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ५९
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ।
४७०-दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥६०
भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ।
४७१-तेष्वाद्या निष्फलाः पञ्च यथास्वप्रकृतिर्दिवा ६१
विस्मृतो दीर्घह्रस्वोऽति
४७२- पूर्वरात्रे चिरात्फलम् ॥६२॥
दृष्टः करोति तुच्छं च गोसर्गे तदहर्महत् ॥६३॥
४७३-निद्रया वाऽनुपहतः प्रतीपैर्वचनैस्तथा ।
४७४-याति पापोऽल्पफलतां दानहोमजपादिभिः ६४
४७५-अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥६५
४७६-देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।
साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ।
कन्याः कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः ।
नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम् ॥६७॥
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥६८॥
शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।
आरोहेद्गोऽश्वयानं च, तरेन्नदहदोदधीन् ॥ ६९॥
पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ।
सम्बाधान्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ७०
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।
यस्य स्यात्स आयुरारोग्यं वित्तं बहु च सोऽश्नुते ७१
४७७-मङ्गलाचारसम्पन्नः परिवारस्तथाऽऽतुरः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः ॥७२॥
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥७३
४७८-इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।
शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥७४॥

अष्टाङ्गहृदयसंहितायां शारीरस्थानं समाप्तम्
( आदितः प्रथसंख्या ५०८ ॥ )



(४५९) ७७१ (४६०) ७७२ (४६१) ७७४ (४६२) ७७५ (४६३) ७७६ (४६४) (४६५) ७७७ (४६६) ७७७ (४६७) ७७८ (४६८) ७८० सु सू २९ ५५, ५८ (४६९) ७८१ (४७०) ७६४ (४७१) ७६५ (४७२) ७६६ (४७३) ७६७ (४७४) ७८६ (४७५) ७८२ (४७६) ७८३ (४७७) ७८७ (४७८) ७८८

# [illegible]

## पंचविंशति तत्त्वानि

२५ पुरुषः

१ अव्यक्तम्

२ महान्

३ अहंकारः

---

वैकारिक (तैजससहाय) — तैजसः — भूतादि (तैजससहाय)

**वैकारिक**
( तैजससहाय )
१४ एकादशेन्द्रियाणि
( पंच बुद्धीन्द्रियाणि          पंच कर्मेन्द्रियाणि
उभयात्मकं मन· )

१ श्रोत्रम् २ त्वक् ३ चक्षु ४ जिव्हा ५ घ्राणम्
विषया —–शब्दः स्पर्श रूपम् रसः गंध
१ वाक् २ हस्त· ३ उपस्थम् ४ पायु· ५ पादः

विषया·—वचनम् आदानम् आनदम विसर्ग· विहरणम्

**तैजसः**

**भूतादि**
( तैजससहाय )
१९ पंच तन्मात्राणि

१ शब्दतन्मात्रम् २ स्पर्शतन्मात्रम् ३ रूपतन्मात्रम् ४ रसतन्मात्रम् ५ गंधतन्मात्रम्
२० आकाश २१ अनिलः २२ अनल २३ जलम् २४ उर्वी

# त्वचा विभागाः

तस्य खल्वेवंप्रवृत्तस्य ( भूतात्माधिष्ठितस्य ) त्वच सु शा
शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव
सन्तानिका सप्त त्वचो भवन्ति ।

| संख्या | नाम | कार्यम् | प्रमाणम् | अधिष्ठानम् |
|---|---|---|---|---|
| प्रथमा | अवभासिनी | सर्ववर्णानवभासयति पञ्चविधा छाया च प्रकाशयति | व्रीहेरष्टादशभागप्रमाणा | सिध्मपद्मकण्टका |
| द्वितीया | लोहिता | | व्रीहेः षोडशभागप्रमाणा | तिलकालकन्यच्छव्यङ्गानि |
| तृतीया | श्वेता | | व्रीहिद्वादशभागप्रमाणा | चर्मदलम् अजगल्ली मशक |
| चतुर्थी | ताम्रा | | व्रीहेरष्टभागप्रमाणा | विविधकिलासकुष्ठानि |
| पञ्चमी | वेदिनी | | व्रीहिपञ्चभागप्रमाणा | कुष्ठविसर्पा |
| षष्ठी | रोहिणी | | व्रीहिप्रमाणा | ग्रन्थि अपची अर्बुदम् श्लीपदम् गलगण्डम् |
| सप्तमी | मांसधरा | | व्रीहिद्वयप्रमाणा | भगन्दर विद्रधि अर्श |

## कला: [ सप्त ] ( सु शा अ ४ ५ २३ )

### धात्वाशयान्तरमर्यादा

| संख्या | नाम | अधिष्ठानम् | कार्यम् |
|---|---|---|---|
| प्रथमा | मांसधरा | मांसम् | यस्यां सिरास्नायुधमनीस्रोतसां प्रतानानि भवन्ति |
| द्वितीया | रक्तधरा | मांसस्य अभ्यन्तरतः | तस्यां शोणितं विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति |
| तृतीया | मेदोधरा | उदरस्थ अण्वस्थिषु | |
| चतुर्थी | श्लेष्मधरा | सर्वसन्धिषु | स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्तते सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथा |
| पञ्चमी | पुरीषधरा | पक्वाशयस्था | या अन्तःकोष्ठे मलमभिविभजते यकृत्समन्तात् कोष्ठं च तथाऽन्त्राणि समाश्रिता ( सा ) उण्डुकस्थं विभजते मलम् । |
| षष्ठी | पित्तधरा | पक्वामाशयमध्यस्थ | या चतुर्विधमन्नपानमुपभुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति [पाकार्थम्] |
| सप्तमी | शुक्रधरा | सर्वशरीरव्यापिनी | यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा शरीरेषु तथा शुक्रं विद्यात् |

# अस्थिसंख्याविवरणम् १

| अस्थिनामानि | संग्रहे | चरके | सुश्रुते | प्रत्यक्षशारीरे |
|---|---|---|---|---|
| नखानि | २० | २० | न गणितानि | न गणितानि |
| अंगुल्यस्थीनि | ६० | ६० | ६० | ५६ |
| अगुलिशलाका | २० | २० | तलास्थीनि २० | २० |
| अंगुलिशलाकाबंधने | ४ | अधिष्ठानानि ४ | कूर्च-गुल्फयो २० | पादकूर्चयु १४ हस्तकूर्चयु १६ =३० |
| अंगुलिशलाकाकूर्चास्थीनि | ८ | | | |
| गुल्फास्थीनि | ४ | ४ | | |
| मणिवधास्थीनि | ४ | २ | २ | |
| पार्ष्ण्यस्थीनि | २ | २ | २ | |
| मणिबंधौ | २ | | | |
| | | जानुकपालिके २ | | — |
| जघास्थीनि | ४ | ४ | ४ | ४ |
| प्रकोष्ठास्थीनि | ४ | अरत्न्यस्थीनि ४ | ४ | ४ |
| जान्वास्थिनी | २ | २ | २ | २ |
| कूर्परौ | २ | | २ | |
| उर्वास्थिनी | २ | २ | २ | २ |
| प्रगण्डास्थिनी | २ | बाह्वस्थिनी २ | २ | २ |
| एवम् शाखास्थीनि | १४० | १२८ | १२० | १२० |
| पर्शुका | २४ | २४ | २४ | २४ |
| पर्शुकास्थालकानि | २४ | २४ | २४ | |
| पर्शुकास्थालकार्बुदानि | २४ | २४ | २४ | |
| पृष्ठ | ३० | ४५ | ३० | कशेरुका २४ |
| उरसि | ८ | १४ | ८ | उर फलकम् १ |
| भगास्थि | १ | १ | १ | |
| त्रिकास्थि | १ | | १ | १ |
| नितंबास्थिनी | २ | श्रोणिफलके २ | २ | २ |
| अक्षकास्थिनी | २ | २ | | २ |
| असास्थिना | २ | | | |
| अंसफलकास्थिनी | २ | २ | २ | २ |
| गुदास्थि | | | १ | १ |
| | | | | कण्ठास्थि १ |
| एवमन्तराधौ- | १२० | १३८ | ११७ | ५८ |

# अस्थिसंख्याविवरणम् २

| अस्थिनामानि | संग्रहे | चरके | सुश्रुते | प्रत्यक्षशारीरे |
|---|---|---|---|---|
| ग्रीवायाम् | १३ | १५ | ९ | पृष्ठवंशे |
| कण्ठनाड्याम् | ४ | — | ४ | गणितानि |
| हनुबन्धने | २ | | २ | ऊर्ध्वहनु |
| दन्ता | ३२ | ३२ | ३ | — |
| दन्तउलूखलानि | ३२ | ३२ | नगणितानि | — |
| नासायाम् | ३ | १ | ३ | २ |
| शिरसि | ६ | शिरःकपालानि ४ | | शिरःकपालानि ४ |
| गण्डास्थिनी | २ | १ | | २ |
| कर्णास्थिनी | २ | — | | — |
| शङ्खास्थिनी | | | | |
| जत्रु | १ | १ | — | — |
| तालु | १ | | १ | २ |
| हन्त्रस्थि | — | १ | — | १ |
| ललाटास्थि | — | १ | — | — |
| | | | | जतुकास्थि १ |
| | | | | चक्रास्थि १ |
| | | | | नासाशुक्तिके |
| | | | | नासामध्यसिरिका १ |
| | | | | अश्रुपाठे २ |
| | | | | ७ |
| एवम् ग्रीवाशिरास्थानि | | | | केवल शिरःस्थानि |
| एवम् शरीरेऽस्थि | १०० | ९४ | ६२ | २२ |
| संख्या— | | ३६० | ३०० | * २०० |
| | ३६० | | | |

* केचन षट्मस्थिकानि कर्णान्तरास्थान्यन्तर्भाव्य २०६ संख्यामस्थ्नाम् ब्रुवते ।

# अस्थिसंधयः २१०

( दशोत्तरे द्वेशते )

| | संधिसंख्यास्थिरा | | चेष्टावन्त |
|---|---|---|---|
| ( १ ) शाखासु = | ६८ | ० | ६८ |
| ( २ ) कोष्ठ = | ५९ | ५६ | ३ |
| ( ३ ) मूर्धनि = | ८३ | ७३ + | १० |
| | २१०= | १२९ | ८१ |

## अस्थिसंधिविस्तारवर्णनम्-

| | | संधिसंख्या |
|---|---|---|
| ( १ ) शाखासु (६८) | एकस्मीन् सक्थि<br>एकैकस्या पादागुल्या ३×४ = १२<br>अंगुष्ठे = २<br>गुल्फे जानुनि वक्षणे = ३<br>१ १ १ १७<br>एव तिसृषु शाखासु १७ × ४ = | ६८ |
| २ ) अन्तरात्रौ (५९) | कटिकपाले = ३<br>पृष्ठवंशे = २४<br>पार्श्वयोः = २४<br>उरसि = ८<br>५९ = | ५९ |
| ३ ) मूर्धनि (८३) | ग्रीवायाम् = ८<br>कंठनाड्याम् = ३<br>हृदयक्लोमनाडीषु<br>कंठनाडी निवद्धा = १८ =<br>दंतमूलेषु = ३२<br>काकलनासामूर्धसु = ३<br>१ १ १<br>गड कर्ण शंख वर्त्म-नेत्र हनुसंधिषु १२<br>२ २ २ २ २ २<br>भ्रुवोरुपारेष्टात् = २<br>शिर कपालेषु = ५<br>८३= | ८३ |
| २१० | | २१० |

# स्नायूनां नवशतानि [ ९०० ]

| | | स्नायुसंख्या |
|---|---|---|
| १ शाखासु- ६०० | एकस्मिन् सक्थ्नि | |
| | एकैकस्यां पादाङ्गुल्याम् × -३० | |
| | तलकूर्चगुल्फेषु १०×३-३० | |
| | जङ्घायाम् -३० | |
| | जानुनि -१० | |
| | ऊरौ -१० | |
| | वङ्क्षणे -४० | |
| | १५०×४-६०० | ६०० |
| २ कोष्ठे- २३० | कट्याम्-६० | |
| | पृष्ठे-८० | |
| | पार्श्वयो -६० | |
| | उरसि-३० | |
| | २३० | ३० |
| ३ ग्रीवा प्रत्यूर्ध्वम्-७० | ग्रीवायाम्-३६ | |
| | मूर्ध्नि-३४ | |
| | ७० | ७० |
| ९०० | | ९०० |

द्विविधा स्नायव

१ बाह्या　　२ आभ्यन्तरा

चतुर्विधाः स्नायवः

| १ प्रतानवत्य | २ वृत्ता | ३ पृथ्व्य | सुषिरा |
|---|---|---|---|
| शाखासु । | सर्वसंधिषु । | पार्श्वोरसि पृष्ठे शिरसि । | आमपक्वाशयान्तेषु, वस्तौ |

स्नायुकर्म

एवमेव शरीरेऽस्मिन् यावन्त सन्धय स्मृता
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नरा ॥

# पेशीनां पञ्चशतानि [ ५०० ]

( मांसावयवसंघातः परस्परं विभक्तः 'पेशी' इत्युच्यते )

## ( १ ) शाखासु ४००

एकस्मिन् सक्थि-

| | | पेशीसंख्या |
|---|---|---|
| एकैकस्यां पादाङ्गुल्याम् | ३× ५=१५ | |
| प्रपदे | –१० | |
| पादोपरि कूर्चसन्निविष्टा | –१० | |
| गुल्फ-तलयो (५ ५) | –१० | |
| गुल्फजान्वन्तरे | –२० | |
| जानुनि | –५ | |
| ऊरौ | –२० | |
| वंक्षणे | –१० | |
| | १००×४ | ४०० |

## ( २ ) कोष्ठे ६६

| | | |
|---|---|---|
| पायौ | –१ | |
| मेढ्रे | –१ | |
| सेवन्याम् | –३ | |
| वृषणयो | –२ | |
| स्फिचो | ५ + ५ =१० | |
| वस्तिशिरसि | –२ | |
| उदरे | –५ | |
| नाभ्याम् | –१ | |
| पृष्ठोर्ध्वसन्निविष्टादीर्घा | ५+ ५=१० | |
| पार्श्वयो | –६ | |
| वक्षसि | –१० | |
| अक्षकांसौ प्रतिसमन्तात् | –७ | |
| हृदयामाशययो | –२ | |
| यकृत्प्लीहोण्डुकेषु | –६ | |
| | ६६ | ६६ |

## (३) ग्रीवां प्रत्यूर्ध्वम् = ३४

| | | पेशीसंख्या |
|---|---|---|
| ग्रीवायाम् | –४ | |
| हन्वो | –८ | |
| काकलकगलयो (१ १) | –२ | |
| तालुनि | –२ | |
| जिह्वायाम् | –१ | |
| ओष्ठयो | –२ | |
| नासायाम् | –२ | |
| नेत्रयो | –२ | |
| गण्डयो | –४ | |
| कर्णयो | –२ | |
| ललाटे | –४ | |
| शिरसि | –१ | ३४ |
| | ३४ | ५०० |

## स्त्रीणां तु विंशतिरधिकाः

| | |
|---|---|
| स्तनयो | ५ × २ = १० |
| अपत्यपथे | –४ |
| गर्भच्छिद्रसंश्रिता | –३ |
| शुक्रार्तवप्रवेशिन्य | –३ |
| | २० |

## पेशीनां स्थानवशात् नानास्वरूपत्वम् [ प्रकाराः ]

| | |
|---|---|
| १ बहला | ७ ह्रस्वा |
| २ पेलवा | ८ दीर्घा |
| ३ स्थूलाः | ९ स्थिरा |
| ४ अणव | १० मृदव |
| ५ पृथव | ११ श्लक्ष्णा |
| ६ वृत्ता | १२ कर्कशा |

सन्ध्यस्थिसिरा-स्नायुप्रच्छादका

**पेशीकर्म।**

सिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥

# सिरासंख्याविवरणम् ( सुश्रुतात् )

[ सिरासंख्या-७०० ]

मूलसिरा-४०

| वातवाहिन्य | पित्तवाहिन्य | कफवाहिन्य | रक्तवाहिन्य |
|---|---|---|---|
| १० | १० | १० | १० |
| ( अरुणा ) | ( उष्णा नीला ) | ( शीता गौर स्थिरा ) | ( नात्युष्णशीतला रोहिण्य ) |
| वातस्थानगता | पित्तस्थानगता | कफस्थानगता | रक्त ( यकृत् प्लीहा ) स्थानगता |
| १७५ | १७५ | १७५ | १७५ |

वातवाहिन्य सिरा १७५

| | | |
|---|---|---|
| एकस्मिन् सक्थ्नि | ×४=१०० | १०० |
| कोष्ठ — | | |
| श्रोण्याम्-गुदमेढ्राश्रित | ८ | |
| पार्श्वयो द्वे द्वे | ४ | |
| पृष्ठ षट् | ६ | ३४ |
| उदरे षट् | ६ | |
| वक्षसि दश | १० | |
| जत्रुण ऊर्ध्वम् | | |
| ग्रीवायाम् | १४ | |
| कर्णयो | ४ | |
| जिह्वायाम् | ९ | ४१ |
| नासिकायाम् | ६ | |
| नेत्रयो | ८ | |
| | | १७५ |

एवम् पित्तकफरक्तवाहिसिरासु बोद्धव्यम्=५००

विशेष पित्तवाहिषु-कर्णयो २ नेत्रयो १०

सिराः सप्तशतानि ( ७०० )

| | व्यधनीया सिरा | अव्यधनीया सिरा | सिरासंख्या |
|---|---|---|---|
| ( १ ) शाखागता | ३८४ | १६ | ४०० |
| ( २ ) अन्तराधिगता | १०४ | ३२ | १३६ |
| ( ३ ) मूर्धगता | ११४ | ५० | १६४ |
| | ६०२ | ९८ | ७०० |

# व्यधनीयाव्यधनीयसिराणां विस्तारवर्णनम्

| सिरासंख्या [ ७०० ] | | अव्यधनीयसिरासंख्या [ ९८ ] | | |
|---|---|---|---|---|
| ( १ ) शाखागता | | जालन्धरा | १ | |
| एकस्या सक्थ्नि शतं सिरा | | ऊर्वीसंज्ञे | २ | |
| १००×४=४०० | | लोहिताक्षसंज्ञा | १ | |
| | | | ४×४= | १६ |
| ( २ ) अन्तराधिगता | | | | |
| श्रोण्याम् [ गुदमेढ्राश्रया ] | ३२ | वंक्षणयो [ विटपयो ] | ४ | |
| | | कटीकतरुणयो | ४ | |
| | | | ८ | |
| पार्श्वगता | १६ | पार्श्वयो तयोरूर्ध्वगाम् एकैका | १ | |
| | | पार्श्वसंधिसंज्ञान् [ मर्मणि ] | १ | |
| | | | २ | |
| पृष्ठगता | २४ | पृष्ठवशमुभयत द्वे द्वे | २ | |
| | | ऊर्ध्वगामिन्यौ | २ | |
| | | | ४ | ३२ |
| उदरगता | २४ | मेढ्रस्योपरि रोमराजीमुभयतो | २ | |
| | | द्वे द्वे | २ | |
| | | | ४ | |
| वक्षागता | ४० | हृदय द्वे | = २ | |
| | १३६ | स्तनमूलयो | = ४ | |
| | | स्तनरोहितयो | = ४ | |
| | | अपस्तम्भयो | = २ | |
| | | अपालापयोः | = २ | |
| | | | १४ | |

## स्रोतोविवरणकोष्ठकम् ।

| क्रम | नाम | मूलम् ( प्रभवस्थानम्) | | दुष्टिहेतु | दुष्टिलक्षणम् | दुष्टस्रोतसि चिकित्सा | विद्धलक्षणम् | विद्ध-चिकित्सा |
|---|---|---|---|---|---|---|---|---|
| १ | प्राणवहानि<br>(सुश्रु) प्राणवहे द्वे | हृदय<br>,, | महास्रोत<br>——<br>रसवाहिन्यो धमन्य | धातुक्षयरौक्ष्यपिपासाक्षुधाया-मवेगधारणादीनि | अतिसृष्ट, प्रतिबद्ध, अल्पाल्प मभीक्ष्ण वा सशब्दशूलमूर्च्छ्वसनम् | यत्किंचित् कफवातघ्नमुष्ण, वातानुलोमन भेषज पानमन्न वा (श्वासवत् क्रिया) | क्रोशन-विनमन-मोहन-भ्रमणवेपनानि मरण वा | प्रत्याख्यायोपचरेत् । उद्धृतशल्य तु क्षतविधानेनोपचरेत् |
| २ | उदकवहानि<br>(सुश्रु.) उदकवहे द्वे | तालु | क्लोम | आम-भय-पानात्यया-अतिशुष्कान्नसेवनतृष्णिग्रहौष्ण्यादीनि- | अतितृष्णा-मुख-जिह्वा-तालवोष्ठ कण्ठशोष कर्णक्ष्वेलनतमोदर्शनेच | वातपित्तघ्नो विधि बाह्यान्त शीता क्रिया गमनशोधनम् (तृष्णोपशमनी क्रिया) | पिपासा, सद्योमरुण-च | |
| ३ | अन्नवहानि<br>(सुश्रु) अन्नवहे द्वे | आमाशय | वामपार्श्वम्<br>——<br>अन्नवाहिन्य धमन्य | अकालेऽहितातिमात्रस्य च भोजन पावकस्य वैगुण्यम् | अनन्नाभिलषणमरोचकाविपाकौ छर्दिश्च | लघन, लघनपाचन, शोधन वा च वि ३ ४८ आमप्रदोषिकी चिकित्सा | आध्मान शूलान्नद्वेषौ, छर्दि पिपसा, आन्ध्यम्, मरण | |
| ४ | रसवहानि<br>(सुश्रु) रसवहे द्वे | हृदयम् | दशधमन्य<br>——<br>रसवाहिन्यो धमन्य | गुरुशीतातिस्निग्धस्याशनम्, अचिन्त्यचिंतन च | अनन्नाभिलापारुचवैरस्यारसज्ञताहृल्लासगौरवतन्द्रासागमर्द ज्वरस्तम पाडुत्वस्रोतोरोध क्लैब्यसादकृशागताग्निनाशादीनि | लघनमौषधम् | शोष क्रोशन-विनमन-मोहनभ्रमण-वेपनानि मरण वा | |
| ५ | रक्तवहानि<br>(सुश्रु) रक्तवहे द्वे | यकृत्<br>——<br>यकृत्प्लीहानौ | प्लीहा<br>——<br>रक्तवाहिन्यो धमन्य | विदाह्यन्नपानानिस्निग्धोष्ण-द्रवाणि आतपानलौ च एतेषा सेवनम् | कुष्ठविसर्पपिडकारक्तपित्तम-सृग्दरगुदमेढ्रास्यपाकप्लीहगुल्म-विद्रधिनीलिकाकामलाव्यग-पिप्लुतिलकालकदद्रुचर्मदलश्वित्र पामाकोठास्रमडलादीनि च. सू अ २८,२४ | विरेक उपवास शोणितस्राव प्रतिमार्गहरणादि | श्यावाङ्गताज्वरदाह पाण्डुताशोणितागमरक्तनेत्रता | |
| ६ | मासवहानि<br>——<br>(सुश्रु) मासवहे द्वे | स्नायु<br>——<br>स्नायुत्वच | त्वक्<br>——<br>रक्तवहा धमन्य | स्थूलानि गुरूणि अभिष्यदीनि च भोज्यानि-भुक्त्वादिवास्वापश्च | अधिमासार्बुद-कील-गलशालूक गुण्डिका-पूतिमासालजी-गण्ड-गण्डमालोपजिह्विका | सशुद्धिर्वमनादिभि शस्त्रक्षाराग्निकर्माणि | श्वयथु मासशोष सिराग्रथय मरण च | |

प्रत्याख्यायोपचरेत् ।
उद्धृतशल्य तु क्षतविधानेनोपचरेत् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ७ मेदोवहानि<br>—<br>(सुश्रु) मेदोवहे २<br>अस्थिवहानि | वृक्कौ<br>—<br>कटी | वपावहनम्<br>(मास)<br>—<br>वृक्कौ | अव्यायामदिवास्वप्नमध्यातिभक्षणवारुण्यातिसेवनानि | मासवहस्रोतोदुष्टिलक्षणानि तथा च चलस्फिगुदरस्तनत्व अयथोपचयोत्साहो, स्वेद अङ्ग गन्ध शिथिलाङ्गता शय्यासन स्वप्नसुख, रति वक्षानत्रजिह्वा श्रवणोपदेह घनाङ्गता केशन खातिवृद्धि शीतप्रियत्व गल तालुशोष आस्ये माधुर्य कर पाददाह मूत्रे पिपीलिकानाम भिधावन च (च सू २१) | गुरु अपतर्पण च मध्वादिवात घ्नानि श्लेष्ममेदोहराणि अन्न पानानि रूक्षोष्णतीक्ष्णबस्तय रूक्षाण्युद्वर्तनानि च | स्वेदागम, स्निग्धा गता तालुशोष, स्थूल शोफता पिपासा च |
| ८ | मेद | जघनम् | व्यायाम अतिसंक्षोभ अस्थ्नामतिविघट्टनम् वातलाना सेवन च | अध्यस्थिद तद तास्थिभेदशूल विवर्णता, केशलोमनखश्मश्रु दोषा | पञ्चकर्माणि विशेषत तिक्तकोपहितक्षारसर्पिबस्तय | |
| ९ मज्जावहानि | अस्थीनि | सन्धय | उत्पेषण, अत्यभिष्यन्द अभिघात प्रपीडनम् विरुद्धसेवन च | पर्वणा रुक्, भ्रम मूर्च्छा, तमसो दर्शन, स्थूलमूलाना पर्वजानाम रुषा दर्शनम् | स्वादुतिक्तकमन्न, काल मात्रया शुद्धि व्यवाय व्यायामश्च | |
| १० शुक्रवहानि<br>(सुश्रु) शुक्रवहे द्वे | वृषणौ<br>—<br>स्तनौ | शेफ<br>—<br>वृषणौ | अकालयोनिगमन शुक्रवेगनिग्रह अतिमैथुन, शस्त्रक्षाराग्निकर्माणि च | क्लैब्य अहर्षण, रोगिणी क्लीबमल्पायु विरूपप्रजोत्पत्तिर्वा गर्भाभाव गर्भपात गर्भस्रावो वा अपत्य परबाधा च | मज्जावहस्रोतोदुष्टिवच्चिकित्सा | क्लीबता चिरात् शुक्रप्रसेक रक्त शुक्रता च |
| ११ (सुश्रु) आर्तववहे द्वे | गर्भाशय | आर्तववाहिन्य धमन्य | | , | (च चि ३० २२८) | वन्ध्यात्व, मैथुनासहिष्णुत्व, आर्तवनाशश्च |
| १२ मूत्रवहानि<br>(सु) मूत्रवहे द्वे | बस्ति | वङ्क्षणौ मेढ्रम् | मूत्रवेगयुक्तस्य उदकभक्ष्यस्त्रीणा सेवनम्, मूत्रनिग्रह, क्षीणत्व कार्श्य च | अतिसृष्टमतिबद्ध कुपितम पाल्प मभीक्ष्ण वा बहल सशूल मूत्रणम | मूत्रकृच्छ्रोक्ता चिकित्सा अ स चि १३ | आनद्धबस्तता मूत्रनिरोध स्तब्धमेढ्रता च |
| १३ पुरीषवहानि<br>(सु) पुरीषवहे द्वे | पक्वाशय | स्थूलम् गुदम् गुल्मम् | वेगविधारणात्यशनाजीर्णाध्यशनानि अग्निदौर्बल्य कार्श्य च | कृच्छ्रेणाल्पाल्प सशूलमतिद्रवम तिग्रथितमति बहु चोपदर्शन | अतिसारग्रहण्युक्ता चिकित्सा अ स चि ११ १२ | आनाहो दुर्गन्धता ग्रथितान्त्रता च |
| १४ स्वेदवहानि | मेद | रोमकूपा | व्यायामातिमतापशीतोष्णाक्रमसेवनानि क्रोधशोकभयानि च | अस्वेदनमतिस्वेदनम् पारुष्यमति श्लक्ष्णताङ्गस्य परिदाहो लोमहर्षश्च | | |

## मर्मविवरणं कोष्ठकम् ।

| क्रमाङ्क | मर्मनाम | मर्म सं० | मांसम | सिराम | स्नायुम | अस्थिम | संधिम | स्थानम् | विशेषः |
|---|---|---|---|---|---|---|---|---|---|
| | ( १ ) सद्यःप्राणहराणि-१९ | | | | | | | | |
| १ | गुदम् | १ | · | | | | | स्थूलान्त्रप्रतिबद्धम् | वातवर्चोनिरसनम् |
| २ | बस्ति ( मूत्राशय ) | १ | | * | | | | कट्या अभ्यन्तरत | अल्पमांसशोणित धनुर्वक्र एकद्वारोऽधोमुख |
| ३ | नाभि | १ | | · | | | | पक्वामाशयमध्ये | |
| ४ | हृदयम् | १ | | * | | | | कोष्ठवक्षसो स्तनयोश्च मध्ये | सत्त्वरजस्तमाधिष्ठानमामाशयद्वारम् |
| ५ | मातृका | ८ | | | | | | ग्रीवायामुभयत | |
| ६ | शंखौ | २ | | | | · | | भ्रुवो पुच्छान्तयोरुपर्यनुकर्ण ललाटे | |
| ७ | शृङ्गाटकानि | ४ | | · | | | | जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि संनिपात | |
| ८ | अधिपति ( रोमावर्त ) | १ | | | | | · | अन्तर्मस्तक सर्वाध्व सिरासन्धीनां संगम | |
| | (२) कालान्तरप्राणहराणि ३० | | | | | | | | |
| ९ | तलहृदयानि | ४ | · | | | | | पादकरतलमध्य मध्यमाङ्गुल्यभिमुखेन | तत्र विद्धस्य रुजया मरणम् |
| १० | क्षिप्राणि | ४ | | | · | | | अङ्गुष्ठाङ्गुल्योर्मध्ये | तत्राऽऽक्षेपकेन मरणम् |
| ११ | इंद्रबस्तय | ४ | · | | | | | पार्ष्णिमणिबन्धप्रभृति जङ्घाप्रपाणिमध्ये | शोणितक्षयान्मरणम् |
| १२ | स्तनमूले | २ | | · | | | | वक्षसि स्तनयोरवस्ताद्द्व्यङ्गुलमुभयत | कफपूर्णकोष्ठस्य मरणम् |
| १३ | स्तनरोहिते | २ | · | | | | | वक्षसि स्तनचूचुकयोरुर्ध्व द्व्यङ्गुलमुभयत | शोणितपूर्णकोष्ठस्य मरणम् |
| १४ | अपस्तम्भौ | २ | | | | | | वक्षसि उभयतो द्वे वातवहे नाड्यौ | शोणितपूर्णकोष्ठतया कास श्वासाभ्यां च मरणम् ( वातपूर्णकोष्ठतया इति सुश्रुत |
| १५ | अपालापौ | २ | | · | | | | असपार्श्वान्तरयोर्मध्ये किंचित् पार्श्वभागे | पूयत्वमापन्नेन रक्तेन मरणम् |
| १६ | कटीकतरुण | २ | | | | · | | पृष्ठवंशस्य द्वयो पार्श्वयो विद्यमाने प्रतिश्रोणिकर्णावस्थिते | शोणितक्षयात्पाण्डुर्विवर्णो हीनरूपश्च म्रियते |
| १७ | नितम्बौ | २ | | | | · | | पृष्ठवंशस्य द्वयो पार्श्वयो श्रोणीकर्णयोरुपरि पार्श्वान्तरप्रतिबद्धौ पक्वाशयस्याच्छादने | अध काये शोफ दौर्बल्यं मरणम् च ( अध काये शोष इति सुश्रुत ) |
| १८ | पार्श्वसन्धी | २ | | · | | | | जघनपार्श्वयोर्मध्ये तिर्यगूर्ध्वं च | शोणितपूर्णकोष्ठतया मरणम् |

## मर्मविवरणकोष्ठकम् ।

| क्रम | मर्मनाम | मर्म सं० | मर्माणा प्रकारा मांस | सिरा | स्नायु | अस्थि | सन्धि | स्थानम् | विशेष |
|---|---|---|---|---|---|---|---|---|---|
| १९ | बृहत्यौ | २ | | | | | | पृष्ठवंशस्योभयत स्तनमूल योरार्जवेन | शोणितातिप्रवृत्तिनिमित्तरुप द्रवैर्मरणम् |
| २० | सीमन्ता | ५ | | | | | * | शिरसि तिर्यगूर्ध्व च कपालानां पञ्चसन्धय | उन्मादभ्रमाचित्तनाशैर्मरणम् ( भ्रमशब्दस्थले भय शब्द ग्राह्य सुश्रुत ) |
| २१ | ( ३ ) विशल्यघ्नानि २ उत्क्षेपौ | २ | | | | | | शङ्खयोरुपरि केशान्ते | सशल्यो जीवति पाकाद्वा स्वय पतित शल्ये जीवति उद्धृतशल्यो न जीवत् |
| २२ | स्थपनी | १ | | | | | | भ्रुवोर्मध्य | उत्क्षेपवत् |
| २३ | ६ विकल्यकराणि ४४ कूर्चा | ४ | | | * | | | क्षिप्रस्योपरि द्व्यङ्गुले उभयत | हस्तपादयो भ्रमणवेपने |
| २४ | जानुनी | २ | | | | | * | जङ्घोर्वोःसन्धाने | खञ्जता |
| २५ | कूर्परौ | २ | | | | | * | प्रपाणिप्रबाहुसङ्गमे | कुणिता |
| २६ | आणय | ४ | | | * | | | जानुकूर्परयोरूर्ध्वमुभयत त्र्यङ्गुलादूर्ध्वमुभयत | शोफाभिवृद्धि स्तब्धसक्थि बाहुता च |
| २७ | ऊर्व्यः | ४ | | | | | | ऊरुप्रबाह्वोर्मध्ये | रक्तक्षयात् सक्थिप्रबाहुशोष |
| २८ | लोहिताक्षाणि | ४ | | * | | | | ऊरुप्रबाह्वोर्मूले वङ्क्षणस्कन्धसन्ध्योरधस्तात् | रक्तक्षयात् पक्षाघाते [ सक्थि( प्रबाहु )शोष इत्याधिक सुश्रुते ] |
| २९ | विटपा | २ | | | * | | | वङ्क्षणवृषणयोर्मध्ये | षाण्ड्यमल्पशुक्रता वा |
| ३० | कक्षाधरौ | | | | | | | कक्षावक्षमध्ये | कुणिता |
| ३१ | कुकुन्दरा | २ | | | | | * | पार्श्वयोर्जघनबहिर्भागे पृष्ठवशमुभयत | स्पर्शाज्ञानमध काये चेष्टानाशश्च |
| ३२ | अंसौ | २ | | | * | | | ग्रीवाबाहुशिरोमध्ये अंसपीठ-स्कन्धबन्धनौ । | स्तब्धबाहुता |
| ३३ | असफलकौ | | | | | * | | पृष्ठवंशमुभयतो बाहुमूलसम्बद्धे | बाहुस्वापशोषौ |
| ३४ | नीले | २ | | * | | | | कण्ठनाडीमुभयत | मूकता स्वरवैकृत्य रसाग्राहिता वा |
| ३५ | मन्ये | २ | | * | | | | कण्ठनाडीमुभयत | नीलावत् |
| ३६ | कृकाटिके | २ | | | | | * | शिरोग्रीवयो सन्धाने | चलमूर्धता |
| ३७ | विधुरे | २ | | | * | | | कर्णपृष्ठयोरध संश्रिते | बाधिर्यम् |
| ३८ | फणौ | २ | | | | | | घ्राणमार्गमुभयत श्रोत्रमार्गप्रतिबद्धौ अभ्यन्तरत | गन्धाज्ञानम् |

मर्मविवरणकोष्ठकम् ।

| क्र. अं. | मर्मनाम | मर्म सं. | मर्माणां प्रकाराः स.प्रा.म. | का.प्रा.म. | वि.म. | वै.म. | रु.म. | स्थानम् | विशेषः |
|---|---|---|---|---|---|---|---|---|---|
| ३९ | अपाङ्गौ | २ | | | | | | भ्रुवौ पुच्छान्तयोरधोऽक्ष्णो-र्बाह्यतः | आन्ध्यम् दृष्ट्युपघातो वा |
| ४० | आवर्तौ | २ | | | | | | भ्रुवोरुपरि निम्नयोः | अपाङ्गवत् रुजाकराणि |
| ४१ | रुजाकराणि ८ कूर्चशिरांसि | ४ | | | | | | गुल्फमणिबन्धसन्ध्योरधः | |
| ४२ | गुल्फौ | २ | | | | | | पादजङ्घयोः सन्धाने | रुक्स्तब्धसक्थिता पण्डता वा |
| ४३ | मणिबन्धौ | २ | | | | | | करप्रपाण्योः सन्धाने | कुणिता |

# धमन्यः चतुर्विंशतिः ( सु. शा. ९. ४--९ )

## ( नाभिप्रभवाः )

**ऊर्ध्वगा १०**

हृदयमभिप्रपन्ना त्रिधा जायन्ते ताः त्रिंशत्

| | |
|---|---|
| वातवहे | २ |
| पित्तवहे | २ |
| कफवहे | २ |
| शोणितवहे | २ |
| रसवहे | २ |
| शब्दवहे | २ |
| रूपवहे | २ |
| रसवहे | २ |
| गंधवहे | २ |
| द्वाभ्यां भाषते | २ |
| द्वाभ्यां घोषं करोति | २ |
| द्वाभ्यां स्वपिति | २ |
| द्वाभ्यां प्रतिबुध्यते | २ |
| द्वे अश्रुवाहिण्यौ | २ |
| द्वे स्तन्यं स्त्रियावहत | २ |
| ते एवं शुक्रं नरस्य स्तनाभ्यां अभिवहत | |
| | ३० |

**अधोगामिन्य १०**

पित्ताशयमभिप्रपन्ना आमपक्वाशयान्तरे च त्रिधा जायन्ते ताः त्रिंशत्

| | |
|---|---|
| वातवहे | २ |
| पित्तवहे | २ |
| कफवहे | २ |
| शोणितवहे | २ |
| रसवहे | २ |
| अन्नवाहिन्यौ [ अंत्राश्रिते ] | २ |
| तोयवहे | २ |
| मूत्रवहे [ मूत्रबस्तिमभिप्रपन्ने ] | २ |
| शुक्रवहे [ शुक्रप्रादुर्भावाय ] | २ |
| शुक्रवहे [ विसर्गाय ] | २ |
| वर्चोनिरसन्यौ [ स्थूलान्त्रप्रतिबद्धे ] | २ |
| द्वे तिर्यग्गाणां धमनीनां स्वेदं अर्पयन्ति | ८ |
| | ३० |

ते एव रक्तमभिवहतो [ विसृजतश्च ] नारीणामार्तवसंज्ञं

**तिर्यग्गा ४**

एकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्येया। तासां मुखानि रोमकूपप्रतिबद्धानि यैः स्वेदं अभिवहन्ति रसं चाभितर्पयन्त्यन्तर्बहिश्च तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि तैरेव च स्पर्शं सुखमसुखं वा गृह्णाति. तास्त्वेताश्चतस्रो धमन्यः सर्वाङ्गगताः

| | | | | | |
|---|---|---|---|---|---|
| २८ | प्रबाहुः | १६ | | | |
| २९ | प्रपाणिः | १५ | | | |
| ३० | ( मणिबन्धः सु.) | | | १२ | |
| | ( प्रकोष्ठः सु. ) | | | १२ | |
| ३१ | पाणिः | १२[१०]च. | | | |
| ३२ | मध्यमाङ्गुलि | ५ | | | |
| ३३ | प्रदेशिनी | ४ १/३ | | | |
| ३४ | अनामिका | ४ १/३ | | | |
| ३५ | कनिष्ठिका | ३ १/३ | | | |
| ३६ | अंगुष्ठः | ३ १/३ | | | |
| ३७ | शिरोधरा<br>( ग्रीवोच्छ्रायः सु. ) | | | २२<br>[२०] सु. | ४<br>[४] सु. |
| ३८ | आननम् | | | २४ | १२ |
| ३९ | आस्यम्<br>( वदनान्तरम् सु. ) | ५<br>[४] सु | | | |
| ४० | ( चिबुकम्<br>( दशनः सु. ) | ४ | [२] सु.<br>[२] सु | | |
| ४१ | ओष्ठः | ४ | | | |
| ४२ | नासा | ४ | | | |
| ४३ | दृष्ट्यन्तरम्<br>( अक्षिमध्य च.) | ४ | [२] सु * | | |
| ४४ | कर्ण. [कर्णमूलम्] सु | ४ | [२] सु | | |
| ४५ | ललाटम् | ४ | | | |
| ४६ | नासापुटम्<br>[ नासापुटभाग सु ] | | १/३<br>[२] सु | | |
| ४७ | नेत्रम् | २ | अङ्गुष्ठोदरम् | | |
| ४८ | कृष्णम्<br>[ तारका ] सु. | | | शुक्लात् १/३<br>द्वियवप्रमाण सु | |
| ४९ | दृष्टिः | | | कृष्णान्नवमांशा<br>मसूरदलमात्रा | |
| ५० | शिर | | | ३२ | ६ |
| ५१ | सर्वशरीरम् | ८४ | | | |

५१ [ आयामविस्तारसमम् ] च. सार्धत्रिहस्त प्रमाणशरीरत्वम्—चक पादाग्रावस्थितस्योर्ध्वबाहो पुरुषस्य दैर्घ्यम् पुरुषायाम सु

**विशेषः (सुश्रुते) [ १ ] जानूपरिष्टाच्च द्वात्रिंशदङ्गुलमेवम् ५०**

मेहननाभ्यन्तरम् १२

नाभिहृदयान्तरम् १२

हृदयग्रीवान्तरम् १२

अंसपीठकूर्परान्तरम् १६

मणिबन्धकूर्परान्तरम् १६

अङ्गुष्ठमूलप्रदेशिन्यन्तरम् ५

श्रवणापाङ्गान्तरम् ५

केशान्तमस्तकान्तरम् ११

मस्तकादवटुकेशान्तः १०

कर्णावट्वन्तरम् १४

स्त्रीश्रोणिः (पुरुषोरःप्रमाणविस्तीर्णा) २४

हस्तः २४

भुजः ३२

(हस्त-)तलम् ६ (आयामः); ४ विस्तारः

# इष्टशरीरलक्षणम्

महान्ति शरीर-दर्शन-वदन-हनु-स्तनाग्र पृष्ठ स्वराणि
उपचितानि—ऊरु-स्फिक्-कटि-वक्षस ग्रीवा-तालुकानि
महदुपचितम्—पाणि-पाद चिबुक-कर्ण-ललाटानि
सूक्ष्माणि—अस्थि-दंत-नखांगुलिपर्व-केशा ।
दीर्घाणि—अंगुलि-सक्थि-बाहूच्छ्वासेक्षित-नेत्र-जिह्वा ।
विस्तीर्णानि—आस्याधरोष्ठ-जिह्वा-ललाट-कर्ण-पीठ-वक्षांसि ।
अल्पानि—मेढ्र-ग्रीवा-केशा ।
स्निग्धानि—त्वक्-कच करज-नयनद शन-स्वना ।
स्थिराणि (दृढानि)—इन्द्रिय-त्वङ्नख-केश-पार्श्वाणि ।
गम्भीराणि—नाभि-सन्धि-स्वरा ।
गूढानि—जत्रु-पृष्ठवंश-दन्तमूलानि ।
रक्तानि—ताल्वोष्ठ-नख-नेत्राणि ।
आताम्राणि—जिह्वा-हस्त-पादतलानि ।
कृष्णानि—केश-भ्रू-नेत्रपक्ष्म-तारका ।
शुक्लानि—[illegible]डल-दशन-चरितानि ।
उन्नतानि—चित्त-स्कन्ध-कन्धरा-ललाटोदर-मुख-नख-पादा ।
नीचै (लघु)-कर्ण-स्तन नासाग्र-चङ्क्रमणानि
घनानि-स्कन्धकन्धरा-दन्तांगुलि-त्वक्-सौहार्दानि ।
तनूनि—नख-मध्य-जिह्वा ।
वृत्तानि—स्फिक्-ग्रीवा-नखानि ।
समानि—पृष्ठ-दन्त-ललाटेक्षितानि ।
अनुपूर्वपूर्ववृत्तौ—ऊरू ।
दक्षिणावर्ता—नाभि ।
प्रकृष्टान्तरौ—स्तनौ, भ्रुवौ च ।
कूर्माकृतय—नखा पादौ च ।
अनुल्बणे—हनू चेपश्च ।
श्लक्ष्णे—तालु जिह्वा च ।
नातिस्थूलकृशौ—ओष्ठौ, देहव वक्ष ।
सस्पन्दम्—हृदय शखौ मन्ये च ।
सोष्माण—तालुपादोदरनि श्वासा ।
पृष्ठतोऽवनतौ रोमशौ च—कर्णौ ।
ईषत्प्रलम्बिन्यौ—भ्रुवौ ।
वलिनं सुश्लिष्टसन्ध्यर्धचन्द्राकृति—ललाटम् ।
आतपत्रोपमम्—शिर ।
नैकमूला मृदव—केशा ।
दृढ गूढं च—सिरास्थिसन्धि ।
प्रकृतियुक्तानि—वातमूत्रपुरीषशुक्राणि हसित रुदितानि चेष्टितानि तथा स्नातानुलिप्तमप-नयतानुपूर्व्या शुध्यन्त् ।

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक-पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृत
दृष्टिप्पण्या च परिष्कृतः
महामहोपाध्यायेन्दुविरचितशशिलेखाख्यव्याख्यया समेतश्च
श्रीमद्वाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः ।

## शारीरस्थानस्य सूत्रसूची

शारीरस्थानस्य

# पारिभाषकशब्दसंग्रहः ।

( अत्र सर्वत्र शारीरसूत्राङ्का एव निर्दिष्टा )